115 तेन व्यधायिषत बाहुवनप्रकोष्ठ-
बद्धासितोरग-फणामणिरागपिङ्गाः ।
संहारकालरभसोत्थित-धूमदण्ड-
कल्माषितानलशिखा इव दिग्विभागाः ॥५१॥

116 तस्याधिनृत्तमनलोल्बणदृष्टिपात-
लक्ष्यीकृतेषु फणिनो मणिबन्धनेषु ।
तत्तापखेद परिवर्तन-लक्ष्यमाण-
पीतोदराः कनककम्बुविलासमापुः ॥५२॥

117 सानन्द-नन्दिकर-ताडित-पुष्कराग्र
चेतोहराङ्किक-पयोधरनादहृष्टः ।
आरब्धरेचकलयः कलयाश्चकार
लीलां स मेचकगलः स्फुटचन्द्रकश्रीः ॥५३॥

118 सावर्तनाभिरभितो ललिताङ्गहार-
शोभा मनोरमपरिक्रमतां वहन्ती ।
चेतो जहार दयिता रसभावहृद्य-
रूपा क्रिया पुररिपोः शुभहस्तदृष्टिः ॥५४॥

119 दोर्दण्डखण्ड-वलनान्यतिसंकटत्व-
मुत्प्रेक्ष्य नो विदधिरे ककुभां पुरस्तात् ।
विन्यस्तमन्दचरणं परिचक्रमे च
भूमण्डलं विदलतीति दयानुबन्धात् ॥५५॥

120 ब्रह्माण्डकर्पर-परिस्फुटनाभिसंधे-
रूर्ध्वं विरच्यत तथा न च दण्डपादः ।
इत्थं न शीतकिरणाभरणस्य नृत्त-
माधारदुर्बलतया सविलासमासीत् ॥५६॥

युगलकम्

121　कुक्षिप्रविष्ट-सुरनिर्झरिणीतरङ्ग-
झांकारतार-निनदैर्नृकपालपङ्क्तिः ।
नृत्तक्रियासु विदधाविव साधुवादं
यस्योत्तमाङ्गभुवि सातिशयास्वमन्दम् ॥५७॥

122　आलोकितस्तुहिनशैलभुवा सहास-
माकृष्य शेखरशशाङ्ककलां स्मरारेः ।
नृत्यन्विदूषकभुवं भुजगारिकेतु-
रग्रे चकार कुटिलोन्नतदण्डकाष्ठम् ॥५८॥

123　एतानि तानि तलपुष्पपुटादिकानि
चेतोहराणि करणानि गणाधिनाथाः ।
इत्यङ्गहारविधयः स्फुटतत्प्रपञ्च-
योगाश्रितस्थितिभृतः स्थिरहस्तमुख्याः ॥५९॥

124　इत्थं त्रिधात्मकरणं गणमण्डलीषु
संक्रान्तिमस्य नयतो सदसि स्थितासु ।
पर्याप्तदर्शनसुखं विनिमेषपक्ष्म-
चक्षुः सहस्रमभवत् स्पृहणीयमैन्द्र्याः ॥६०॥

125　आविष्कृतानुकृति-विभ्रम-नागवक्त्र-
लीलाभ्युदस्त-करकोटिविपात्यमानाः ।
अम्भोभृतः शिशिरशीकर-बिन्दुवृन्द-
विष्यन्दिनोऽभिनयजं क्लममस्य जह्रुः ॥६१॥

126　इत्थं सलीलमभिनेय-विजृम्भमाण-
विस्पष्टभावरसवृत्ति निषेव्य नृत्तम् ।
सार्धं न्यवर्तत गणैर्विभुरुत्तमाङ्ग-
गङ्गातरङ्गकण-संभृतिभिन्नखेदः ॥६२॥

127 शैलात्मजा-विजित-तद्गुणकृष्यमाण-
वृद्धोक्ष-निष्ठुर-खुराहत-मन्दराद्रिः ।
तस्य गलहीकृत-विमुग्ध-किरीटचन्द्र-
खण्डः कदाचन दुरोदरविभ्रमोऽभूत् ॥६३॥

128 इति समयमनैषीत् तत्र तास्ताः सचेष्टा
विदधदचलकन्याविप्रयोगानभिज्ञः ।
सुरपतिभिरभीक्ष्णं रत्नपट्टाङ्घ्रिपीठी-
लुठित-मणिकिरीटाष्टापदैः सेव्यमानः ॥६४॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवे राजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
महाकाव्ये पुरारिताण्डवनृत्यवर्णनो नाम द्वितीयः सर्गः ।

---

## तृतीयः सर्गः

129 अथ स मन्थगिरौ सकलर्तु भि-
निज-निज-प्रसवोज्ज्वलया श्रिया ।
सममसेवि कदाचिदुपाश्रितो
गिरिजयारि-जयानघदोर्द्रु मः ॥१॥

### अथ वसन्तः

130 मधुपराजि-पराजित-मानिनी-
जनमनःसुमनः-सुरभिश्रियम् ।
अभृत वारित-वारिज-विप्लवां
स्फुटित-ताम्रतताम्रवणं जगत् ॥२॥

131 द्रुतमपास्य यमेन निषेविता-
मभिनवोत्कतयेव दिवाकरः ।
दिश-मशिश्रिय-दैडविडाश्रया-
मसुमतां सुमतां विदधत्स्थितिम् ॥३॥

132 स्थितिमधुर्मधुरामवलम्बित-
स्तबकदर्पण-पल्लवपाणयः ।
सतिलकोज्ज्वलपत्रलता गिरे-
रवनयो वनयोगकृतश्रियः ॥४॥

133 कृतकुशेशयिनीरुचयो मधु-
व्यतिकरादभिमन्थरगामिनः ।
मधुलिहो दिवसाश्च वधूर्व्यधुः
परवतीरवतीर्णमनोभवाः ॥५॥

134　　ध्रुवमनेकरसाभ्यवहारतः
　　　　कृतरसायनसंग्रह-सुस्थिता[1] ।
　　मधुलिहामसुखायत संहति-
　　　　र्नृ तिमतीति-मतीत्य कृतस्थितिः ॥६॥

135　　मधुरया परपुष्टगिरा शनैः
　　　　सवयसेव समेत्य मधुश्रिया ।
　　मृगदृशो घटिताः सह वल्लभै-
　　　　र्मु दमधु-र्दमधुर्यमनोहृतः ॥७॥

136　　सुरभितां दधति प्रमदान्वितो
　　　　नव-मधूपहितत्विषि चम्पके ।
　　सुरतहर्म्य इवारचितस्थिति-
　　　　र्नवरताम्बरतां मधुपोऽन्वभूत् ॥८॥

137　　कुसुमिता गिरिकाननभूमयः
　　　　किसलयाधर-खण्डन-लालसैः ।
　　परभृतैः श्रद्धायिषत प्रियाः
　　　　सुमदना मदनादितषट्पदाः ॥९॥

138　　मधुरजृम्भण-विभ्रम-माधवी-
　　　　मधु-रसा-सव-पान-मदोत्कटाः ।
　　मधुलिहो व्यथयन्ति शिलीमुखाः[2]
　　　　स्मरसहा रस-हासवतीः स्त्रियः ॥१०॥

139　　दधदुदञ्चित-पक्ष्मकरालतां
　　　　कुरवकस्तवको मधुबोधितः ।
　　तदसमञ्जसमेष दुनोति य-
　　　　च्छुचितया चितयापि वियोगिनीः ॥११॥

---

१. शोभनमास्थिता Ed. ।　　　२. A D, मलीमसाः ।

140　तदभिधाय तमानय सत्वरं
　　मधुरवादिनि तत्तदिति स्त्रियः ।
　रसनियुक्त-सखीवचनागत-
　　प्रियतमायत-मानमुचोऽभवन् ॥१२॥

141　जरठ-पङ्कज-बीज-समविषो
　　मधु निपातुमभिप्रजगल्भिरे ।
　मधुलिहो विरहे कृतदिङ्मुख-
　　व्यवधयो वधयोगकृतः स्त्रियः ॥१३॥

142　सुरभिमासि कदाचिदनुज्झिता
　　जडतयापि नवालिशतान्विताः ।
　शमवतामपि तामरसाकराः
　　स्थिरतरा रतरागकृतोऽभवन् ॥१४॥

143　[१]सरस - मन्थर - तामरसादर-
　　भ्रमरसज्जंलया नलिनी मधौ ।
　जलधिदेवतया सदृशी श्रियं
　　स्फुटतरागत - रागरुचिर्दधौ ॥१५॥

144　चरमपादविधूतरजः कण-
　　प्रकर - धूसर - पक्षति - संपुटः ।
　न्यविशतानुगिरं कमलाकरान्
　　रसमनाः सम - नादमलिव्रजः ॥१६॥

145　मृगदृशो मलयानिलनिर्धुते
　　सपदि मानरजस्यपि सागसः ।
　न दयितानभिचुक्रुधुरूर्जित-
　　स्मरतया रत - यान - समुत्सुकाः ॥१७॥

---

१. A, B omit 15th and 16th श्लोकs ।

146 तरल-पल्लव-ताम्रकरा बभौ
समधु-मुल्लसित-भ्रमरोत्पलम् ।
[1]कुसुमकोषमिवार्पयितुं लता
विचलिता चलितापहृतस्तरोः ॥१८॥

147 भ्रमरपङ्क्तिनिभेन मनस्विनी-
भ्रुकुटि-बन्ध-इवागलितोऽभवत् ।
कमलभूमिषु मानहृतिस्फुट-
प्रसर-केसर-केतुशते मधौ ॥१९॥

148 शिशिरभासि चिरेण दिनश्रिया
कृतसमागम-विघ्न उपागते ।
कलुषतापि मुखे मधुसङ्गमा-
न्न निशया निशयार्पितमानया ॥२०॥

149 सरभसं शयनीय इवोत्तर-
च्छदकृतत्विषि पीतमधूत्कटैः ।
मधुकरैर्विनिपत्य सजानिभिः
सरसिजोरसि जोषमवस्थितम् ॥२१॥

150 निधुवनावसरे कमितुर्वधू-
र्हृत कुट्टमितेन भृशं मनः ।
तरल-लोचन-निर्जित-विस्फुरत्
कुवलया वलयावलिशोभिनी ॥२२॥

151 स्मरसखस्य पदं सुरभेरिव
स्तनवती दधती सममीमनत् ।
अलक-देश-निवेश-परिस्फुर-
न्नवयवा-वयवाभरणश्रियम् ॥२३॥

---

१. A, C कुसुमकोषमिवानयितुं लता ।

152 विदधतः पथिकक्षपणं प्रति
स्मृतिभुवो निजशक्त्युपबृंहणम् ।
दधुरहार्यतटाः सहकारिता-
मनवमा नव-माधवसङ्गिनः ॥२४॥

153 अलिभिरञ्जन-बिन्दुमलीमसैः
स्मरबलैरिव कङ्कटितैर्वृते[1] ।
मरुति सौरभशालिनि नाभवन्
सरति के रतिकेलिरसाकुलाः ॥२५॥

154 विकचपत्रपुटं सुरभिश्रियः
सरस-विभ्रम-काञ्चनपङ्कजम् ।
व्यधित चम्पकमुन्मदना वधू-
रसकला-सकलालिकुलारवैः ॥२६॥

155 रभसयोपगताः पथिका गृहा-
न्मधुकराञ्जनचूर्णवशीकृताः ।
मुमुदिरे परिरम्भसुखोच्छ्वस-
न्निजवधूजवधूततनुक्लमाः ॥२७॥

156 शिवपुरीमिव शैवलसच्छ्रियं
निविशमानमनर्गलमब्जिनीम् ।
भ्रमरयुग्ममवेक्ष्य न का प्रियै-
र्युवतयो बत योगमुपाययुः ॥२८॥

157 मधुकराञ्जन-बिन्दु-मनोरम-
प्रकट-पत्र-लता-भरणोज्ज्वलाः ।
न सुरभावभवन्नतिमुक्तक-
व्रततयो ततयोगगुणश्रियः ॥२९॥

---

१. A, D कङ्कटिभिर्वृते ।

158 मुख-निलीन-शिलीमुखचूचुकं
कमलिनीमुकुलाम्बुरुहस्तनम् ।
अददरत् कमितेव न रागवान्
दिनकरो न करोत्करकोटिभिः ॥३०॥

159 स्मरमतङ्गज-दानजल-च्छटा-
विपिन-वारिधि-विद्रुमविभ्रमे ।
भ्रमरसंहतिराविरवीभवत्
प्रचपला च पलाशतरौ श्रियम् ॥३१॥

160 अनिमिषाक्षि-विलोकितविभ्रमां
सुरभिमुन्मनसोनवमालिकाम् ।
सुरवधूमिव वीक्ष्य मनोभुवोऽ-
नव-शमा-वशमाशु मधौ ययुः ॥३२॥

161 सुपरिमृष्टकपोलतलस्फुर-
न्मणिकरालित-काञ्चनकुण्डलः ।
न खलु भीरुजनोऽन्वभवन्मधौ
न समदोऽसमदोलनविभ्रमम् ॥३३॥

162 स्मरमदीदिपदूर्ध्वविलोचनं
पुररिपोरिव यच्छिखिपिङ्गलम् ।
स्फुटदशोकमुदीक्ष्य तदुत्सुका
न कमिता कमितारमलं वधूः ॥३४॥

163 विधुत-पक्ष्म-रजः कपिशभ्रमत्
भ्रमरसंहतिमब्जमुखश्रियम् ।
सचटुलातिलकामिव पद्मिनी-
घनरसा न रसार्थहृदा दधौ ॥३५॥ इति वसन्तः

## अथ ग्रीष्मः

164　शुचि-दिना-गति-राप्लुतिशीतलाः
　　सरस-चन्दन-पङ्कभृतोऽकरोत् ।
प्रियसखीव वतंसितमल्लिकाः
　　स्तनवतीर्नवतीव्रतनुक्लमाः ।।३६॥

165　स्पृशति तिग्मरुचौ ककुभः करै-
　　र्दयितयेव विजृम्भिततापया ।
अतनु-मान-परिग्रहया स्थितं
　　रुचिरया चिरयायिदिनश्रिया ॥३७॥

166　सरस-चन्दन-पङ्कविलेपना
　　कृशतनुर्दधती सजलार्द्रताम् ।
प्रियतमारहितापि वियोगिनी
　　स्थितिमितातिमिताक्षरसत्कथा ॥३८॥

167　दिनपतेः क्षितिमुत्तपतः पुन-
　　र्विकट-टङ्क-निकुट्टनघट्टितम् ।
गलति धाम किमेतदिति भ्रमं
　　भृतवतीतवती जनता क्लमम् ॥३९॥

168　रुचिरया गिरिकाननमण्डली
　　श्रियमधत्ततरां स्मरदीपिका ।
सपदि मल्लिकया रचितस्थिति-
　　र्न न घनानघ-नादविहङ्गमा ॥४०॥

169　घटित-षट्पदपेटक-पाटला-
　　पटल-संपुट-पाटन-पाटवम् ।
स्फुटयता नव-बन्धुरसौरभ-
　　प्रसरता सरता मरुता दधे ॥४१॥

170 जितमहं सुकुमारतयानया
प्रति-चिकीर्षु शिरीषमितीक्षितम् ।
अतिरुषेव वियोगवतीं शुचं
सरसहासदलं सदलम्भयत् ॥४२॥

इति ग्रीष्मः

## अथ वर्षाः

171 दधति यत्र पयोधरपङ्क्तयो
गिरिशकण्ठरुचिं जलमन्थराः ।
स कृतपान्थवधूजनवेपथू
रसमयः समयः स्म विजृम्भते ॥४३॥

172 अशमयच्चिरसंभृतमम्भसा
मनसि मानकलङ्कमपि स्त्रियाः ।
अधिधरित्रि पयोधरधोरणी
किमु रजो मुरजोर्जितगर्जिता ॥४४॥

173 भुवन-संवननातनुभस्मभिः
कुटज-केसर-धूलिकणैश्चिताः ।
सुरभयो मरुतः कृतकामिनी-
स्मर-विकार-विकासमवासिषुः ॥४५॥

174 [1]विदधता नव-चन्द्रकलाञ्छिता-
मनुकृत-स्मरवैरितनुं श्रियम् ।
फणिभुजा समये गुरुताण्डव-
व्यसनिना सनिनादघने स्थितम् ॥४६॥

175 प्रकट-जाति-शरीर-रुचो-दधु-
र्वनभुवोऽन्तरमार्गगतां श्रियम् ।
भर-गलन्मकरन्दकणच्छटा-
कवलना-चलनाकुल-षट्पदाः ॥४७॥

---

१. E प्रथयता ।

176　विकट-मेकल-हेमलतास्पदां
　　रुचिरतामचिरार्चिरचूचुरत् ।
सजल-मेघगतासु मनस्विनी-
　　जनतयानतयासकृदीक्षिता ॥४८॥

177　स्मृतिभुवो निजकार्मुक-कर्षण-
　　क्लम-विनिश्वसितैरिव मारुतैः ।
मृगदृशामुपवल्लभमुल्लसत्
　　पुलकतालकताण्डविकैर्दधे ॥४९॥

178　स्फुरित-शक्र-शरासनधारिणा
　　कलयता [1]चतुरङ्गबलश्रियम् ।
क इव तेऽनुकृतोर्जितभूभृता
　　घनचयेन च ये न वशीकृताः ॥५०॥

179　सहरि-गोपकमैक्षत भूतलं
　　व्रजमिवाञ्चितलाङ्गलिकं जनः ।
क्षणरुचां समये समदध्वन-
　　द्घनवरेऽनवरेणुहृति क्षितेः ॥५१॥

180　नभसि केतकचन्द्रदलोज्ज्वले
　　कुटजपुष्पचयेन विकासिना ।
हिमविपाण्डुरुचोडुगणायितं
　　कलयतालयतामतनोः श्रियः ॥५२॥

181　विकिर वारि, विलोलय विद्युतः
　　नभसि गर्ज, तिरस्कुरु दिक्तटान् ।
इति घनो वियुतामकृताचरन्
　　न नवशां नवशान्तिपराङ्मुखीम् ॥५३॥

---

१. चतुरं गवलश्रियं, चतुरङ्गबलश्रियम् इति च छेदः ।

182 अवसरे मलिनोऽप्युपकारकः
क्वचिदितीव रवैस्तरुणान् भ्रमन् ।
स्तनितभीत-पुरन्ध्रिनिगूहन-
स्थितिमतोऽतिमतोऽभिदधौ घनः ॥५४॥

183 नवदलद्वयशोभि घनागम-
श्रिय इवाभरणं श्रवणाश्रयम् ।
व्यधित हारि कदम्बमपि स्त्रियः
स्मरवशा रवशालिशिलीमुखम् ॥५५॥

184 घनतमस्यबलाः समवर्तिना
ददृशिरे विरहग्लपिता न याः ।
जगति ता इव दर्शयितुं तडित्
प्रविरला विरलातनिभाभवत् ॥५६॥

185 स्फुटतरामल-कन्दल-सच्छ्रियः
प्रतिदिशं कमलिन्य इवाबभुः ।
मधुकरैर्विकसद्गिरिमल्लिका-
शबलिता वलिता वनराजयः ॥५७॥

186 कुटज-कन्दल-नीपशिलीन्ध्रजां
सुरभितां दधदम्बुदमारुतः ।
व्यधित रोषरजः प्रसरोज्झिता
न न वधूर्नवधूर्गतमन्मथाः ॥५८॥

187 स्मृतिभुवो विरहे नवमालती-
मुकुलमुद्गर एव वधूर्व्यधात् ।
स्फुटमपश्चिमघातविमूर्च्छिता
[1]मद-रसादर-सारव-षट्पदाः ॥५९॥

---

१. मदरसे मदजनके रसे मधुनि आरवः संभ्रमो येषां तथाविधाः भ्रमराः Ed.

188 हरिरदाम्र इवोत्थितकालिके
ग्लपितमानतमा नभसि स्थिते ।
कमिव नाम न बाहुलतान्तरं
प्रियतमायतमानयदीप्सितम् ॥६०॥ इति वर्षाः

## अथ शरत्

189 स्फुरित-चारुतरापघनश्रिया
हृदय-नन्दन-शोभनवेषया ।
दयितयेव जनः शरदाश्रितो
मुदमलं दमलङ्घनमाचरत् ॥६१॥

190 द्रुतगतिप्रवणास्तुरगा इव
कलमभृतो दिवसा धुतकन्धराः ।
शरदृतोर्दधती श्रियमूहिरे
कमल-कोमल-कोरक-हस्तताम् ॥६२॥

191 पतति वृष्टिरसौ मयि नाधुना
दिनकरातप-सेवनलालसम् ।
इति विकासमगादिव चिन्तय-
च्चिरमुदारमुदा युतमम्बुजम् ॥६३॥

192 जलद-काल-निशापगमे-स्फुरत्
स्फुटतरामल-चन्द्रक-राजितैः ।
रुचिरवाप्यत चित्रशिखण्डिभि-
र्न रुचिरा रुचिराकलुषीकृतैः ॥६४॥

193 गगनमीयिवदाप्लवनक्रिया-
समभिहारमिवाम्बुमुचां जलैः ।
अभृत चन्द्रमसा सममुच्चकै-
रविकलं विकलङ्कतया श्रियम् ॥६५॥

194 भुवनतापविघातविपर्यय-
स्थितिविलक्षतयेव विपाण्डवः ।
शरदि नूनमयुक्छदकाननै-
रसमहासमहासिपताम्बुदाः ॥६६॥

195 असलिला हिम-शीत-महाह्रदाः
शशभृता जनतादवथुच्छिदः ।
कुमुदखण्डगतं मधुपायिना-
मदलयन् दलयन्व्रणमंशवः ॥६७॥

196 स्थगयितुं प्रतिकूलविलोकनाः
कुसुमिताः ककुभो नु वियोगिनाम् ।
कमलधूलिमुदानयताधिक-
स्तवनतो वनतोऽनिलसंहतिः ॥६८॥

197 रुचिरतन्यत निर्झरिणीतटैः
शकुनि-पाद-हतैर्गलिताम्बुभिः ।
नख-पदाङ्क-निरम्बर-सुन्दरी-
जघनजा घनजालतिरस्कृतौ ॥६९॥

198 कुसुममार्तवमुद्वहदुच्छ्वस-
न्मधुकरी रचितस्थिति काननम् ।
न नवमात्तवतां मधुपायिना-
मलसता लसतामभवत् क्वचित् ॥७०॥

199 न खलु बाणगणेन शरासन-
श्रियमृतोर्दधता वितताख्यता ।
प्रियवियुक्तपुरन्ध्रिमनोभिदा
बलवतालवतापकृता दधे ॥७१॥

200 स्थितिरवापि रसक्रिययेव च
स्फुटतरागमशोधिततारया ।
क्षपित-कालिक-चन्द्ररुचोल्लसत्
कमलयामलया शरदः श्रिया ॥७२॥

201 प्रसृत-मन्द-समीर-हति-क्वणत्
कणिश-राशि-शरज्जयघोषणाम् ।
चिरमिव व्यधितावनिमण्डलं
सकलमं कलमन्द्ररवाकुलम् ॥७३॥

202 शरदि हंसगणस्य कुटुम्बिनी-
रसवितीर्णबिसस्य रिरंसया ।
समवगाढुमधौतविनिर्मलं
नवरसोऽवसरोऽतिचिरादभूत् ॥७४॥

203 ललिततोन्मदहंसरवाकुलो
भवनमार्ग इवातिमनोहरः ।
अभृत निष्कुटजां श्रियमुच्चकैः
स समयोऽसमयोगशशिप्रभः ॥७५॥

204 मधुप-शाव-मपाययदुच्चकै-
रविशदारव-मङ्कविवर्तनम् ।
स्तनमिव स्तवकं व्रततिः स्नव-
न्निजरसं जरसं व्यतिपेतुषी ॥७६॥

205 सरभसात्मपुरःसर-सारसी-
रसभराप्लुत-सारस-रासितम् ।
सरस-केसर-तामरसं सरः
सरसतामलिनां रसतां व्यधात् ॥७७॥

206 प्रकट-ताल-लयं शुकवारणे
कलम-गोपवधू-नव-गीतकम् ।
मृगगणस्य मनः श्रुतमाक्षिपत्
प्रचुरसस्य रसस्य जिघत्सतः ॥७८॥

207 स्रुतमदो गिरिकाननवर्त्मनि
प्रतिकरीति करीरकुलाकुले ।
मरुदयुक्छद-सौरभसंभृतः
क्षुभितताभिततानकृतद्विपान् ॥७९॥ इति शरत्

## अथ हेमन्तः

208 हिमऋतौ नलिनी नलिनानन-
श्रियमुदूढ-मनोरमकर्णिकाम् ।
तुहिन-रेणुज-रागम-विप्लवै-
र्विमलिता मलितापकृतं दधौ ॥८०॥

209 अतनु-शीत परिप्लवभीतितः
सहिम-मारुत-वेल्लितया बभौ ।
सपरिरंभ इवोपवनद्रुम-
श्चतुरयातुरया लतया कृतः ॥८१॥

210 मरुति वाति तुषारकणाकुले
कमितुराहितसीत्कृत-विभ्रमा ।
अभिमुखं वलति स्म धुतस्फुरत्-
करतला रतलालसया वधूः ॥८२॥ इति हेमन्तः

## अथ शिशिरः

211 समय एव गुणोऽप्युपयुज्यते
सपरिरम्भरुचिं दयितं स्त्रियाः ।
स्तनयुगोष्मभरः शिशिरागमे
यदकरोदकरोष्णिमगोपतौ ॥८३॥

212 अविरलं घनसारचयैरिव
स्फुटित पुष्प-पराग-कदम्बकैः ।
[1]छुरयति स्म मुखान्यभितो दिशा-
मनवरो नवरोध्रमहीरुहः ॥८४॥

213 स्थगित-दिङ्मुख-हैमरजः प्लुतं
मधुकरः कमलाकरमत्यजत् ।
त्यजति कः प्रकृतोपकृतिं जनः
सपदि नापदि नाम मलीमसः ॥८५॥

214 अपचितेषु परेषु विषण्णता-
मुपगतं कुसुमेष्वहमुत्थितम् ।
तपसि कुन्दमितीव हसत् क्वणत्
मधुकरालि-करालितमभ्यधात् ॥८६॥

215 दयितकण्ठगता अपि विस्फुटन्
नवलवङ्गसमीरहताः स्त्रियः ।
हिमऋतोरुदकण्ठिषतोदया-
दरशनै रशनैर्जघनैश्रिताः ॥८७॥

216 प्रियवियुक्तवधूहृदयैः समं
शिशिरवायुभिरेत्य विकम्पिताः ।
कुसुमिताः फलिनीततयो बभु-
र्मधुरसाधु-रसार्थिमधुव्रताः ॥८८॥

217 अगणित-प्रसवान्तर-विप्लव-
व्यतिकरः स्फुटसौरभमाश्रितः ।
अलिरमंस्त महत्तपसः फलं
नवलवङ्गलवं गहने गिरः ॥८९॥

---

१. A, E किरयति स्म for छुरयति स्म ।

218 धृत-गुरूष्मपयोधरमण्डली-
निबिड-पीडित-वल्लभवक्षसाम् ।
क्षणदया सुदृशां सुरतोत्सव-
क्षमतया मतया रतिरादधे ॥९०॥

219 स्मृतिभुवा हृदि शल्य इवार्पिते
दधति दार्ढ्यमतीव च खादिरे ।
न रजनीरजनीचरयोषितां
जगति का विरहेऽवचखादिरे ॥९१॥

220 मृगदृशामभवत्सह वल्लभै-
रसम-हास-रता लवलीलता ।
श्रियमधान्मधुना कृतषट्पदी-
रसमहा सरता लवली-लता ॥९२॥

221 कोपः क एव दयिते तमिहानयेस्त्व-
मालिं गता नवम-मन्द-रसानुनीति ।
तेनागतेन ललना गमिता प्रसाद-
मालिङ्गिता नवममन्दरसानुनीति ॥९३॥

222 लक्ष्मीं वहन्तं ऋतुभिर्नगमित्युदंशु-
रत्नस्थलीं-विकसितामल-केसरागम् ।
द्रष्टुं प्रभुर्निरगमल्लुलिते सलील-
मीषत् स्पृशन् गिरिसुतामलके सरागम् ॥९४॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवे राजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
महाकाव्ये ऋतुवर्णनो नाम तृतीयः सर्गः ।

———

223 [1]निर्याय खेचरपुरन्ध्रि-रतोपभोग-
योग्यान्तरोपवन-कल्पलतानिकुञ्जम् ।
रोचिष्णु-रत्न-निकुरम्ब-नितम्बभाग-
विश्रान्त-भास्कररथं स तमालुलोके ॥१॥

## मन्दरपर्वतवर्णनम्

224 *अभ्याहताहिमकरः स्फुरदच्छतारा-
-प्रस्तार-तार-किरणोत्कर-दन्तुरश्रीः ।
मूलेन यस्य मथितः सकलोऽम्बुराशि-
रत्युन्नतेन शिखरेण च नाकमार्गः ॥२॥

225 आलोडनाय सुर-दैत्य-गणेन सिन्धो-
रारोपिते सपदि यत्र कवाटपृष्ठम् ।
सस्मार कूर्मपतिरादिवराहपाद-
पीठीकृतस्तदतिभूरिभरस्य नूनम् ॥३॥

226 यस्यातिवेल-परिवर्त-विवर्तमान-
तोयेन्धनानल-शिखावलयेन दध्रे ।
दुग्धाम्बुधौ निरवलम्बन-नाकमार्ग-
विस्रस्त-सूर्य-परिवेष-विडम्बकत्वम् ॥४॥

---

१. A starts with ओं ।

*Ed. अभ्याहताहि-मकरः ।
अभ्याहत अहिमकरः इतिच्छेदः ।

227 बद्धास्पदा-गलित-निर्झर-घर्मवारि
निर्धौत-गण्डवदना कमठस्य पृष्ठे ।
यस्याकुलं सपुरुषायितविभ्रमेव
मूर्तिर्नितम्बवलनेन जहार चेतः ॥५॥

228 यस्याम्बुराशिपयसा सममेव मन्थ-
पीडामिवाभिपतनेन विशङ्क्य गाढम् ।
उद्ग्रीव-कूर्म-विषम-[1]श्वसित-व्युदस्त-
वीचीनि निर्झरजलानि ययुः प्रतीपम् ॥६॥

229 आकृष्टिवेग-विगलद्भुजगेन्द्रभोग-
निर्मोकपट्ट-परिवेष्टतयाम्बुराशेः ।
मन्थव्यथाव्युपशमार्थमिवाशु यस्य
मन्दाकिनी चिरमवेष्टत पादमूले ॥७॥

230 कल्माषयन् सपदि यः पृथुमध्यभाग-
मारादद्दश्यत नभश्चरचक्रवालैः ।
लीलाविवृत्ति-परिमण्डल-दुग्धसिन्धु-
शीतांशु-बिम्ब-परिणाह-मृगावचूलः ॥८॥

231 आभोगिनेत्र-परिवर्तन-विभ्रमेण
मूर्त्या नितम्बवलनाकुलतां वहन्त्या ।
यस्याशनै-रविरलोत्कलिकाकलाप-
पर्याकुलं हृदयमम्बुनिधिर्ममन्थ ॥९॥

232 यस्योर्मिभिर्मथनकाल-विजृम्भिताम्भाः
क्षीरोदसिन्धुरपहस्तितकौस्तुभानि ।
न्यासीचकार सुरदैत्य-हठापहार-
भीत्येव रत्नपटलानि गुहागृहेषु ॥१०॥

---

१. A, B, D श्वसिताम्बुदस्त ।
२. A, D सम्बद्धहेमवलया for सम्बद्धहंसवलया ।

233　रोलम्ब-सङ्कुल कराल-दलारविन्द-
　　[२]संबद्ध-हंसवलयामलसिन्धुतोयम् ।
　सिद्धावरुद्ध-मणिकन्दर-गाढरास-
　　संरम्भघोरहरिणारिरनाभिरामम् ॥११॥　　भाषासमावेशः

234　कल्लोल-भङ्ग-घटित-प्रतिबिम्बचक्र-
　　मैक्षिष्ट यं पृथुनि कूर्मकवाटपृष्ठे ।
　तुङ्गं विभज्य बहुधेव वपुर्भ्रमन्त-
　　मालोडनाय जलधेः सुरदैत्यलोकः ॥१२॥　　युगलकम्

235　यस्मिन् भ्रमत्यनुविवर्तनविप्लवार्त-
　　कूर्माधिराज-करजोद्धृत-रत्नखण्डैः ।
　विच्छायता [१]भुजगराजफणैररुग्ण-
　　पातालतालुतिमिरैस्तरसाधिजग्मे ॥१३॥

236　यस्योन्मिषत्प्रलय-मेघघटासहस्र-
　　विद्युत्कराल-रसनेन तटीजलार्द्राः ।
　व्यात्ताननेन फणिनोदधिमन्थगाढ-
　　खेदादपायिषत कन्दररन्ध्रवाताः ॥१४॥

237　यस्याचकासति तटीभुवि नीलगण्ड-
　　शैला निजच्छविविलुप्त-रविप्रकाशाः ।
　क्षीराम्बुधेर्मथनसंभृतकालकूट-
　　पिण्डा इवोद्धतरङ्गशतव्युदस्ताः ॥१५॥

238　श्च्योतत्सु कन्दरदरीनिकरान् प्रविश्य
　　दुग्धार्णवोत्थित-सुधारससीकरेषु ।
　अम्भोभृतः प्रकटपत्रपुटालवाल-
　　लीलां दधुः कृतपदा यदुपत्यकासु[२] ॥१६॥

---

१. A भुजगराजि for भुजगराज ।　　२. B गिरेरूर्ध्वदेशः (प्रदेशः) ।

239 कुर्वन्ति यस्य कटकेष्वमलेन्द्रनील-
रत्नस्थलान्युदधिमन्थ-विघूर्णितस्य ।
व्यावृत्तिलोलशिखराग्रविपाट्यमान-
तारापथस्खलित-खण्डशतानुकारम् ॥१७॥

240 दंष्ट्राग्रगृहीतगुरुसंभ्रमभूतधात्री
पर्यस्त-कातरतरेक्षणपात-पीतम् ।
यच्छृङ्गनिर्झरजलस्रुतिभिर्दुधाव
पातालपङ्ककलुषं वपुरादिकोलः ॥१८॥

241 स्थूलेन्द्रनीलकटकप्रतिबिम्ब्यमान-
माभाति यस्य शशलक्ष्मनिरुद्धमध्यम् ।
क्षीरोदकूर्मपतिपृष्ठमिवादिकोल-
विन्यस्तपादशबलीकृतमिन्दुबिम्बम् ॥१९॥

242 यस्यान्धकारनिकुरम्बभिदो नितम्ब-
सीम्नि प्रभाप्रकरशारितदिग्विभागान् ।
दृष्ट्वा मणीन् ग्रहविमुग्धमना निशासु
सञ्चार एव दशमाशु करोति बाह्यः ॥२०॥

243 यो वीजयन्निव निषण्णरथं तटेषु
शून्याम्बरभ्रमणखिन्नमशीतरश्मिम् ।
आभाति दूरगतकन्दररन्ध्रवात-
पातभ्रमीवलितवारिदतालवृन्तैः ॥२१॥

244 प्रेङ्खत्करालकुरुविन्दशिलानितम्ब-
बद्धास्पदं क्षणमशीतमरीचिबिम्बम् ।
यस्य त्विषानुमिमते सदृशत्वमाप्त-
मूष्मायमाणमधिसानु कृतप्रतिष्ठाः ॥२२॥

245　　स्पष्टाभिलक्ष्यरमणीयकुशप्रसूति-
　　　रव्याहता मुनिनिकेतकृतास्पदश्रीः ।
　　सानुस्थितिर्जनकराजसुतेव भास्व-
　　　*दङ्कोल्लपल्लवतया श्रियमेति यस्य ॥२३॥

246　　नक्तं विलग्नधवलग्रहचक्रवाल-
　　　दुर्लक्ष्यसौरभभरानुमितात्मरूपैः ।
　　अभ्यानताः कुसुमराशिभिरुच्छ्वसद्भि-
　　　राभान्ति यस्य कटके कलधौतवल्ल्यः ॥२४॥

247　　सङ्क्रीडतो विकटरत्नशिलासु चक्र-
　　　चीत्कारताररवपूरितदिक् पुरस्तात् ।
　　यस्याधिसानु रविकूबरिणो भवन्ति
　　　मोघीकृतस्तव गिरः खलु वालखिल्याः ॥२५॥

248　　आसन्नभानुमसितोपलजालनद्ध-
　　　सोपान-तीर-नलिनीनत-नागयूथम् ।
　　नाकाधिरूढ-नवनील-तमाल-वल्ली-
　　　वद्धान्धकार-गहनातनु-सानुकुञ्जम् ॥२६॥

पिशाचभाषासमावेशः

249　　आवद्धवासुकि-फणागणफूत्कृताग्नि-
　　　ताप-स्फुट-द्विकट-कोटिशिखाश्मकूटम् ।
　　कोदण्डमिन्दुमुकुटः स्वभरक्षमं य-
　　　मादाय दानवपुरीः किल निर्बिभेद ॥२७॥　　युगलकम्

250　　भेत्तुं पुरासुरपुरीः परमेश्वरेण
　　　बाणासनीकृततनुः प्रतनोत्यभिख्याम् ।
　　योऽद्याप्यमुक्त-भुजगाधिपदीर्घभोग-
　　　ज्यावन्ध-वन्धुर इव स्रु तनिर्झराम्भाः ॥२८॥

---

*Ed.　अङ्के उल्लपत् लवतया इति ।
　　अङ्कोल्ल-पल्लवतया इति च छेदः, अङ्कोल्लः वृक्षविशेषः ।

251 चापात्मनः शशिकलाभरणार्धभाग-
लग्नाद्रिजा-कर-सरोज-निविष्टमुष्टेः ।
यस्योग्गोधिपगुणेन घनाभ्यधानि
तत्कम्बुपङ्क्तिरवनद्धतलायमाना ॥२९॥

252 भर्तुः स्थितार्धवपुषि स्फुटगाढबन्ध-
ताम्यत्फणीन्द्र-फणफूत्कृतकातरापि ।
मुष्टिग्रहं गिरिसुता श्लथयन्न यस्य
भावानुरक्तहृदयः कुरुते न किं वा ॥३०॥

253 उत्तापितः प्रलय-काल विजृम्भमाण-
संरंभकर्कश-कृशानुशिखासहस्रैः ।
निर्वापयन्निव नितम्बभुवो विभाति
योऽद्यापि कन्दरमुख-स्खलितैर्मरुद्भिः ॥३१॥

254 विस्पष्ट-दन्तरुचयः पृथुगण्डशैल-
शोभा नितान्तविकटोन्नतवंशकुक्षाः ।
यस्याभिरामगुणतां दधति प्रदेशाः
सज्जाटवीरणहिता गजयूथपाश्च ॥३२॥

255 यस्योत्पतन् प्रतिदिनं सविशेषमेव
नालं विलङ्घयितुमुन्नतिशालिश्टङ्गम् ।
आयासितारुणकरोर्ध्वविकृष्यमाण-
प्रेङ्खत्खलीनमुखवाजिरथो विवस्वान् ॥३३॥

256 यस्याचकासति निरर्गलनीरभार-
भूरिभ्रमद्भ्रमर-मेचक-मेघचक्राः ।
अद्यापि लोकपरिवर्त-दशाकृशानु-
धूमाकुला इव गुहागुहरन्ध्रभागाः ॥३४॥

257　लीला-विलोल-कलकण्ठ-विहङ्गकेलि-
　　कोलाहलाकुल-कुलायकुलामलाङ्के ।
कक्कोल-कन्द-कदली-लवली-लवङ्ग-
　　माला-ललाम-जल-मञ्जुल-कूलकच्छे ॥३५॥

भाषाषट्कसमावेशः

258　यस्मिन् सलील-मसितोन्नत-गण्डशैल-
　　नागः करोति विकराल-करावमर्षात् ।
रक्तातपाभिनव-पल्लव-भङ्गमर्क-
　　बिम्बालवाल-वलयस्य दिनद्रुमस्य ॥३६॥　युगलकम्

259　योऽभ्रङ्कषं शिखर-मुकुट[1]-पद्मराग-
　　रत्नप्रभापटलपाटलितं बिभर्ति ।
सौदामिनी-कपिल-केसर-माल-भारि-
　　नीलाभ्र-पत्र-गगनोत्पल-नालदण्डम् ॥३७॥

260　यस्य प्रभा-विपुल-हारहितैः स्तनाग्रैः
　　श्लाघ्या त्रिभिर्वलिमुखैः कृतमध्यशोभैः ।
लक्ष्मीं पुरन्ध्रिजनता मणिमण्डितैति
　　साधुस्थितिश्च मुनिभिः कटकान्तरेषु ॥३८॥

261　पाश्चात्यभागमवलोकयतां शशाङ्क-
　　बिम्बस्य लक्ष्म मलशून्यतया परीतम् ।
उत्सङ्गसङ्गि मृगतागमिकत्वमेति
　　तुङ्गेषु यस्य शिखरेषु कृतास्पदानाम् ॥३९॥

---

१. A, B शिखरमुच्छिख ।

262 आक्षिप्त-चेतस-मनुत्तर-सानुतर्ष-
सच्चापकान्तरचितस्थिति केसरौघैः ।
उत्तंसनील-नलिनैरिव यो बिभर्ति
लक्ष्मीं नितम्बवलयैः सपलाशचक्रैः ॥४०॥

263 यस्योपान्तगतं निशासु नयतः श्यामाश्मरश्मिच्छटा-
सन्तानैः शिशिरत्विषः पुटकिनीपत्रश्रियं मण्डलम् ।
चक्रे रत्नतटेषु काननभुव-श्चूडाशशाङ्कप्रभा-
सङ्कोच-प्रविलुप्त-पङ्कजवनच्छाया भ्रमन् धूर्जटिः ॥४१॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवे राजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
महाकाव्ये मन्दरवर्णनो नाम चतुर्थः सर्गः ।

---

264 तं प्रीति-विस्तारित-लोचनोऽथ
शैलेश्वरं सादरमीक्षमाणः ।
शैलादिना विस्मितमानसेन
शशाङ्कचूडामणिरित्थमूचे ॥१॥

## मन्दरवैचित्र्यवर्णनम्

265 *एष स-सारस-सारः
तुलितश्रीः [1]पीतिवाससारससारः ।
अनलस-सारस-सारः
प्रकर्षमद्रिः परं ससार ससारः ॥२॥

266 आबद्धताण्डव-शिखण्डि-शिखण्डसार[2]-
चामीकरव्रतति-मण्डप-मण्डनोऽद्रिः[3] ।
पश्यैष भाति कृतमेघरवानुकार-
झाङ्कारताररव-निर्झरझल्लरीकः ॥३॥

---

१. A, C प्रीतत्रास for पीतवास ।

२. A शार for सार । ३. A, B मण्डनाऽद्रिः ।

*Ed. अत्र वाक्यसप्तकम् इत्थम् । यथा—

१. एष गिरिः परं ससार ।

२. एष गिरिः स-सारसः ।

३. एष गिरिः सारः (सह अराभिर्धाराभिर्वर्तते ।

४. एष गिरिः पीतवाससा तुलितश्रीः ।

५. एष गिरिः सारः (सह अरैः शृंगैर्वर्तते) ।

६. एष गिरिः अनलस-सारस-सारः ।

७. एष गिरिः ससारः (लोहरूपः)

967 अस्य क्षितिर्नूतनकानना सा
न काननासादितभङ्गुरश्रीः ।
हरत्यहो वन्धुरता-लताली-
रता लतालीभृति यत्र भृङ्गाः ॥४॥

268 स्फुटमीश ! परैरलङ्घ्यधाम्नो
दधतो दुस्तरवारितामजस्रम् ।
हरिसैन्यसहस्रमर्दभाजः
सुभटस्येव न दृश्यतेऽस्य पृष्ठम् ॥५॥

269 आभात्यसौ गजतया समरेष्ववाप्य
सारं भयानकतमेषु सदानयागः* ।
श्च्योतन्मदार्द्रकटया कटकान्तरेषु
सारम्भया न कतमेषु सदानयागः ॥६॥

270 स्फुरदनिमेषमण्डलरुचा शनकै-
*रसिक-तिलोत्तमावनितयैष गिरिः ।
कटकसरःश्रिया रुचिरया सुमत-
स्त्रिदिवभुवेव नाक्षिपति कस्य मनः ॥७॥

271 भवति नास्य मरुत् प्रलयागमेऽ-
सकलभङ्गुरवेगतयासकृत् ।
[1]किमिव न प्रमदाय [2]वनश्रिया
सकलभं गुरवेऽगतयासकृत् ॥८॥

---

१, A किमिह । २. A, C, D वने श्रिया ।

*Ed. सदा अनया अगः इति छेदः ।

*Ed. रसिक-तिलोत्तमा-वनितया ।

रसिक-तिल-उत्तम-अवनितयेति छेदः ।

272 प्रेयांसमर्कमुपकण्ठगतं विकासि-
[१]पद्माननाः कटकवर्त्मनि पङ्कजिन्यः ।
रागादिवालिविरुतैः स्मरकेलिगर्भ-
मत्रानिशं किमपि कोमलमालपन्ति ॥९॥

273 अत्र स्निग्धं नलद-विदलन-
प्राप्ताभिख्येऽतिजलफलवति ।
अक्ष्णां चक्रे नव-नलिन-वन-
च्छायां धत्ते विभुरमरभुवि ॥१०॥ (समप्रतिलोमानुलोमार्धपादः)

274 इह विबुध । गजस्य-कर्णताल-
स्खलनसमीरविधूत-कुम्भधातोः ।
वहति मदनदी परागरक्ता
रतगृहभित्तिरिव श्रियं परार्घ्याम् ॥११॥

275 अभ्येत्य काननमिदं हरति द्विरेफः
[२]सज्जातप-क्षतितयान-तमांसि चेतः ।
शक्तो निकुञ्ज-गहनेष्वमिहर्तु मर्कः
सज्जात-पक्षति-तया न तमांसि चेतः ॥१२॥

276 स्फुरिताहिराजकटकं
विकट-स्फुट-कुञ्जराजिनममुं रभसात् ।
अभिवीक्ष्य को न रमतेऽ-
भिमतं जगतां भवन्तमिव शैलपतिम् ॥१३॥

---

१. A, C पद्मानन: for पद्मानना: ।
Ed. पद्मानना: is an adjective of पंकजिन्य: which is the Nominative case here.

२. A, B निकुञ्जगहनेष्वभिहर्तुमर्कः ।

277 ताली-लताली-ललितावतंसः
साराव-सारावहिताण्डजोऽसौ ।
मत्तालि-मत्तालि तटं बिभर्ति
सानूपसानूपहितोपशोभः ॥१४॥

278 [1]गण्डोपल-स्खलन-जर्जरिताच्छवीचि-
चक्राणि ताररव-पूरितदिंशि दूरात् ।
[2]अस्यैष निर्झरजलानि पिबत्यमन्द-
मध्वश्रमार्त इव तिग्मकरः कराग्रैः ॥१५॥

279 विटपिततिरमुष्य नानाफलै-
रतिशय-नमिता-सकृच्छ्रीमतः ।
इह रमयति यं न सीमन्तिनी-
*रतिशयनमिता स कृच्छ्रीमतः ॥१६॥

280 सविशेषकान्तमलिकालसच्छवि-
स्फुटपाटलाधरमुदारदर्शनम् ।
तटवर्त्म चारुचिबुकोपशोभितं
श्रियमेत्यमुत्र वदनं च सुभ्रुवः ॥१७॥

281 प्रीतिं न कस्य कुरुते कटके विनिद्र-
तापिञ्छ-मेचकतमान-घनागतारात् ।
ध्यानावनिर्दयिततां शुचितामराति-
तापिच्छमे च कतमा न घना गतारात् ॥१८॥

282 अभिमतजनसङ्गमेऽङ्गनाना-
मनुकृतकोमलसींरिपाणिपद्माः ।
इह मनसिजविभ्रमा विभान्ति
स्फुटतरलाङ्गलताभिरामरूपाः ॥१९॥

---

१. A रत्नोपल for गण्डोपल । २. A पश्यैष for अस्यैष ।
* अतिशयनम् इता इति च्छेदः ।

283　　पश्य नाथ ! सुरसद्मसम्पदां
　　　　*कुं जराजितममुं जपावनैः ।
　　शैलराजमभितो न संकुलं
　　　　*कुञ्ज-राजितममुञ्जपावनैः ॥२०॥

284　　क्षिप्तः प्रियापहृत-पीन-नितम्बबिम्ब-
　　　　वासोऽङ्गना-करतलेन विरुग्णनालः ।
　　रत्नप्रदीप इव नील-सरोज-कर्ण-
　　　　पूरोऽत्र भाति मधुकृन्नवचम्पकाग्रे ॥२१॥

285　　[1]उत्कयन्ती श्रिया मानसारं जनं
　　　　कुर्वती रागिणां मानसारञ्जनम् ।
　　अत्र रौत्युन्मुखी हे मता लीलया
　　　　संहतिः पत्रिणां हेमताली-लया ॥२२॥

286　　‡स्तननाभिमुखश्रियं दधत्यः
　　　　सततं सज्जघनावलम्बि शम्पाः ।
　　अवधूतनिशाकरप्रकाशा
　　　　इह वर्षा इव योषितो विभान्ति ॥२३॥

287　　विभ्रत्यमूस्तटभुवो मणिचक्रमुच्चै-
　　　　रत्रस्नु तास्तव करेणु-करालिताभ्यः ।
　　[2]वल्लीभ्य एव पुरतो मकरन्दवृष्टि-
　　　　रत्र स्नुता स्तबक-रेणु-करालिताभ्यः ॥२४॥

---

*Ed.　जराजितं कुम् इति ।
　　कुञ्जैः राजितम् इति च छेदः ।

१.　A तर्कयन्ती for उत्कयन्ती ।

२.　A, B वल्लीभिरेव पुरतो for वल्लीभ्य एव पुरतो ।

‡Ed.　स्तन-नाभि-मुखश्रियम् ।
　　स्तनन-अभिमुखश्रियम् इति च छेदः ।

288 मा भूत् सत्रासत्वममीषामिति
शङ्कामङ्कस्थानां वत्सलताया दधदद्रिः ।
नाना-रत्ना-भीषु[1]-वितान-व्यपदेशा-
द्रक्षासूत्राणीव दिशत्येष मणीनाम् ॥२५॥

289 वृत्तिः सरोजैर्न विनोदकानां
शिलीमुखौघस्य विनोदकानाम् ।
अत्राश्रितानल्पकुरङ्गनाभि-
†र्दिवौकसां भाति कुरङ्गनाभिः ॥२६॥

290 अस्यानिशं कटकभूमिरनर्गलक्ष-
चक्राकुलस्थितिरधःकृततिग्मरश्मिः ।
आबद्ध-केलि-किलकिञ्चितकामिनीका
धत्तेऽक्षपाकरचितां रजनीव लक्ष्मीम्[2] ॥२७॥

291 व्याधश्रेणी नागकुम्भाग्रभङ्ग-
स्थामासक्ता मुग्धमुक्तासमास्था ।
आभात्यत्र स्त्रीषु चाटुप्रपञ्चे
‡काली व्यक्तारम्भरक्ताव्यलीका ॥२८॥ प्रतिलोमविलोमपादः

292 इह चटुलतया विलोचनौघैः
स्फुटशिति-तारक-विभ्रमै-स्तरुण्यः ।
दधति मधुकरैश्चकोरकान्त-
स्थितिरमणीयतरैः श्रियं नलिन्यः ॥२९॥

---

१. A नानारत्नाभींशु । २. A, B यस्यां for लक्ष्मीम् ।

†Ed. दिवौकसां कुः अङ्गनाभिः भातीत्यन्वयः ।

‡Ed. व्यक्तारम्भरक्ता अव्यलीका काली इत्यन्वयः ।

293　धत्ते विषाणगणमेणकुलं कृतास्थ-
　　मत्रासमानसमदभ्रमरालताभिः ।
प्राप्ता स्थितिश्च मकरन्दभरस्य नून-
　　*मत्रासमान ! समदभ्रमरा लताभिः ॥३०॥

294　इह दृष्टिपथादिवाक्षमा-
　　स्तरवस्त्यक्तुमधोगतान्निधीन् ।
विदधत्युपरि स्थिताः
　　क्षमातल-विस्फारित-नेत्र-चक्रताम् ॥३१॥

295　राजत्युर्वी मणिनिकरैः शुभ्रान्ता
　　भ्रान्तानेकत्रिदशगणा वापीनाम् ।
पीनां लक्ष्मीमिह दधती साध्यानां
　　ध्यानाम्भोभिः क्षतरजसां सेव्यासौ ॥३२॥

296　अस्योल्लसत् कुसुम-वासन-भृङ्गपङ्क्ति-
　　वेणीलतं मणितटेषु रतिं वितन्वन् ।
वल्लीपुरन्ध्रिपटलं घटिताभिराम-
　　वृक्षाधिरूढकमुपैति परामभिख्याम् ॥३३॥

297　रजोभिरस्मिन्नजनता हरन्ती
　　वधू सरागा नवधूसरागा* ।
बिभर्ति नो पुष्पततीर्द्विरेफै-
　　रसाघनालीढरसा वनाली ॥३४॥

298　कुन्तालीभिर्युधमिव गहनामेता[1]-
　　मासाद्योच्चैः शितशरशतसङ्कीर्णाम् ।
अस्मिन् नानाफल-कवलन-संसक्ता
　　वल्गन्त्येते दिशि दिशि हरिसैन्यौघाः ॥३५॥

---

*Ed. अत्र असमानसम् अदभ्रम् अशलताभिः इति छेदः ।

*Ed. नवा धूसराश्च अगाः ।

१: A गहनामाशाद्योच्चैः ।

299 धत्तेऽञ्जिनीमयमलैः शिखरैर्विभिन्द-
न्नाकर्षयोग-मधुरभ्रमणावनिं द्याम् ।
अभ्येत्य चामुमिह पाटलचन्दनार्चां
†नाकर्षयोऽग-मधु-रभ्रमणावनिं द्याम् ॥३६॥

300 स्फुट-कनकावदातरुचयः सहेमताली-
व्यतिकरगण्डकाः प्रतिदिशं हरन्ति नास्मिन् ? ।
न खलु मनः [1]स्तनद्वयसिता नतभ्रुवोऽमूः
शुचिमणिमण्डलीस्तटभुवश्च सन्दधानाः ॥३७॥

301 स्थितिं लभन्तेऽस्य न दूरमुज्झिता
*निरुद्धतापायतयोपरिग्रहाः ।
भजन्ति दिव्याश्च नितम्बकाननं
†निरुद्धतापा यतयोऽपरिग्रहाः ॥३८॥

302 अस्योद्भार-भर-मन्थरमेघचक्र-
गम्भीरतार-रव-नर्तितबर्हिणायाम् ।
सास्यं कला कटक-वर्त्म-विदूरभूमा-
वुद्भिन्नया व्रजति रत्नशलाकयेन्दोः[2] ॥३९॥

303 इह कान्तिरुन्मिषति †कामली लासकृत्
मृगचक्षुषां रचितकामलीला सकृत् ।
क्रियतेतरां रतिरनुत्तरा गायता
मधुपेन चानिशमनुत्त-रागायता ॥४०॥

---

†Ed. नाकर्षयः अभ्रमणी अनिन्द्याम् पाटलचन्दनार्चां अगम् आगत्य अधुः ।

१. A स्तनद्वयं । २. A रत्नशलाकयेव ।

†Ed. काम् अलीलासकृत्, कामलीला सकृत् इति छेदः ।

* निरुद्धत अपायतयाः, निरुद्धतापाः यतयः इति च छेदः ।

304　विकट-कटक-भित्ति भागतुङ्गाः
　　[1]क्षितिभृदसाववकाश-लाभशून्याः ।
　दिश इह शरणागता बिभर्ति
　　त्रिदशवधू-र्मणिकन्दरोदरस्थाः ॥४१॥

305　मन्दाकिनी-जल-रयैर्हरिताभिराम[2]-
　　रम्भोऽजरागम ! स कृत्स्नपितः सहेऽलम् ।
　पश्यैष सानुवन-वर्त्मनि विभ्रदद्रि-
　　रम्भोजरागमसकृत्-स्नपितः सहेलम् ॥४२॥

306　[3]घटितार्जुन-बाण-चक्रवालां
　　जनताश्चर्यकरीं तवेव मायाम् ।
　कटकक्षितिमेष नाथ ! धत्ते
　　घन-सच्छाय-किराततामिरामाम् ॥४३॥

307　रमणीयतया वियोगिनां
　　प्रथमानङ्गविकाररतापदम् ।
　असुमाप्य न कामिनी श्रियां
　　प्रथमानं गवि का रता पदम् ॥४४॥

308　वृत्तस्थुपः प्रविगलन्मकरन्ददान-
　　विन्दोर्मनोभवजयद्विरदस्य पङ्कात् ।
　पद्माकरस्य नवकुड्मलदन्तकोष-
　　लग्नं द्विरेफवलयं तनुतेऽत्र लक्ष्मीम् ॥४५॥

---

१. A क्षितिभृदयंप्र० ।　　२. A, B हरितासुरम्यैं ।

३. अर्जुन-बाणा वृक्षविशेषाः ।

309 इहाङ्गना का प्रमदं प्रियस्य
नाधादसंरंभरसं दधाना ।
चेतः स्थिता कल्पलतानिकुञ्जे
हेलामतारब्धरतामलाहे ॥४६॥ प्रतिलोमानुलोमपादः

310 इह नितम्बभुवो भुवनातिगां
स्थितिमुपेयुषि तारघनत्विषः ।
कुमुदिनीहृदयङ्गमविभ्रमा
दधति चन्द्रमसारचितां श्रियम् ॥४७॥

311 गीतैः प्रनृत्यति पुरस्तव पश्य मिश्र-
केशी करालवलया वलितालसद्भिः ।
दन्तीन्द्र-दान-पयसः पवनैस्तटेऽस्य
के शीकरा लव-लया-वलिता लसद्भिः ॥४८॥

312 व्याप्तवतोऽस्य दीर्घविकटैर्मणिशिखरशतै-
रूर्ध्वमशेषमण्डशकलं सरसिरुहभुवः ।
अस्तमितावकाशघटना कटकभुवमसा-
वम्बरदेवतेव शबरी भजति शिखरिणः ॥४९॥

313 पति सिद्धमिथुनं रसवत्ता-
मत्र [1]सन्मणितमोहनमारात् ।
शृङ्गमस्य निकरं च कराणा-
मत्र [2]सन्मणितमोहनमारात् ॥५०॥

314 निर्धूत दीर्घतर-वालधि-चामरौघ-
लक्ष्मीभृतोऽनुकृतराजगृहाः सलीलम् ।
क्रीडन्ति निर्झरजलैः सकरेणवोऽत्र
नागा नगे सकल-धौत-करालकुम्भाः ॥५१॥

---

१. A मर्मणि for सन्मणि । २. A मर्मणि for सन्मणि ।

315 भ्रमणाकुलाः स्फुरददभ्रमणाविह
ता नभोयुवतयोऽविहताः ।
न लसन्ति संप्रति महानलसं
सकलाः प्रियैर्ललित-हासकलाः ॥५२॥

316 घटित-विकट-सप्तपत्रचक्रे
घनपथवीरुधि नाथ ! सिद्धसाध्याः ।
स्थितिमिह विदधुर्युयुक्षमाणा
मणिशिखरे कटके च सिद्धसाध्याः ॥५३॥

317 नृत्यन् गिरा सुरवधूजन एति तृप्तिं
न ग्राम-राग-मतया सविकारहस्तः ।
श्लाघ्ये चलन्ति न जनाश्च सजानयोऽस्मि-
न्नग्राम-रागमतयासविकारहस्तः ॥५४॥

318 एतत्पश्याम्यद्रिपतेः शृङ्ग-
मुदूढप्रेमोद्रेकैः किंपुरुषैः सेवितमारात् ।
शोभोत्कर्षं धातुभिरव्याहतरूपै-
र्धत्ते वीणावाद्यमिवानेकविधैर्यत् ॥५५॥

319 सरागमयुतायुताप्रतिसमास-
माप्तमदपादपाश्रितखगा ।
स्फुरन्मणिविभा विभाति सकला-
कलापि-रहिता हितास्य च तटी ॥५६॥

320 विभ्राणमर्धविनिमीलिततारकत्व-
मुत्सारितातनुतमः स्फुटदृष्टतत्त्वम् ।
अस्य प्रभातमिव संयमशालि ! पश्य
सानूरुधाम मुनिमण्डलमेतदद्रेः ॥५७॥

321 वार्धकक्षीणशक्तिर्गतौ तापस-
[१]स्तापसीदत्तमालम्बनं याचते ।
अत्र पश्य ! क्षितिं सन्ततानाग्रत-
स्ताप-सीदत्तमालं वनं या च ते ॥५८॥

322 स्थायित्वं क्वचन भजत्यसौ नगेऽस्मिन्-
सञ्चारी भवति पुनः क्वचित्सरागः ।
आरोही क्वचिदवरोह्यपि क्वचिच्च
श्रद्धेयो मृग इव चित्रवर्णशोभः ॥५९॥

323 सिंहः कराहतिभिरत्र न दन्तिनां स्म
[२]हेलालसाभिरपिनड् वलतोऽधिपं कम् ।
नोत्तीर्यते महिषसंहतिभिर्दिवापि
हेऽलालसाभिरपि नड्वलतोऽधिपङ्कम् ॥६०॥

324 गजदर्शमुपाश्रितक्रुधोऽमी
दधते हस्ततलस्थमेव सिंहाः ।
स्फुटमत्र यशस्तदीयकुम्भ-
क्षितिलग्नामलमौक्तिकापदेशात् ॥६१॥

325 मधुलिहामिह पुष्परसैर्लता
[३]नव-सुधा-मधुरा शुशुभेतराम् ।
विविधरत्न-चिता-स्तटसानवो
न-वसुधा-मधु-राशु शुभेतराम् ॥६२॥

---

१. तापसः तापसीदत्तम् आलम्बनं याचते ।
क्षितिः तापसीदत् तमालं वनं या च ते अग्रतः पश्य ॥

२. हे अलालस ! सिंहः आभिः कराहतिभिः वलतः कं अधिपं न अपिनट् ?
हेला-लसाभिः महिषसंहतिभिः अपि नड्वलतः अधिपङ्कम् नोत्तीर्यते ।

३. नव सुधामधुरा इति छेदः ।
आशु शुभेतरां वसुधां न अधुः इत्यन्वयः ।

326  गण्डूषशीधु-समकाल-निपीतनारी-
निःश्वास-सौरभ-विशेषकृताधिवासान् ।
आमोद-सौरभमिवोद्गिरतोऽभिभूत-
पुष्पान्तरानिह विलोकय केसरौघान् ॥६३॥

327  मदच्छटामोदसुगन्धिताशा-
महानिशान्ताविह सन्ति नागाः ।
मिथश्च पुष्पैर्न मनोज्ञलक्ष्मी-
महानिशान्ता विहसन्ति नागाः ॥६४॥

328  मधु-मद-विवशा वधूर्गिरोच्चै-
रसकल-शोभरतान्ततां वहन्त्या ।
इह कपट-पुरन्ध्रिवेषलक्ष्मी-
पतिकर-पद्मभुवेव भाति भर्तुः ॥६५॥

329  व्याप्य स्थितः कनककूटभुवान्तरिक्ष-
माभाति[1] कर्कश-शिलाङ्छितया सदृक्षः ।
प्रीतिं भवानिव दिशञ्जटया नगोऽय-
माभाति कर्क-शशि-लाञ्छितयाऽसदृक्षः ॥६६॥

330  मद-विपाटल कान्तिरसावितः
कल-कलाकुलिताखिलदिङ्मुखाम् ।
अलिततिं यमुनाजलवेणिका-
मिव रसादिह कर्षति लाङ्गली ॥६७॥

---

१. नगोऽयं कर्कश शिलाञ्छितया सदृक्षः आभाति ।
कनककूट-भुवान्तरिक्षं कर्क शशि-लाञ्छितया असदृक्षः आभाति ।

331 अत्र विभाति जलग्रहहेतोः
[१]काञ्चन-वप्र-सरो नमदभ्रे ।
प्रेम्णि वधूं रमयत्यपि कान्तः
कां च नवप्रसरोनमदभ्रे ॥६८॥

332 बिम्बागतामलरुचिग्रहचक्रवाल-
कल्माषित-स्फुरित-नीलशिलानितम्बः ।
आलक्ष्यपाण्डुर[२]पृषट्कचमूरुचर्म-
संवीतमध्य इव नक्तमयं विभाति ॥६९॥

333 असौ घनततीर्न दीर्घनमिता
नदीर्घनर्मिता जहाति नभसः ।
स्थितिर्जलरुहामहासरसिका
महासरसि का विभाव्यत इतः ॥७०॥

334 अदृष्टपूर्वा अपि खेचरौघै-
रलङ्कृताः काञ्चनमेखलाभिः ।
धत्तेऽवरोधप्रमदा इवासा-
वधिष्ठिताः कञ्चुकिभिर्गुहोर्वीः ॥७१॥

335 लक्ष्मीरमुष्य सकलातिशयं सुरेश !
[३]सारा ससार सरसासुरसौरसंसत् ।
धत्तेऽब्जिनीषु च विराजितमग्रवर्त्म-
सा-रास-सारस-रसासु रसौरसं सत् ॥७२॥

---

१. अत्र काञ्चन वप्र सरो नमत् अभ्रे विभाति ।
कान्तः कां च वधूं नवप्रसरोनम् अदभ्रे रमयति ? न काञ्चन ।

२. A पृषत्क for पृषट्क, पृषत्कशब्दो विन्दुवचनः ।

३. अमुष्य सारा लक्ष्मीः ससार । सरसासुरसौरसं सत् सकलातिशयं पुष्णाति ।
सा रास-सारस-रसासु रसौरसं सत् अब्जिनीषु धत्ते ।

336 कुसुमैः कृतवासनः समन्ता-
दपनिद्रत्वमुपेयिवद्भिरस्मिन् ।
श्रुतिमन्त्रगणाभिरामरूपै-
र्न ववौ षट्पदशोभिभिः समीरः ॥७३॥

337 गतिक्रमोऽमुत्र बिभर्ति सुभ्रुवा-
[1]मनुत्तरो मन्थ-रताभिरामताम् ।
श्रियं मृगीभिः प्रतनोति यः परा-[2]
मनुत्त-रोमन्थ-रताभिरामताम् ॥७४॥

338 क्ष्माभर्तुरस्य कटको विकटः सपीलु-
[3]पाल्याकुलः स-हरि-सैन्य-शतावमर्दः ।
लक्ष्मीं विकासघटनां नयति व्युदस्त-
नानाधि-कामचरमागधराजितश्रीः ॥७५॥

339 [4]इह रूढमदोज्झति न भ्रमरी
नवगुच्छ-लतां सरसा मधुना ।
स्थितिबन्धमिवैष रवैश्च सुरा-
नवगुच्छलतां सरसामधुना ॥७६॥

340 अविरल वनमाल एष बिभ्रत्
प्रकटमदारचितां सुरेश ! लक्ष्मीम् ।
हलधर इव तुङ्गताललक्ष्मा
हरति मनः स्फुटलाङ्गलीयशोभः ॥७७॥

---

१. अनुत्तरो गतिक्रमः मन्थरताभिरामतां अत्र बिभर्ति ।
परामनुत्त-रोमन्थ रताभिरामतां श्रियं मृगीभिः प्रतनोति ।

२. A पुरा for परा । ३. A पीलीकुलः ।

४. इह रूढमदा भ्रमरी मधुना सरसा नवगुच्छलतां न उज्झति ।
सरसां रवैश्च उच्छलतां स्थितिं सुरान् अवक् ।

341　व्याप्य स्थितेऽत्र शिखरैर्नवरत्नभाभि-
[1]रभ्रं शरास ! न सहायतयाग्रहस्तैः ।
घ्नद्भिर्मृगान् गजतया विजहे किरातै-
रभ्रं शरासनसहायतयाग्रहस्तैः ॥७८॥

342　अविपन्नरागमुपपन्नसौष्ठवं
स्फुटवर्णपाटवमनेकमार्गगम् ।
श्रुतिपेशलस्वरमिहालिमण्डलं
श्रियमेति गेयमिव जातिसंश्रयम् ॥७९॥

343　[2]व्याप्य यः स्थितिमगात् सरिताढ्यः
सानुनासिकतयाभ्रमरीणाम् ।
शिञ्जितस्य स हरत्ययमद्रिः
सानुना खिकतया-भ्रमरीणाम् ॥८०॥

344　अस्यातितुङ्गशिखरोन्नमितं विदूर-
पाताकुलत्वमिव बिभ्रदधित्यकायाम् ।
प्रेङ्खद्विदूरज-मणि-प्रकर प्रकाश-
व्याजान्नितम्बतटमम्बरमालम्बे ॥८१॥

345　समदः कटकारविन्दिनीनां
[3]नवमं केसररेणुना सनादः ।
रचितं दधदङ्गरागमेको
नवमङ्क्षे सर रेऽणुनासनादः ॥८२॥

---

१. अभ्रं शरास न सहायतया ग्रहस्तैः ।
अभ्रं शरासनसहायतया अग्रहस्तैः ।

२. असिकतया सानुना अभ्रं व्याप्य अरीणां स्थितिमगात् ।
सानुनासिकतया भ्रमरीणां स्थितिमगात् ।

३. नवमं केशररेणुना सनादः ।
नवमङ्क्षे सर रे ! अणुना सनादः ।

346　कथयतीत्थमिवात्र मधुव्रतं
　　श्रुतिमनोरममञ्जुलशिञ्जिता ।
　मधुकरी मकरन्दरसासव-
　　प्रमुदितानुवनं रचितस्थितिः ॥८३॥　　युगलकम्

347　नाक्षिप्यते कुसुमिताभिरधित्यकाभिः
　　[1]कोऽशातकीरसहितामलकीचकाभिः ।
　मुक्ता गिराविह शिलीमुखमण्डलीभिः
　　कोशातकी रसहितामलकी च काभिः ॥८४॥

348　भ्रमतः कमलाकरेषु लग्नो
　　मधुपङ्कार्द्रतया हृदि प्रगाढम् ।
　श्रियमेति शिलीमुखस्य सूक्ष्मः
　　स्मरनाराच इवैष पक्ष्मखण्डः ॥८५॥

349　तट इह निचिते रजोभिरद्रिः
　　[2]कपिशकुनि स्तबकेन हन्तरीतिम् ।
　न हरति दयितो दधत्सुचेतः
　　कपिशकुनिस्तव केन हन्त रीतिम् ॥८६॥

350　अस्याधिसानु परभागमवाप्नुवन्ति
　　श्यामत्विषोऽर्करथमुद्गभुजः सटाभिः ।
　वातावधूत-सुर-पादप-लम्बमान-
　　लम्बीपराग निकुरम्बपिशङ्गिताभिः ॥८७॥

---

१. कोऽशातकीर-सहित-आमलकीचकाभिः अधित्यकाभिः नाक्षिप्यते ?
　शिलीमुखमण्डलीभिः कोशातकी रसहितामलकी च काभिः नाक्षिप्यते ?

२. कपिशकुनि स्तबकेन हन्तः ईतिम् ।
　कपि-शकुनिः तव केन हन्त ! रीतिम् ।

351 [1]सिद्धद्वन्द्वं भातितरां मोहनलीला-
सव्यापारं चारुतम-ग्रावदरीषु ।
[2]पश्यास्योच्चैः पत्रितितिर्नाथ !
विधत्ते सव्यापारं चारुतमग्रा बदरीषु ॥८८॥

352 हरति कटककाननेषु चेतो
घनरुचिचित्रशिखण्डिमण्डलाङ्काम् ।
मधुकर-कुल-नीलदृष्टिहारि-
व्रततिमिरां रजनीमिवैष बिभ्रत् ॥८९॥

353 [3]प्राप्तेऽत्र काननभुवा क्षितिभृत्यभिख्यां
कासार-तामरस भासितया न दभ्रे ।
लक्ष्म्या सुरेश! रचितास्पदया वनेषु
का सारतामरसभासितया नदभ्रे ॥९०॥

354 लक्ष्येष्वन्तर्बाह्यरूपेष्वभीक्ष्णं
कुर्वाणानां संयमं तेषु तेषु ।
व्यक्तं ते ते योगिनामङ्कभाजा-
मुत्पद्यन्तेऽमुष्य सिद्धेर्विशेषाः ॥९१॥

355 येऽध्यवात्सुरपि काञ्चनाचलं
तेऽहितीव्रकटक व्रतीहिते ।
प्रेम बभ्रुरिह सुभ्रुवां स्थिता
हे मतार्य ! चटुचर्यतामहे ॥९२॥ प्रतिलोमानुलोमपादः

---

१. सिद्धद्वन्द्वं सव्यापारं चारुतम-ग्रावदरीषु भातितराम् ।
पत्रिततिः सव्यापारं च आरुतम्-अग्रा बदरीषु भातितराम् ।

२. A, B पश्यस्युच्चैः ।

३. काननभुवा कासार-तामरसभासितया नदभ्रे ।
लक्ष्म्या का (क्षितिः) सारतामर-सभासितया न दभ्रे ।

356 न्यासां शताविरचिताञ्चितमध्यमाल्प-
गान्धारबन्धुर-तरस्थितिमश्ववक्त्रः ।
वैकार-मध्यममदूरगतस्तवैष
नो शुद्धशाडवमिह कलममेति गायन् ॥९३॥

357 अपेत-संभावन-याचितानां
रतिक्रियाभावनया चितानाम् ।
इहेष्टकान्तासमयोजनानां
सर्वर्तु रूपः समयो जनानाम् ॥९४॥

## अथ वसन्तः

358 मधु पिबत्यसितच्छविशारित-
[1]स्तबकरोचिरसौ रभसं गतः ।
कलरवैर्भ्रमरः सुरभेरिव
स्तवकरोऽचिर-सौरभ-सङ्गतः ॥९५॥

359 सीमन्तिनी विकचचम्पकभाभिरत्र
[2]हेऽमाय ! मानपरशुभ्रमरावलीकम् ।
नापेक्षते प्रियतमस्य सरोऽवलोक्य
हेमायमान-पर-शुभ्र-मरावलीकम् ॥९६॥

360 न श्रीरनन ! कथमपि दलिता-
पायासहा समुद्रागारात् ।
उदिताब्जं दधती गलदलिता-
पायासहासमुद्रागारात् ॥९७॥

---

१. स्तबकरोचिः असौ सुरभिः रभसं गतः ।
स्तवकरः अचिरसौरभसंगतः भ्रमरः ।

२. हे अमाय ! मानपरशुं भ्रमरावलीकं सरः विलोक्य सीमन्तिनी अलीकं नापेक्षते ।
हेमायमान पर-शुभ्र-मरी-अलीकम् ।

361 खेदमेति कुसुमान्मधुव्रतः
[1]स्वादुनोऽतिरमणीयतो न वा ।
दूरगा च पथिकस्य मानसं
स्वा दुनोति रमणी यतो नवा ॥९८॥

362 [2]कामिना तिलकमत्र नताङ्ग्या
नालिके रचयतासकलापे ।
प्रीतिरुत्सुकयतीह च फुल्ला-
न्नालिकेर-चयता सकलापे ॥९९॥

363 इह मेराविव सुखदा मही
[3]न कामानवास नाकीशानाम् ।
चलति च रसैः फलाना-
महीनकामा न वासना कीशानाम् ॥१००॥

364 सौहित्यमत्र कुरुते मकरन्दवर्षै-
[4]रुच्चा पलाशकलिका रणतामलीनाम् ।
क्रीडत्यसौ हरिचमूश्च जलैर्दधद्भि-
रुच्चापला शकलिकारणतामलीनाम् ॥१०१॥

365 [1]पुष्पामोदैस्तरुततिरत्र घ्राणं
नानाकान्तैरलिपत नव्यापारैः ।
आभात्याराद्विनमितशाखा
श्रीमन्नानाकान्तै-रलि-पतन-व्यापारैः ॥१०२॥

---

१. स्वादुनोऽतिरमणीयतो न वा खेदमेति ।
स्वा रमणी दुनोति, यतो न वा ।

२. अलिके तिलकं रचयता कामिना प्रीतिः असकला नापे ।
नालिकेर-चयता सकलापे प्रीतिरुत्सुकयति ।

३. सुखदा मही नाकीशानाम् कामान् नावास न चिक्षेप ।
अहीनकामा न वासना कीशानाम् ।

४. उच्चा पलाशकलिका रणतामलीनां सौहित्यमत्र कुरुते ।
असौ हरिचमूः उच्चापला, शकलिकारणताम् अलीनाम् क्रीडति ।

366　अध्यासतेऽमुं कुसुमाग्रलग्न-
　　[2]द्विरेफसालं विषहेतयोऽगम् ।
　　का विप्रयुक्तात्र मधुश्रियारात्
　　द्विरेफसालं विषहेत योगम् ॥१०३॥

367　वल्लीभिरस्य कुसुमैर्न दधे वसन्त-
　　[3]मासे वितानतलतासुसमानताभिः ।
　　स्त्रीभिस्तटावनिषु नाथ ! जहे च नून-
　　मासेविता नतलतासु समानताभिः ॥१०४॥

368　श्रियमिह काननमेति च-
　　[4]रुद्धतरणि-ताप-योग-तामसमेकाम् ।
　　त्यजति [5]कमलालिमलितति-
　　रुद्धतरणिता पयोगतामसमे काम् ॥१०५॥

369　कृतास्पदा न शकुनसंहति-र्गिरा-
　　विहारवान्वित-रति-रङ्कुरेषवः ।
　　स्फुरन्त्यमी स्मरणभुवो मनःप्रियं
　　विहारवान्विततरति रङ्कुरेष वः ॥१०६॥

---

१. नव्या तरुततिः अपारैः नानाकान्तैः पुष्पामोदैः घ्राणम् अलिपत ।
श्रीमन् ! आनाकान्तैरलिपतनव्यपारैः विनिर्मितशाखा तरुततिः आभाति ।

२. द्विरेफसालं विषहेत योगम् ।
द्विरेफसालं विषहेतयोऽगम् ।

३. मासे वितान-तलतासु समानताभिः ।
आसेविता नतलतासु समानता आभिः ।

४. रुद्ध तरणि-ताप-योगतामसम् वनम् एकां श्रियम् इह एति ।
अलिततिः उद्धत रणित अपयोगताम् असमे का त्यजति ?

५. A reads कमलामलितति ।

370 प्रेम्णालिभिर्द्रुमलतागहनेभ्य इत्थ-
मध्यासितेन नवसंतमसावनिभ्यः ।
पुष्पोत्करेण पतता दधदाचकास्ति
मध्यासितेन न वसन्तमसावनिभ्यः ॥१०७॥ इति वसन्तः

## अथ ग्रीष्मः

371 विपिनेषु पीतकमलोदरस्रव-
न्मधुराशिरीषदलसं गतोषिता ।
भ्रमरावली [1]किमिह नाम नाक्षिपे-
न्मधुरा शिरीष-दल-सङ्गतोषिता ॥१०८॥

372 दिशति नात्र रतिं प्रति मल्लिका
विशदमानसदा मदनाय कम् ।
रतिगृहं च विभाति सचन्दनं
विशदमानसदामदनायकम् ॥१०९॥

373 इह रमणी कलकोमलरासा
मदनातुरा तु नादमसारा ।
का रतिविभ्रमविरति याता
रस-हाव-भाव-हासरता या ॥११०॥ प्रतिलोमानुलोमपादः

374 मन्दारकाननतलेष्विह का न मान-
हीना मता रमणयोगमिता महेलाः ।
लक्ष्म्या तटाश्च कमिवातिशयं[2] न दार्ढ्यं
हीनाम तारमणयो गमिता महेलाः ॥१११॥

---

१. कमिह for किमिह ।

२. A, B, C किमिवातिशयेन ।

375　　तरङ्गिणी ग्रावशतेषु यान्ती
　　　　रसज्जला भङ्गमिता चकास्ति ।
　　वयस्ययेष्टं भवने नतभ्रू-
　　　　रसज्जलाभं गमिता च कास्ति ॥११२॥

376　　स्थितमेत्य नितम्बभुवः सस्नेहं
　　　　सैरिभैर्नवा रसद्दश्ये ।
　　इह सरसीषु न मुदितैः
　　　　सस्ने हंसैरिभैर्नवा रसद्दश्ये ॥११३॥　　इति ग्रीष्मः

## अथ प्रावृट्

377　　स्तवकाश्च जहात्यलिर्विनिद्रा-
　　　　नभितस्तानसमांस लाङ्गलीनाम् ।
　　तडितं दधदम्बुदोऽप्यमुष्मि-
　　　　न्नभितस्तान स मांसलाङ्गलीनाम् ॥११४॥

378　　रत्नांशुभिः सकलयन्वपुषोऽर्धमिन्दो-
　　　　रभ्यर्णवर्ति समयू रतया श्रितोऽयम् ।
　　नाकाङ्गनाजनतया दधदाहितश्री-
　　　　रभ्यर्णवर्ति स-मयूरतया श्रितोयम् ॥११५॥

379　　अमुना हृतमनसाद्रुतमधि-
　　　　कैलासं च येन सुरसहितेन ।
　　देवेन न कृतमास्पदम-
　　　　धिकैलासश्रयेन सुरसहितेन ॥११६॥

380　　मन्मथं विरहिभूरुहां दिशन्
　　　　प्रावृषीष्टमकरं दवानलम् ।
　　लाङ्गलीनवरजोऽम्बरं भवान्
　　　　प्रावृषीष्ट मकरन्दवानलम् ॥११७॥

381 इति दधदिव नालिमाह्व घोषै-
रसकृदनुत्तरतां विशङ्कटंकः ।
स्त्रियमिह सुखयन् घनोऽवियोगे
रसकृदनुत्तरतां विशङ्कटङ्कः ॥११८॥ युगलकम्

382 बिभ्रत्तटीः श्रियमसावुपयाति पुष्पै-
रामोदशालिभिरपां सुलभावताराः ।
[1]रत्नत्विषश्च ककुभः स्थगयन् सराग-
रामो दशालिभिरपांसुलभावताराः ॥११९॥

383 सुभ्रूरत्र प्रियतमलाभे नूनं
स्थानादानानघ ! घननादानास्था ।
अस्योर्वी मे जनयति तोषं
नानासाध्यापाता पिक-कपि-तापाध्यासा ॥१२०॥
प्रतिलोमानुलोयामदः

384 वियोगतोऽनुक्रियतेऽश्रुशीकरै-
रनुत्तमानस्तनितम्बभारया ।
स्त्रियात्र सा मेघघटा नता जलै-
रनुत्तमान-स्तनितं-बभार या ॥१२१॥

385 सन्दर्शनं व्यथयतीह जनं विमुक्त-
मभ्रान्तरागमलिपन्नगमण्डलीनाम् ।
रत्नांशुसंहतिरमुं दधतं च मूर्ति-
मभ्रान्तरागमलिपन्नग-मण्डलीनाम् ॥१२२॥

386 प्रावृषा क इह बृंहितमूर्मिमतीपयः
सन्ततार सिकतोपलसज्जनतापदम् ।
केतकी-विपिन-मुत्कलिकास्तनुतेतरां
सन्तता रसिकतोपलसज्जनतापदम् ॥१२३॥

१. A रत्नत्विषा च ।

387　क्ष्माभृदसौ बिभर्ति कटकश्रियममृतमुचा
　　हेममसार-सारव-सुधा-मधिकमलिनताम् ।
श्रोत्रपथं नयन्ति मधुरां मुदमिह दधतो
　　हेऽमम ! सारसा-रवसुधामधिकमलिनि ताम् ॥१२४॥
इति प्रावृट्

## अथ शरत्

388　वीक्ष्य प्रसीदति वधूर्दयितेऽपि माना-
　　म्नानाविला सरसि कौमुदमत्र सन्तौ ।
कान्तौ कुलं कलयतश्च रतावमन्दं
　　नाना-विलास-रसिकौ मुदमत्र सन्तौ ॥१२५॥

389　यदपि रहयितुं मयूरकेका-
　　रवशमनी यतते न बन्धुरागम् ।
शरदिह कुसुमैर्वनं नतभ्रू-
　　रवश-मनीयत तेन बन्धुरागम् ॥१२६॥

390　स्थितमलियोषिता स्मररसं जनस्य विदधानया मधुलिह्वा
　　नव-तत-मालती-रसिकता-मद भ्रमितया सहारवपुषा ।
सशिशिरमारुतात्र च सरिन्निषेव्यत इयं रतौ न सुदृशा
　　न बत तमालतीरसिकतामदभ्रमितया सहारवपुषा ॥१२७॥

391　ख्यातीरमुष्य सरसी तटवर्त्मपीन-
　　मीना तितंसति सतीरवनावृतस्य ।
न्यूनं न कश्चिदधिको मुनिकानने च
　　मीनाति तं सति स तीरवनावृतस्य ॥१२८॥　　इति शरत्

## अथ हेमन्तः

392 क इह न रतिकेलिसम्पदा-
मरमतनुतरागमोहितः ।
स्थितिमधिकमवाप्य हैमनी-
मरमत नुत रागमोहितः ॥१२९॥

393 श्रियमेति काननतलं विदल-
त्कलिकान्तरागमलवङ्गतया ।
इह सेवितं मृगदृशा विदल-
त्कलि कान्तरागमलवं गतया ॥१३०॥

394 लक्ष्मीः सुरेश ! कलधौतगिरेस्तटानि
सानूनितानि हसति स्म रसादवद्भिः ।
प्रेमामरैर्युवतिषु श्रितधाम्नि वीक्ष्य
सानूनितानिह सति स्मर-सादवद्भिः ॥१३१॥ इति हेमन्तः

395 घ्राणालेपं विदधति कुन्दस्यास्मिन्
आमोदास्ते धवलयतः कान्तारम् ।
बद्धौत्सुक्या नवसुरते हृष्टा का
नामोदास्ते धवलयतः कान्तारम् ॥१३२॥

396 कुन्दं दधत्यवनिरस्य हरत्यपीश !
रुद्धामरा शिशिरसारमणीयसीतः ।
विभ्रद्विभाति मणिमण्डलमेष चाद्रि-
रुद्धामराशि शिरसा रमणीयसीतः ॥१३३॥

397 अविस्रसारे समदक्षयज्ञ-
नाशिञ्जपादानघनाकरामे ।
अविस्रसारेऽसमदक्षयज्ञ-
नाशिन् ! जपादानघनाकरा मे ॥१३४॥ समुद्गकम्

398　*शिशि-रर-सस-रारा-विवि-मर्म-रारा-
　　दद-मम-तत-रारा-जिजि-त्सत्स-रारा ।
　सस-वव-सुसु-रारा-मम-ध्वध्व-रारा
　　तत-लल-दद-रारा-सस-त्वत्व-रारा ॥१३५॥　　आवलिः

399　आत्मानमीश ! दधती वनभूः प्रियत्व-
　　मायाति कुन्दमकरन्दवती व्रतापे ।
　प्राप्तं च सौष्ठवमिहात्मवतां विधूत-
　　मायातिकुं दमकरं दवतीव्रतापे ॥१३६॥　　तिलकम्

400　राजति तटीयमभिहत-
　　दानवरासातिपातिसारावनदा ।
　गजता च यूथमविरतदानवरा
　　सातिपाति सारा वनदा ॥१३७॥

प्रतिलोमविलोमपादः पादयमकञ्च

---

Ed. *अत्र वाक्याष्टकमित्थं वर्तते ।

१. शिशिर-रससरा = शीतलजलानि सरांसि यत्र ।

२. राविविः = राविणः सशब्दाः पक्षिणो यत्र ।

३. मर्मरा = शुष्कपर्णध्वनिर्विद्यते यत्र ।

४. आरात् अदममततरा = आरात् दूरत एव अदमानां अवशिनां मततरा अत्यन्तरुचिरा ।

५. राजिजित् = राजिभिर्जयति उत्कर्षेण वर्तते ।

६. सत् सरारा = सतां सरः समूहस्तस्य आरः आगमनम् यस्याम् ।

७. स-सव-वसु-सुराराम-मध्वध्वरारा = सह सवेन यज्ञेन स्नानेन वा वसुना धनेन तेजसा वा वर्तन्ते ये सुरास्तेषामारामो विहरणं तत्र मधुर्वसन्तायमानोऽध्वरः क्रतुमाराति गृह्णाति ।

८. ततललददरारासससत्वत्वरारा = ततं ललन्तः क्रीडन्तः अदरा-रासाः निर्भयध्वनयो ये सत्वाः तेषां क्रीडासु चातुर्यं राति ददाति ।

401 न तरुततिरवत्यसावमुष्मि-
न्न वशफलाघवतः सदाननागे ।
भ्रमति च पुलिनेषु हंसपाली
नवशफलाघवतः सदाननागे ॥१३८॥

402 भर्तुर्विसारि शिखरं त्रिदिवान्न किञ्चि-
दूना परागकपिशाखिलतापि कालीः ।
चूतद्रुमैर्मदयति क्षितिरस्य भङ्ग-
दूनापरागकपिशाखिलता पिकालीः ॥१३९॥

403 वारिशालिनासवातिवासनालिशारिवा
सारभा-विनीलिमाभ्रमालिनी विभा रसा ।
सालतालकाननामुना न का लतालसा
राजिता श्रिया परा दुरापया श्रिताजिरा ॥१४०॥

प्रतिलोमानुलोमचतुष्पादः

404 *सवपुषमुत्करहाटकमक्षतति-
निशासनागतालीसवनम् ।
समदनवशकलितातनुरस-
धवनागोत्करं जराजितसत्वम् ॥१४१॥

---

Ed. *अत्र वाक्यपञ्चकं एवं वर्तते । यथा—

१. सवपुषम् = सवाः ऋतवः तान् पलाशादितदङ्गजनकत्वेन पुष्णाति यस्तादृशम् ।

२. उत्करहाटकम् = उत्करम् उन्मयूखं हाटकं सुवर्णं यत्र ।

३. अक्षततिनिशासनागतालीसवनम् = अक्षततिर्विभीतकप्रचयः, निशा हरिद्रा, असनाभिधा अगास्तरवः, ताल्यः तरुविशेषाः अस्य सर्वस्य सवनम् उत्पादकम् ।

४. समदनवशकलितातनुरसधवनागोत्करम् = शकलिता भग्नाः, अतनुरसाः प्रभूतनिष्यन्दाः धवास्तरुभेदा येन तादृशः समदो नवश्च नागोत्करो यत्र ।

५. जराजितसत्त्वम् = जरया चाजिता सत्त्वाः प्राणिनो यत्र ।

405　†सवपुषमुत्करहाटकमक्षतति-
निशासनागतालीसवनम् ।
समदनवशकलितातनुरसधव-
नागोत्करञ्जराजितसत्त्वम् ॥१४२॥　　महायमकम्

406　आत्मानमीश ! स बिभर्ति विवर्धमान-
दामोदराजितमयन्त्रितयानवद्यम् ।
गीर्वाणचक्रमधितिष्ठति सादरं स-
दामोदराजितमयं त्रितयानवद्यम् ॥१४३॥　　विशेषकम्

407　मधुकरशवलानां दूरमुत्कण्ठमाना
स्तबकितबकुलेभ्यः साधुना काननानाम् ।
स्पृहयति हतचेता विप्रयोगे नतभ्रू-
स्तव कितव ! कुलेभ्यः साधु नाकाननानाम् ॥१४४॥

408　इति वदति सखी नतैत्य कान्तं
सकलभराशिरसाक्षतालसालम् ।
गिरिममुमवलोक्य पीवरोर्वाः
सकलभरा शिरसा क्षतालसालम् ॥१४५॥　　युगलकम्

409　एते निमज्ज्य सलिले करिणः कराग्रा-
नुत्तम्भयन्ति रयतो हर हस्तवेष्टान् ।
वीक्ष्य प्रसीदति मनोऽत्र समाधिभाजो-
ऽनुत्तं भयं तिरयतोऽहरहस्तवेष्टान् ॥१४६॥

---

Ed. अत्र वाक्यचतुष्टयं यथा—

† १. सवपुषम् = सह वपुषा देवरूपत्वात् जङ्गमेनाकारेणापि वर्तमानम् ।

२. उत्करहाटकम् = उद्गताः करहाटकाख्याः कुसुमविशेषा यत्र ।

३. अक्षततिनिशासनागतालीसवनम् = अक्षतान्यखण्डितानि तिनिशानामोषधिविशेषाणां सनागानां पुंनागतरुसहितानां तालीसानां च तरुभेदानां वनानि यत्र ।

४. समदनवशकलितातनुरसधवनागोत्करञ्जराजितसत्त्वम् = मदनवशाः स्मरपरतन्त्राः अतएव कलिततनुरसा गृहीतबहलशृंगारा ये धवनागाःपुरुषश्रेष्ठास्तैः सह वर्तमानम् । उन्नताः करञ्जाख्यास्तरवो यत्र, राजितं सत्त्वमौदार्यं यत्र ।

410 तटभुवि सकृदियमपजरजनता
विहरति मदविशदनवरतरसा ।
किमिव हि न हृदयमतिरुचिरमणा-
विह रतिमदविशदनवर ! तरसा ॥१४७॥

411 स्थितिमिह बिभ्रतीश ! जनता दुरन्तदुरितापहारिणि गिरौ
विगतजरामयातनु-रसातिसारनुत यामराजत गवि ।
त्रिदिवतलेऽपि सा न सुलभा मनोरथशतैश्चिरादधिगते
रिपुवनदाहिसाहस मयात्रियाम सहसाहिदानवपुरि ॥१४८॥

प्रतिलोमानुलोमपादः

412 लक्ष्मीरिहामरगिरेः कलधौत हर्म्यैः
सा धूनितानवर ! तारमणीष्टकान्तैः ।
लीला रहस्यधिगता च गुणानखेदैः
साधूनिता नवरता रमणीष्टकान्तैः ॥१४९॥

413 सरति मलयवात्या मानधैर्यं वधूनां
विधुतपनसमालं सादरं सज्जयन्ती ।
इह मुनिजनतासौ तेजसा भाति मुक्ति
विधुतपनसमालं सादरं सज्जयन्ती ॥१५०॥

414 स्वेदाम्भःशीकरार्द्रं स्फुरदमलतरच्छायरत्नोपलेऽस्मिन्
उस्रैः कर्ता ललाटं रविरलकलतातालाञ्छितं किंनरीणाम् ।
गीतं चासां विधत्ते विरहितवनितामण्डलीदेहयष्टिं
चेतोहारीदमुच्चैरविरलकलतालाञ्छितं किं नरीणाम् ॥१५१॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवे राजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
महाकाव्ये पर्वतर्तुवर्णनो नाम पञ्चमः सर्गः ।

---

## षष्ठः सर्गः

415 [1]तमथान्धकासुरनिकारविप्लुताः
[2]कृतपूर्वसेवमभिराद्धमानसम् ।
ऋतवोऽभिलक्ष्य निजलक्ष्मविग्रहाः
शरणं ययुः शतमखेन चोदिताः ॥१॥

416 घनसौरभानुगतभृङ्गसंहती-
रुपदीकृता विविधपुष्पमञ्जरीः ।
दधतः करैः क्षितिनिविष्टजानवो
विनिवेदिताः सविनयेन नन्दिना ॥२॥ युग्मम्

417 प्रणिपत्य चैनमथ काञ्चनावनि-
स्खलितोत्पतन्मधुपमुक्तशेखराः ।
अविदूरदेशनिहितानि भेजिरे
तदनुज्ञया मणिशिलासनानि ते ॥३॥

418 अथ तानुवाच दशनांशुनिर्झर-
स्नपितोष्ठपल्लवमिदं जगत्पतिः ।
नवनीरभारभरमन्थराम्बुद-
स्तनितातिडम्बरगभीरया गिरा ॥४॥

419 किमकाण्ड एव जगतां विपर्यया-
दिव शून्यतामुपगताः स्थ शुष्मिणः[3] ?
कथयन्ति वो हृदयशल्यदुःखिता-
मधुना मुखच्छवय एव धूसराः ॥५॥

---

१. A, B start with ओं ।

२. A, C, D read कृतपूर्वमेव for कृतपूर्वसेव ।

३. B तेजस्विनः (footnotes) ।

420 भुजगेन्द्रभोगपरिपीवरस्फुर-
त्कुलिशातिभासुरभुजे मरुत्पतौ ।
स्थित एव केन जगतामुपप्लवं
प्रविदित्सुना दितिसुतेन जृम्भितम् ॥६॥

421 उदितं विकासि बिसकन्दकोमला-
त्कमलासनादनघपक्षशालिनः ।
भुवनाब्जकोशमकृशं शिलीमुखा
इव यूयमेव ननु पातुमीश्वराः ॥७॥

422 द्रुहिणस्य काव्यमिव सर्गगोचरं
स्फुटचित्रवृत्तिकमवद्भिरद्भुतम् ।
विशदं भवद्भिरभितन्यतेतरा-
मभितः पुराणकविना कृतं यशः ॥८॥

423 [1]स्थितवत्यथाम्बुधर-धीरनिःस्वना-[2]
मिति किञ्चिदादिपुरुषेऽभ्युदीर्य[3] गाम् ।
शुचिमुख्यशेषसकलतुमण्डल-
क्षणदृष्टिपातपरिबोधितः शनैः ॥९॥

424 क्वणितानुबन्धमुखराननभ्रम-
द्भ्रमरोपयुक्त[4]मुखसौरभश्रियम्[5] ।
दशनांशुकेसरकरालितां पुरो
निजपुष्पसम्पदमिवोद्गिरन् गिरम् ॥१०॥

---

१. C स्थिरवत्यथा for स्थितवत्यथा । २. A विःस्वादिति ।

३. A, B पुरुषेऽभिगीर्य गाम् for पुरुषेऽभ्युदीर्य गाम् ।

४. B मधुसौरभश्रियम् for मुखसौरभश्रियम् ।

५. C reads erratically सौरोभश्रियाम् ।

425　स्मरबान्धवक्षयकरे तदुत्थित-
ज्वलनाभिघातविनिकूणितेक्षणः ।
शशलक्ष्मशेखरतृतीयचक्षुषि
क्षणमाश्रिताशय इवाभ्यसूयया ॥११॥

426　श्रवणाग्रलग्ननवचूतमञ्जरी-
मकरन्दशीकरकणस्पृहागतैः ।
मधुरित्यभाषत मधुव्रतैः पुरो
ह्रियमाणवाक्य इव मञ्जुशिञ्जितैः ॥१२॥　　चक्कलकम्

## शङ्करस्तुतिः

427　[1]अधितिष्ठतो हृदयपद्मविष्ठरं
भुवनत्रयं व्यवहृदेकसाक्षिणः ।
प्रतिघव्यपायपरिशून्यसंविदः[2]
किमिवास्ति यन्न विदितं तवेशितुः ॥१३॥

428　तव संविदादिसहजं चतुष्टयं
जगति प्रतीतमनघं तथा यथा ।
स्थितिमापुषोऽस्य[3] सकलातिशायिनी-
मपरं न किञ्चिदपि तारतम्यभाक् ॥१४॥

429　सह सिद्धिनिष्प्रतिघसंविदर्चिषो
न घटामुपैति परपारदृश्वनः ।
तव नाथ ! शब्दसमयागता क्वचित्
सकलार्थमण्डल[4]सतत्त्ववेदिता ॥१५॥

---

१. A, C अधितिष्ठते ।

२. B विज्ञानस्य (footnotes) ।

३. B आप्तस्य (footnotes) ।

४. A, C सकलार्थमण्डलमतत्त्ववेदिता ।

430 अविशेषवृत्तिरहिमत्विषो यथा
सकलेषु वस्तुषु विभा विजृम्भते ।
तव नाथ ! निष्प्रतिघनिर्मलीमस-
स्थितिरस्तमोहतिमिरा मतिस्तथा ॥१६॥

431 प्रतिपन्नसर्वगतवस्तुविस्तर-
स्तदपीश ! पृच्छसि यदद्य तेन नः ।
कुरुतेऽधुना कुशलसंग्रहं परं
मधुरो मिथस्त्वदभिभाषणक्षणः ॥१७॥

432 प्रकृतेः पृथग्विकृतिशून्यतां गतः
प्रतिषिद्धवस्तुगतधर्मनिष्क्रियः ।
पुरुषस्त्वमेव किल पञ्चविंशकः
स्फुटचूलिकार्थवचनैर्निगद्यसे ॥१८॥

433 प्रथितप्रपञ्चरसभाववर्जितः
क्वचिदेव किञ्चिदपि कर्तुमक्षमः ।
अवपुर्गतः करणवृत्तिशून्यतां
प्रकृतेरहो नु सदृशोऽसि कामुकः ॥१९॥

434 कथयन्ति नाथ ! दशहेतुसंश्रय-
व्यवधूतविप्लवविशुद्धचेतसः ।
तव [1]सांख्यवृद्धमतभेदवर्तिनः
कृतनोऽनिवृत्ति किल [2]तत्परं पदम् ॥२०॥

---

१. A, C सांख्यवृत्त for सांख्यवृद्ध ।

२. B कपिलमुनिः (footnotes) ।
B तत्पदं परं for तत्परं पदम् ।

435 दधतीह कर्मफलभोगवर्जिते
सकलार्थतत्त्वविदि पुंविशेषताम् ।
त्वयि शब्दमीश्वर इति व्यवस्थितं
कथयन्त्यनन्यविषयं मनीषिणः ॥२१॥

436 दृढबन्धकोटिपरिमर्षकर्षितं
न कदाचिदन्य[१]शमिनामिव क्वचित् ।
विदुरीश्वरत्वमनघं तवान्वय-
व्यतिरेकशून्यमवदाततदृष्टयः ॥२२॥

437 भुवनानि पङ्कजभुवः सिसृक्षत-
स्तपसेद्धतां किल गतस्य यः पुरा ।
उदभून्मखादिषु च पञ्चलक्षणः
सकलक्रियासु विनियोगभाग्भवान् ॥२३॥

438 श्रुतयः पदं परममानयन्ति यं
बहुवक्त्रपादपि च योऽभिधीयते ।
अधिगम्य यं पुनरुदेति नो जनः
प्रणवस्तवैव[२] भगवन् स वाचकः ॥२४॥ युग्मम्

439 दधतोऽव्ययानुदयधर्मशून्यतां[३]
सुरनायकैकगुरुतामुपेयुषः ।
उपवर्तते य इह न व्यवच्छिदे
तव सर्व[४]चर्वितचराचरः क्वचित् ॥२५॥

---

१. C अन्यशशिनामिव for अन्यशमिनामिव ।

२. A reads प्रणवस्तयेव for प्रणवस्तवैव ।

३. B धर्मरूपतां for धर्मशून्यताम् ।

४. B चर्चितसुरासुरः for चर्वितचराचरः ।

440 क्रियया क्रमादवयवैश्च संख्यया
निजलक्ष्मणा च य इहोपलक्ष्यते ।
[1]शमनादिमध्यनिधनं स्वमायया
स्मरकाल ! कालयसि[2] कालमेव [3]तत् ॥२६॥ युगलकम्

441 अवितर्कमस्थितविचारगोचरं
सुखवेदनोज्झितमनस्मितान्वयम् ।
अभिगम्य शङ्करसमाधिमिच्छया
तव जातु नैव भजते भ्रमं[4] पुमान् ॥२७॥

442 चितिशक्तिरूपविपरीतभावशा-
त्प्रकृतौ पुरस्कृतविरागभावनम् ।
विरुणद्धि तामपि विवेकदर्शन-
स्थितिमीश संयमिमनस्तवेच्छया ॥२८॥

443 तपनादिके विविधलक्ष्यमण्डले
कृतसंयमास्त्रिदशनाथ ! योगिनः ।
भुवनादिधामसु भवन्त्यविप्लुत-
प्रतिभातचित्रभवदात्मसंविदः ॥२९॥

444 व्यतिपेतुषां त्रयमसंविदात्मकं
स्थितिसंमुखीकृतनिरोधवर्त्मनाम् ।
भव ! योगिनामुदयते तवेच्छया
न हि कोटिभूमिधिषणा न सप्तधा ॥३०॥

---

१. B श्वसनादिमध्यनिधनं for शमनादिमध्यनिधनम् ।

२. C कालयति for कालयसि ।

३. B तम् for तत् ।

४. A, C भजतेतमां for भजते भ्रमं ।

445　मनसो निरर्गलपरिप्लवात्मनो
निरुप्लवस्थितिनिबन्धना नृणाम् ।
रसनादिधामसु रसादिगोचरा
भवदात्मिकास्त्रिदशनाथ ! संविदः ॥३१॥

446　कलधौतलक्षण ! इति प्रतीतिमान्
पुरुषस्त्वमा नखशिखं सुवर्णकः ।
कथितः किलौपनिषदैश्च पञ्चधा
सुखवेदनादिमयतामुपेयितः ॥३२॥

447　स्फुटहिंक्रियादिनिधनावसानता-
प्रतिपन्नपञ्चविधभक्तिसौष्ठवम् ।
द्रुहिणेन साम बहुवर्त्म गायता
जगति त्वमेव गुणगौर ! गीयसे ॥३३॥

448　स्थितिमीयिवत्सु नियतश्रुतिक्रम-
स्वरमण्डलानुगमसुस्थितां ध्रुवम् ।
अपरान्तकादिषु विविक्तवस्तुषु
ध्वनसि त्वमेव दशशब्दलक्षणः ॥३४॥

449　सकलाधिकारविनिवृत्तिहेतुतां
गतवन्ति वाङ्मयपराङ्मुखस्थितिः ।
हर ! मद्रकाणि गहनानि गायति
प्रकृतिं बुभुत्सुरणुरेष तावकीम् ॥३५॥

450　गतमीश ! शाश्वतिकतृप्तिहेतुता-
ममृतं भवन्तमिव सोमपायिनः ।
[1]हर ! संस्तरव्रतनिमित्तमुत्तमं
दुहते गुहानिहितमाहितादराः[2] ॥३६॥

---

१. C ···माहितादरात् for माहितादराः ।
२. C हरि for हर ।

451 [1]बहुभेदसांख्य[2]गुणयोगधारणा-
क्षमतान्वितस्थिति सुखासनस्थितेः ।
भवति प्रसन्नमनसि प्रवर्तते
कृतिनः किलाष्टविधमैश्वरं बलम् ॥३७॥

452 द्विविधैश्चतुष्प्रकृतिभिः श्रुतिक्रमा-
दुपपन्नसौष्ठवगुणा किल स्वरैः ।
भवदात्मिकैव महतीमुपस्थिता-
स्फुटसामघोषमधुरा सरस्वती ॥३८॥

453 प्रथिताः परापरदृशः पुराविदः
कथयन्ति विश्वनुत ! नेति नेति यत् ।
सकलैर्विनाकृतमुपाधिसाधनैः
परमं तदेव तव तत्त्वमद्भुतम् ॥३९॥

454 अविपन्नवेदनविवर्तमुच्चकै-
र्वसुधानिलानलजलादिकं नृणाम् ।
पुरुषं तदात्मकमथाचचक्षिरे
भगवन् ! भवन्तमवदातदर्शनाः ॥४०॥

455 प्रणवादिरप्यथ विरामतां दध-
त्फणिना निरूपितपदार्थसप्तकः ।
भगवन्नधीत इह यैः किलागमः
पदमाप्नुवन्ति ननु तेऽपि तावकम् ॥४१॥

456 व्रजसीश ! पादरहितो ग्रहीतृतां
प्रतिपद्यसे करविनाकृतोऽपि सन् ।
अवलोकयस्यनयनोऽप्यकर्णकः
सकलं शृणोषि न च वेत्सि वेत्सि च ॥४२॥

---

१. C बहुभेदसंख्य for बहुभेदसंख्या ।
२. B गुरुयोगधारणा for गुणयोगधारणा ।

457　इति नाथ ! सर्वजगतां विलक्षणं
　　वपुरद्भुतातिशयशालि बिभ्रतम् ।
　अभिपश्यतः किल भवन्तमव्ययं
　　कुशलस्य संविदखिला विवर्तते[1] ॥४३॥　　युगलकम्

458　शशिमण्डलं जलतरङ्गसंहति-
　　प्रतिबिम्बितं हर ! जलाशये यथा ।
　द्रुमपल्लवोदवसितान्तराश्रय-
　　[2]स्तपनातयो निपतितः क्षितौ यथा ॥४४॥

459　गगनं यथा स्थितमुलूखलादिषु
　　स्फुटमेकमेव सकलाद्भुतस्थितिः ।
　प्रतिपद्यते बहुविधत्वमाश्रय-
　　प्रतिसंक्रमादविकृतस्तथा भवान् ॥४५॥

460　हरिरेकचेष्ट इति यत्तदंशका-
　　स्त्रिचतुर्बहुक्रियतया व्यवस्थिताः ।
　सकलात्मनस्तव महाविभूतितां
　　दधतो विवर्त [3]इव [4]संस्थितोऽपरः ॥४६॥

461　अपि नाथ ! विध्यति मणिं निरीक्षण-
　　स्तमनङ्गुलिर्वयति बोधितस्त्वया ।
　प्रतिमुञ्चति स्म तमकंधरोऽपि सन्
　　परिपूजयत्यरसनस्तदद्भुतम् ॥४७॥

---

१. C निवर्तते for विवर्तते ।

२. C तपनातपो for तपनातयो ।

३. B प्रतिसंक्रमादधिकृतः for प्रतितंक्रमादविकृतः ।

४. $B_1$, $C_1$, d इह for इव ।

462　बहुरूप एव दधदेकरूपतां
　　स्थिरधर्मतामुपगतोऽपि गत्वरः ।
नभसि स्थितोऽप्यनतिवृत्तभूमिकः
　　सविधास्पदोऽपि भजसे विदूरताम् ॥४८॥

463　चिदचित्परोऽप्यचिदचित्परो भव-
　　न्नतदाभ एव हि तदात्मतां दधत् ।
सदसत्परोऽप्यसदसत्परस्थिति-
　　र्बहुवक्त्रपादवयवैर्विनाकृतः ॥४९॥

464　शिशिरः सहस्रकरमण्डलोदरे
　　शशिनि स्थितोऽपि दधदूष्मसंपदम् ।
उभयात्मको निरुभयात्मकोऽथवा
　　गहनस्त्वमित्थमलमङ्ग तायसे ॥५०॥

465　[1]भगवन्नहो बत किलासि दुर्ग्रहः
　　प्रथितेन रूपविभवेन केनचित् ।
अधिरोपितेन तथतात्मनापि वा
　　क्वचनापि यन्न कृतिनाभ्युपेयसे ॥५१॥

466　न गतिस्तवास्ति सुरनाथ ! नागति-
　　र्न बहि र्न चान्तरवभाससे क्वचित् ।
[2]द्वयवभासशून्यतथतावलम्बनः
　　प्रतिभासि नाननुगृहीतचेतसाम् ॥५२॥

---

१. A, B, C read in the following order.
　　अधिरोपितेन तथातात्मनापि वा
　　प्रथितेन रूपविभवेन केनचित् ।
　　भगवन्नहो बतकिलासि दुर्ग्रहः
　　क्वचनापि यत्र कृतिनाभ्युपेयसे ॥

२. A, C व्यवभासशून्य for द्वयवभासशून्यः…. ।

467 अविभाग एव सकलार्थसंहते-
जगति प्रकाशकतया व्यवस्थितः।
पदवाक्ययोस्त्वमुपकारकारिता-
मभिधेयवस्तुनि सविस्तरे गतः ॥५३॥

468 परिकल्पितेन दधदेकरूपता-
मपि कर्तृकर्मकरणादिवर्त्मना।
त्वमनादिकालकृतया ह्यविद्यया
[1]बहुधा विभज्य परिगृह्यसे जनैः ॥५४॥

469 सकलार्थविग्रहतया विवर्तते
यदनादिमध्यनिधनं किलाक्षरम्।
प्रथयन्ति तत्तव जगन्निबन्धनं
शिवशब्दतत्त्वमविनश्वरं वपुः ॥५५॥

470 असमाप्तविप्लवविकल्पगोचरौ
व्यवहारपद्धतिपरस्पराश्रयौ।
परतः [2]स्थितत्वमवधेरवाप्नुतो
विनिवृत्तिमीश ! जगतोऽस्य धीध्वनी ॥५६॥

471 जगतोऽविलम्बितपरावरोभय-
व्यतिवृत्तरूपगहनो विसंस्थुलाम्।
विसभागतामुपनिषत्पराश्रितः[3]
प्रतिभासते भव [4]भवान्न कस्यचित् ॥५७॥

---

१. A, C बहुना for बहुधा।

२. C स्थितत्वदवधेरवाप्नुतो for स्थितत्वमवधेरवाप्नुतो।

३. B उपनिषत्पराश्रितां for उपनिषत्पराश्रितः।

४. C, B भयान्न for भवान्न।

472 व्यतिरिक्तवृत्तिरगुणो गुणस्थितिः
सुरनाथ ! तत्प्रकृतितां च संश्रितः ।
स्फुटमध्वनः षडवधिरिस्थतेर्भवा-
न्विसभागतामथ [1]सभागतां गतः ॥५८॥

473 अपि बुद्धिगोचरमतीत्य संस्थितः
प्रणवारवान्तरनिविष्टदृष्टिभिः ।
किमपि प्रतीपितविपर्ययग्रहै-
रनुपाधिरूपकरणो निरूप्यसे ॥५९॥

474 दधतो विलङ्घिततुरीयवृत्तितां
कृतजीवजीवननिरामयस्थितेः ।
भवतोऽपवर्गदमनाहतात्मनः
पदमाप्नुवन्ति कृतिनः सुषुम्णया ॥६०॥

475 व्यवधूतकल्पनगभीरमूर्तितां
दधतं दुरन्तमनपायमद्भुतम् ।
प्रतिभिद्य मण्डलचतुष्टयं जवात्
कृतिनो भवन्तमविशन्ननावृतम्[2] ॥६१॥

476 भवदीरितेन मनसाभिहन्यते
सुरनाथ ! विग्रहशिखी शिखाकुलः ।
स समीरमीरयति पञ्चलक्षणं
स्थितिहेतुमीश ! वपुषः शरीरिणाम् ॥६२॥

477 अधिरुह्य निष्प्रतिघचित्तसारथिं
दशभेदबाह्यकरणाश्रयं रथम् ।
विषयेषु नीलगल ! वभ्रमीत्यणु-
र्भवदिच्छया च विनिवर्तते पुनः ॥६३॥

---

१. B, C सभागतां for समागताम् ।
२. B अनावृतिम् ।

478 सकलाधिदैवतगणस्य तस्थुषः
श्रवणादिधामसु गुरुः शरीरिणाम् ।
हृदयाम्बरे निरवलम्बनस्थितिः
कृतिभिस्त्वमेव भगवन् ! उपास्यसे ॥६४॥

479 निचिते रजःप्रभृतिभिर्घटान्तरे
सलिलानि योगमुपयान्ति नो यथा ।
अणुमण्डलानि भगवंस्तवेच्छया
निरुपप्लवस्य भवतः सुखादिभिः ॥६५॥

480 हृदयारविन्ददलकोटरोदर-
स्फुटजृम्भमाणपरिवर्तविभ्रमः ।
जगतो गतः प्रततमन्तरात्मतां
कुरुषे गतीस्त्वमयनद्वयाश्रयाः ॥६६॥

481 [1]श्रियमृङ्मये दधति सामदीधितौ
तरणेस्त्रयीमयनिरामयात्मनः ।
प्रतिभासभेदगहनोऽवभाससे
त्वमणुर्यजूंषि पुरुषोऽत्र मण्डले ॥६७॥

482 स्फुटमेक एव विविधाख्यतां दध-
द्धरिमूर्तिराश्रितपृथग्विधक्रियः ।
जगतीं दिनत्वयनहायनादिकं
विदधत्त्वमेव वितपस्यभीशुमान् ॥६८॥

483 सकलाणुतत्त्ववपुषां परस्पर-
प्रतिबन्धिनीं तनुभृतां त्रिदण्डवत् ।
उपलभ्यते त्रिदशनाथ ! योगतो
निरुपप्लवा भवदुपाधिका स्थितिः ॥६९॥

---

१. C श्रियमृण्मये for श्रियमृङ्मये ।

484 प्रणिनीषतामनुजिघृक्षया कृती-
जगतः परस्परविवादविप्लुताः ।
धिषणादयः किल मनः पुराविदां
भवदात्मिका विवशुरीश ! देवताः ॥७०॥

485 प्रविवेश या क्षपितमोहविप्लवा
विवशुश्च यां सकलवेद्यवेदिकाः[1] ।
अपवर्गमार्गनिबिडार्गलच्छिदा
तव विद्ययैति शिवतामणुस्तया ॥७१॥

486 जगतामनादिनिधनस्य तस्थुषो
जनकत्व एव जननोज्झितस्थितेः ।
तव नाथ ! सत्यपि गुणादिसंभवे
न हि संभवत्यभिजनाश्रया स्तुतिः ॥७२॥

487 जनतेन्द्रियातिग-विशुद्धगोचर-
द्व्यणुकादिबन्धगतकार्यदर्शनात् ।
घटकुम्भकारवदकारकात्मन-
स्तव कारणत्वमनुमीयते बुधैः ॥७३॥

488 निजयैव निष्प्रतिघरूपयेच्छया
व्यवहारिणोऽतिनिरवग्रहात्मनः ।
कृतिनः प्रयोजकविनाकृतां विभो-
स्तव कर्तृतां समगिरन्त सूरयः ॥७४॥

489 दधतोऽधिकाविकलशक्तिमण्डल-
स्थितिरूपतां प्रथितभावविक्रियम् ।
तव शक्तिलेश इदमुच्चकैर्जगत्-
क्षुभिते गुणत्रयमयं किलोदभूत् ॥७५॥

---

१. B सकलवेद्यवेदकाः for सकलवेद्यवेदिकाः ।

490 अनघस्वशक्तिविभवव्यवस्थितेः
पशुपाशमण्डलविलक्षणात्मनः ।
भुवनाधिनाथ ! भवतः प्रवर्तते
चिदचित्स्वभावमिह भावमण्डलम् ॥७६॥

491 अवरुग्णगाढतिमिरान्मरीचिभि-
र्युगपद्विचेतनचितः पृथग्विधाः ।
ज्वलतः कणा इव विभो विभावसो-
र्भवतः पदार्थनिवहाः विनिर्ययुः ॥७७॥

492 तव साद्भुतातिशयवैभवस्थिते-
रपि नाथ ! शाश्वतिकतामुपेयुषः ।
क्रमयौगपद्यघटनाविरोधितां
सकलार्थसंपदि न बिभ्रति क्रियाः ॥७८॥

493 त्वमधिष्ठिताविकलशक्तिमण्डलः
सकलं जगत् सृजसि पासि हंसि च ।
स्थिरपञ्चमन्त्रमयविग्रहस्थिति-
र्जननद्वयेन भगवन् ! विनाकृतः ॥७९॥

494 क्षुभिते भवत्यविनतां गुहागता
प्रकृतिश्च बल्वजवदुत्थिता ततः ।
जगदुद्भवार्थमितरेतराश्रया-
स्तिमिताश्च रज्जुगुणवद्गुणाः स्थिताः ॥८०॥

495 द्व्यणुकादियुक्तमदशेषगोचरं
कृतवान्विचित्रमिह कार्यमण्डलम् ।
अतिसूक्ष्मदृक्त्वसकलार्थवेदिता-
विभुतान्वितस्त्वमनुमीयसे बुधैः ॥८१॥

496 विभुरूपया विकलवस्तुसंनिधिः
प्रभुरूपया च सकलार्थकारकः ।
त्वमधीश ! शक्तिकलया द्विधात्मतां
गतया विभावितचराचरस्थितिः ॥८२॥

497 अविपन्नशक्तिगुणगुम्भितस्फुर-
त्स्फुटविग्रहाक्षभुवनप्रसूनया ।
न कदाचन क्वचिदवाप्यते प्रभो !
प्रसरोपघातघटना तवेच्छया ॥८३॥

498 मधुकोषसंपुटवदाहितस्थिति[1]-
र्गहना गुहा गुहपतिस्त्वया कृता ।
स्थितिभेदमेति न कदाचिदुच्चकैः
सकलामलाणुगणबन्धमन्दिराः ॥८४॥

499 वसुधा[2] विभावयति बीजमुच्चकै-
रनघं यथाविभवमङ्कुरात्मना ।
सकलस्वभावकरणं तथेहितं
तव नाथ ! सर्वमिह भावमण्डलम् ॥८५॥

500 अपरे पुनः [3]प्रथितशक्तिसंग्रह-
ग्रथितात्मनः प्रकृतितत्त्वतोऽव्ययात् ।
धिषणादिकार्यपटलं प्रवर्तते
तदभिन्नरूपमिति संप्रचक्षते ॥८६॥

---

१. B संपुटवदाख्याता स्थितिः ।

२. A, B वसुधादि भावयति for वसुधा विभावति ।

३. A सकलशक्तिसंग्रह for प्रथितशक्तिसंग्रह ।

501　निजकार्यचक्रघटने ह्यचेतनं
　　प्रतिपद्यते किमिव वस्तु कर्तृताम् ।
कथयन्त्यतः प्रभवहेतुमीश्वरं
　　भविनां भवन्तमिह चित्क्रियात्मकम् ॥८७॥

502　प्रलयेऽपि सर्वजगतामविप्लुत-
　　स्फुटसंविदर्चिरविलुप्तवैभवः ।
स्फुटमूर्णनाभ इव रश्मिसंहते-
　　रणुसंपदस्त्वमसि नाथ ! कारणम् ॥८८॥

503　जगदेककारणमकारणात्मकं
　　विभुमव्ययं गुणदशाविनाकृतम् ।
कथयन्ति नाथ ! पुरुषं सधर्मतां
　　गतमीश्वरस्य भवतः किलापरे ॥८९॥

504　प्रकृतीश्वरोभयचिदादिचेष्टित-
　　प्रथितप्रपञ्चरहितानुपाधिकम् ।
[1]अपरे प्रमाद्वितयनिश्चितं पुन-
　　स्त्रितयात्मकं समुदयं प्रचक्षते ॥९०॥

505　अनपेक्षिताविकलकारणान्तरं
　　भविनामुशन्ति भव जन्म केवलम् ।
अपरेऽपवर्गद ! निसर्गवादिनः
　　शिखिपिञ्छसंस्थितिवदात्तविप्लवाः ॥९१॥

506　प्रलयोदयव्यतिकरानुपप्लुतं
　　शुचिशब्दतत्त्वमपरे पुनर्विदुः ।
परिणामरूपमिह यस्य दृश्यते
　　भव भावमण्डलमिदं चराचरम् ॥९२॥

---

1. C अपरप्रमाद्वितय for अपरे प्रमाद्वितय ।

507　समयान्तरेऽप्यघटमानकल्पनां
　　त्रयबाह्यवस्तुविषयावमर्दिनः ।
अपरे विशारदधियो जगत् स्थितिं
　　सुरनाथ ! संविदमुशन्ति केवलम् ॥९३॥

508　उभयात्मकग्रहविविक्तचेतसो
　　व्यवलम्ब्य माध्यमिकदर्शनस्थितिम् ।
स्थिरतत्त्वनिश्चयधियोऽभिमन्वते
　　कृतकृत्यतां तव गुणेन रञ्जिताः ॥९४॥

509　अणुमाहुरैन्द्रियकमेव केचन
　　त्वदनुग्रहोन्मिषितसंविदर्चिषः ।
अपरे त्वनैन्द्रियकमेव विप्लवा-
　　दभिमानमीश्वर ! तदात्मकं[1] विदुः ॥९५॥

510　न बहिः शरीरपरिमाणतोऽण्वपि[2]
　　क्वचनापि चित्त्वमिह जातु लक्ष्यते ।
इति निश्चिताः कृतधियः परे व्यधु-
　　स्तव शाश्वतत्वविभुताविपर्ययम् ॥९६॥

511　व्यवलुप्तमोहगनास्त्वदिच्छया
　　भगवन्भवन्तमवदातदर्शनाः ।
बहुधात्मतत्त्वमपरे प्रचक्षते
　　कण-भक्ष-जैमिनि दिगम्बरादयः ॥९७॥

---

१. B, C तवास्पदं for तदात्मकं ।
　A त्वदास्पदं for तदात्मकं ।
२. B, C परिणामतोऽण्वपि for परिमाणतोऽण्वपि ।

512　अपरे सलक्षणविलक्षणात्मता-
　　ग्रथितानवस्थमनुजोहवृच्चयः ।
भवतोऽस्तितामनुदयादिहेतुभि-
　　र्भगवन्नपाह्नुवत नास्तिकाशयाः ॥९८॥

513　प्रतिपन्नभिन्नपरिकल्पकारण-
　　प्रतिभाजवञ्जवविरामभावनाः ।
शिवमार्गमध्यवससुर्न केचन
　　प्लुतचेतसो भवदनुग्रहोज्झिताः ॥९९॥

514　भगवत्यनुग्रहपराङ्मुखे सति
　　प्रतिपद्य मार्गमपि तं दुरासदम् ।
अधिगच्छति क्वचिदणुर्न किञ्चन
　　स्थिरपञ्चपर्वणि विपर्यये स्थितः ॥१००॥

515　अपि यत्नतोऽधिगततत्वमण्डल-
　　प्रकृतिप्रतानगहनादिको नृणाम् ।
भवदागमामृतबहिष्कृतः पुमान्
　　परमेति [1]पाशवमतानुसारिताम् ॥१०१॥

516　अविरुग्णमोहगहनाः किलेतरा
　　मलिनात्मभिः पशुमतप्रदीपकैः ।
भवदागमानधिगमादसंशयं
　　तमसैव संपपृचिरेऽणुसंपदः ॥१०२॥

517　प्रकृतिर्न चेतयत एव किञ्चन
　　त्रिदशाधिनाथ ! पुरुषोऽप्युदासिता ।
तदनुग्रहं प्रथितचेतनक्रियः
　　कुरुषे त्वमेव किल भुक्तिमुक्तिदः ॥१०३॥

---

१. पाशवमतानुसारतां for पाशवमतानुसारिताम् ।

518　अपि धर्मलेशसमताविडम्बना-
　　　दपृथक्त्व एव पुरुषेशयोः स्थिताः ।
　भवदागमामृतबहिष्कृताः परे
　　　कृतिनो भवन्ति न विवेक्तुमन्तरम् ॥१०४॥

519　द्विविधो हि शब्दनिकुरम्ब उच्चकैः
　　　शिवशासनेतरमतप्रकाशकः ।
　जगतः परापरफलैकहेतुतां
　　　प्रतिपद्यते भव ! भवत्प्रणेतृकः ॥१०५॥

520　हरिगोपकग्रहहिमांशुभास्कर-
　　　प्रकृतप्रकाशसदृशी चतुष्टयी ।
　सुरनाथ ! संविदिह संप्रवर्तते
　　　त्वदनुग्रहोपहिततारतम्यभाक् ॥१०६॥

521　अकथंकथत्वमविपर्ययागमात्
　　　[1]स्फुटमारिवांस इह योगवर्त्मना ।
　न भवन्ति केचन भवद्गुणाश्रिताः
　　　पुनराजवञ्जवजुषो विवेकिनः ॥१०७॥

522　गगनासने क्षततमा कृतस्थितिः
　　　[2]सकलं दिदर्शयिषुरात्मवैभवम् ।
　विमलैः स्वशक्तिकिरणैः प्रसेदिवा-
　　　नुदमीमिलस्त्वमणुसंहतेर्दृशाम् ॥१०८॥

523　चितिशक्तितामविकलार्थवित्तया
　　　सकलार्थकारकतया च कर्तृताम् ।
　अणुमण्डलस्य भवतानुगृह्णता
　　　क्रियते सुरेश ! सदृशत्वमात्मनः ॥१०९॥

---

१. C स्फुटमाधिवांस for स्फुटमारिवांस ।

२. C सकलो for सकलं ।

524 भवतोऽव्ययात्सदसतात्मनः पुरा
निरियाय यत्किल निनादरूपभाक्[1] ।
दधदीश ! शास्त्रमनघं सदाशिवो
बुबुधेऽर्थतत्त्वमखिलं तदाश्रयम् ॥११०॥

525 क्रमशोऽप्यनन्तमुखरुद्रमण्डल-
स्थिरसंप्रदायगतवस्तुविस्तरम् ।
गिरिशोऽभ्यभाषत चतुर्भिराननै-
र्बहु भेदमन्त्रगहनं तदद्भुतम् ॥१११॥

526 सदलं विकासि गुणकेसरोत्करं
स्फुटधर्मनालममलात्मतां दधत् ।
मधुवर्षि नाथ ! भवदाननादभू[2]-
त्स्फुटषट्पदार्थमिह शास्त्रपङ्कजम् ॥११२॥

527 सकलार्थवादनिजशक्तितां गतैः
सहकारिसंहितविशेषवृत्तिभिः ।
ग्रथिताक्षरैर्जगति विश्वरूपता-
मिव गर्भिताविकलवाङ्मयं गतैः ॥११३॥

528 कृतसाधकाभ्युदयमन्त्रमण्डल-
प्रकृतिस्फुटार्थविधवर्गविग्रहा ।
त्रिविभेदतत्त्वपरिनिष्ठितस्थिति-
स्तव शक्तिराननभवा हि मातृका ॥११४॥ युग्मम्

529 भवदाननाभ्युदितमातृकाक्षर-
ग्रथिता भवन्ति भव मन्त्रविग्रहाः ।
[3]निरपेक्षतामुपगता त्रिमुक्तये
भवभोगदास्तु विपरीतवृत्तयः ॥११५॥

---

१. B, C निनादरूपतां for निनादरूपभाक् ।
२. C भवदाननाद्दवेत् for भवदाननादभूः ।
३. C निरपेक्षतामुपगताभिमुक्तये ।

530 ध्रुवमूर्ध्ववर्ति पदमारुरुक्षता-
मधिरोहिणी निखिलवस्तुपद्धतिः ।
भगवन् ! व्यधायि भवतैव योगिनां
निजशक्तिभित्तिघटितावलम्बना ॥११६॥

531 अपि बालकोटिशतभागविग्रहः
षडुपाधिकामपि विधाय पद्धतिम् ।
स्थित एक एव भगवन्नहो भवान्
[1]विदधाति चेतसि न कस्य विस्मयम् ॥११७॥

532 भवदीरितः स्फुटमनन्त एव हि
प्रथमं गुहां गुणमयीमचुक्षुभत् ।
असृजत्तदादि स सितासितं जग-
द्व[2]सुधावसानमिति नाथ ! शुश्रुमः ॥११८॥

533 सुरनाथ ! या जगति तत्तदात्मिकाः
शिवशक्तयो विदधति क्रियाः क्रमात् ।
[3]भव ताभिरेव जगदेतदिच्छया
निरवीवृतत् सकलमन्त्रनायकः ॥११९॥

534 भवदिच्छयैव विनिरोधवर्तितां
परतन्त्रतां च जगतामुपेयुषाम् ।
स्थितिरक्षणादिकविधायिनः क्वचि-
न्न चलन्ति नाथ ! किल मन्त्रनायकाः ॥१२०॥

---

१. A, C विददाति for विदधाति ।

२. C वसुथावमानसिति for वसुधावसानमिति ।

३. C तव for भव ।

535 कमलासनप्रभृतयः सुराधिपा
भवदीरितास्त्रिदशनाथ ! साञ्जनाः ।
त्रिविधस्थिते भुवनसन्ततेः[1] क्रमा-
दुदयस्थितिप्रलयहेतुतां गताः ॥१२१॥

536 तव मूर्तितामुपगताः सुरेश ! ये
प्रथिताः कृशानुपृषदश्वभानवः ।
उदपादि तेभ्य इह पावनीक्रमा-
त्सकलाङ्गसौष्ठवयुता किल त्रयी ॥१२२॥

537 करणात्मतामुपगतेन सर्वतः
श्रुतिवर्त्मना य इह नाथ ! [2]साध्यते ।
सह सिद्धमेव तमुशन्ति सूरय-
स्तव धर्ममीश ! निरुपप्लवस्थितिम् ॥१२३॥

538 भवदिच्छया करणभेदवर्तिनः
सुखमासते वरद ! चक्रवर्तिनः ।
[3]स्फुटसार्वकामिकगुहाबिलान्तर-
प्रतिबद्धचित्रभुवनव्यपाश्रयाः ॥१२४॥

539 भवता कदाचिदनधिष्ठितात्मनां
प्रकृतिस्वभावपरमाणुकर्मणाम् ।
घटते विचेतनतयोदितापरैः
शपथैरपि क्वचन नैवकर्तृता ॥१२५॥

---

१. B, C भुवनसंहतेः for भुवनसंनतेः ।

२. A, B, C मन्यते for साध्यते ।

३. C स्फुटसर्वकामिक for स्फुट सार्वकामिक ।

540 कलया किलोद्दलितचेतनस्थितिः
प्रतिपद्यमानविषयश्च विद्यया ।
दृढरागरञ्जितमना भवत्ययं
भवदिच्छया प्रकृतिभोगभागणुः ॥१२६॥

541 त्रिविधेन कञ्चुकमलेन रूषितान्
गहनोपभोगकुहराभिपातिनः ।
अपकृष्य पुद्गलगणान्गुहाबिला-
दवदाततां नयसि दूरमिच्छया ॥१२७॥

542 [1]अवशान्मनोविषयशष्पमण्डली-
मभिलाषुकांश्चिरमधोमुखस्थितीन् ।
त्वमनुग्रहोन्मथित पाशसंचया-
न्न पशून्प्रमोचयसि पञ्चधर्मणः ॥१२८॥

543 प्रतिबुध्यते विषयवर्ति वस्तु स-
च्चितिशक्तिरस्खलितवृत्तिराणवी ।
द्वितयात्मतामुपगताद्भुतस्थितिः
सकलां प्रबोधयति तां तु तावकी ॥१२९॥

544 अपि पद्धतेरभिविधौ व्यवस्थितः
पुरुषोऽणुरेष दृढपाशरूपया ।
परतो न भोक्तुमलमात्मगोचरा-
त्तव नाथ ! शक्तिकलया नियोजितः ॥१३०॥

545 विवृणोत्यपोढपरमार्थसत्स्थितिं
स्थगयत्यपि स्फुरितरूपमेव या ।
[2]न स मायया तव तया विडम्ब्यते
त्वयि यस्य भावघनिबन्धनं मनः ॥१३१॥

---

१. B अविषात्मनो ।

२. C रसमायथा for न समायया ।

546　सुखवेदनामृततरङ्गिणीजलै-
　　रभिषिच्यमानवपुषस्तवेच्छया ॥
　विनिवृत्तिमश्नुवत एव सर्वतो
　　भव ! चेतनत्वसमवायिनो मलाः[1] ॥१३२॥

547　प्रतिपन्नशाक्तविभवाः प्रसादिना
　　भवता चिरादनुगृहीतचिद्दशः ।
　उपपत्तिधामसु न तेषु तेऽप्यमी
　　भगवन् ! भवन्ति फलभोगिनोऽणवः ॥१३३॥

548　त्वयि नाथ ! धर्मजलदत्वमीयुषि
　　स्रवति [2]प्रकाममृतं गुहाशये ।
　स्फुटशक्तिशुक्तिकृत संस्कृतः क्रमा-
　　दणुबिन्दुरेति शुचिमौक्तिकात्मताम् ॥१३४॥

549　उपसंहृतान्यविषयानुपप्लुत-
　　स्तिमितान्तरात्म-करणोदितस्थितिः ।
　मतिमन् ! भवन्तमवलोक्य केवलं
　　सकलार्थदृग्भवति यत्तदद्भुतम् ॥१३५॥

550　स्मृतिलेशतोऽपि भवबन्धनच्छिदः
　　स्फुटताप्रवृत्तिमिव नाथ ! कालिकाम् ।
　व्यपनेतुमात्मपरमाणुसंश्रयां
　　तव शक्तिरेव मलवासनां क्षमा ॥१३६॥

---

१. C मनः for मलाः ।

२. B प्रकाशममृतं for प्रकाममृतं ।
　C प्रकाशमनिशं for प्रकाममृतं ।

551 परिमृष्टकालिकमवाप्य हेमतां
न यथैति ताम्रमिह ताम्रतां पुनः ।
विमलीकृतं सदगुतत्त्वमिच्छया
तव नाथ ! नर्च्छति तथा स्ववासनाम् ॥१३७॥

552 प्रकृतिः पुमान् प्रणव इत्यमी त्रयः
सुरनाथ ! कूपघटरज्जुवत् स्थिताः ।
अपकर्षसि त्वमुपरि स्थितो दृढं
करणप्रपञ्चरहितोऽणुमञ्जु तम् ॥१३८॥

553 इयमन्तरङ्गबहिरङ्गरूपतां
दधती कलापरिणतिर्द्विधा स्थिता ।
अणुबन्धवृत्तिरनुलोमवर्तिनी
प्रतिलोमतः पुनरपोह्यते त्वया ॥१३९॥

554 अपदत्रयस्य गुणलिङ्गशून्यता-
मुपजग्मुषा कृतहृदम्बरस्थितेः ।
व्यपलीनसांप्रतभविष्यदर्थता-
विषयोऽणुरीश ! भवति त्वदाश्रयात् ॥१४०॥

555 रविदीधितिव्यतिकरादिमे यथा
प्रकटीभवन्ति भव ! चाक्षुषा गुणाः ।
तव सन्निधेरनघवृत्तयस्तथा
विशदीभवन्ति पुरुषव्यपाश्रयाः ॥१४१॥

556 विकलोऽपि सन् सकलशक्तिसंक्षया-
दसहाय एव पुरुषोऽतिदुर्गमम् ।
अपवर्गमार्गमुपगच्छतीश ! यत्
भवति प्रसेदुषि न तत्किलाद्भुतम् ॥१४२॥

557 अमनस्कयोगगतिसंशितव्रतै[1]-
यदवाप्यते किल निरञ्जनं पदम् ।
निरुपप्लवां[2] च दधदात्मनि स्थितिं
भव ! नान्तरीयकमनुग्रहस्य तत् ॥१४३॥

558 स्फुटयोगधर्मजनितादनुग्रहात्-
कुशलो निजे परगते तथात्मनि ।
अणुचेतसो व्यतिकरात्तवेच्छया
विषयान्तरेषु च तनोति संविदम् ॥१४४॥

559 अभिमानकार्यमिति यन्न कथ्यते
न बिभर्ति शब्दगुणतां यदव्ययम् ।
न च यत्र विस्फुरति तारकागणो
गतिरस्ति यत्र न नभस्वतः क्वचित् ॥१४५॥

560 [3]यदनावृतत्रिदशकार्मुकाङ्कितं
विचरन्ति यत्र न पयोदपङ्क्तयः ।
अवलोक्य तत्र नभसि व्यवस्थितं
कृतिनो भवन्तमपवर्गमध्यगुः ॥१४६॥

561 [4]उपसंहितात्मविभवस्त्वया पुमान्
कृतकृत्यतोज्झितभवाभवक्रमः ।
स्थितिमान्निरूपितपदार्थपञ्चकः
सदृशत्वमेति तव पत्युरद्भुतम् ॥१४७॥

---

१. B, C संचितव्रतै for संशितव्रतैः ।

२. A, B, C निरुपप्लवां विदलदात्मनि for निरुपप्लवां च विदधदात्मनि ।

३. B यदनावृत्तिस्त्रिदश for यदनावृतत्रिदश ।

४. A, B, C उपसंहृत for उपसंहित ।

562 अणुमण्डलीमनुजिघृक्षतो विभो-
स्तरणेरिवाकलुषतां प्रभा गता ।
शिवशक्तिरीश ! भवतः प्रवर्तते
द्विविधा परापरविभेदवर्तिनी ॥१४८॥

563 भवतो भवोद्भव भवाभवस्थितेः
प्रतिपन्नपुद्गलविभक्तवैभवात् ।
अधिगम्य शक्त्यु पकृतैकचित्ततां
चतुरर्थगोचरगतिर्भवत्यणुः ॥१४९॥

564 अविभेद एव किल धर्मधर्मिणोः
पृथगस्ति वृत्तिरिह नापि वृत्तिमान् ।
तदभावमेव भव चेतसोऽपरे
कथयन्ति योगमविरुद्धवर्तिनः ॥१५०॥

565 सति चैवमभ्युपगते विमुक्तिभाङ्
ननु सर्व एव विनिरुद्धचेतनः ।
स्फुटमप्रयत्नमिह स प्रसज्यते
भवदिच्छया तु विमलः स मुक्तिभाक् ॥१५१॥

566 द्विविधात्मना भवदनुग्रहेण ये
विषयीकृता वृषगते किलाकलाः ।
तव तुल्यतां दधति ते गुहाञ्जन-
[1]व्यतिरिक्तजन्मगतितां तथाणवः ॥१५२॥

567 वसुधादिषु त्रिदशयोनिवर्तिनां
परमेष्ठिनिष्ठमजितोत्तरोत्तरम् ।
स्थितमीश्वरत्वमणिमादि यद्विभो !
भवदिच्छयात्र तदहो विजृम्भितम् ॥१५३॥

---

1. B, C व्यतिवृत्तिजन्मगतितां for व्यतिरिक्तजन्मगतितां ।

568 [1]उपजग्मुषा [2]सकलधर्मरूपतां
भवता समर्थितचिदात्मवैभवम् ।
सकलक्रियासु सुरनाथ ! चेष्टते
निरुपप्लवं भुवनपाशमण्डलम् ॥१५४॥

569 तत्र शक्तिरप्रतिहतात्मवैभव-
प्रभुतान्विता च समधितिष्ठिता यया ।
विचलन्ति नात्मपरमाणवः क्वचि-
द्भव ! कृत्यवस्तुषु [3]परापरात्मसु ॥१५५॥

570 भवदात्मकं सकलमन्त्रमण्डलं
सुरसंहतिश्च भगवन् ! त्वदात्मिका ।
त्रिविधे गुणत्रयमये जगत्यहो
न तदस्ति यत्किल विनाकृतं त्वया ॥१५६॥

571 [4]परिपूरिताखिल-परापरात्मक-
प्रतिबन्धशून्यफलसंविदोऽव्ययाः ।
अनिवारितामृतपयश्च्युतो विभो-
स्तव शक्तयो भुवनकामधेनवः ॥१५७॥

---

१. A reads as follows :
सकलक्रियासु सुरनाथ ! चेष्टते
निरुपप्लवं भुवनपाशमण्डलम् ।
उपजग्मुषा सकलरूपधर्मतां
भवता समर्थितचिदात्मवैभवम् ॥

२. B सकलरूपधर्मतां for सकलधर्मरूपतां

३. B परात्मसु for परापरात्मसु

४. B, C प्रतिपूरिताखिल ।

572　भवदिच्छया ह्यनुगृहीतचेतसः
　　शतरुद्रवीरसुखरुद्रनायकाः[1] ।
　कमलासनादिगुणभोगयोगिनः
　　प्रविशन्ति धाम किल शैवमद्भुतम् ॥१५८॥

573　पटलादिभिः सकलदृक्क्रियात्मकं
　　पिहितं न पश्यति यथा विलोचनम् ।
　स्थगितं मलैर्भवदनुग्रहादृते
　　न तथेश ! किञ्चिदणुतत्त्वमीक्षते ॥१५९॥

574　अनुरञ्जिताखिलगुणो भवद्गुणै-
　　र्भवपञ्जरं दृढमनञ्जनाञ्जसा ।
　परिमृष्टगाढमलपञ्चकस्थितिः
　　[2]पुरुषो भनक्ति भगवन् ! त्वदाश्रयात् ॥१६०॥

575　अपहाय यद्वदिह नाथ ! नीलतां
　　वटपादपच्छद उपैति पीतताम् ।
　पशुतामपोज्झ्य तव शासने स्थितः
　　शिवतां सुरेश ! किल तद्वदेत्यणुः* ॥१६१॥

576　हृदि संविदंशुभिरधीश ! तावकै-
　　रवरुग्णसंतमसबन्धविप्लवे ।
　सकलं कलापुरुषयोः किलान्तरं
　　कुशलोऽधिगम्य नियमाद्विमुच्यते ॥१६२॥

577　मलिनत्वमीयुषि यथा न दर्पणे
　　प्रतिबिम्बमस्फुटतया विभाव्यते ।
　सुरनाथ ! चेतसि मलौघविप्लुते
　　नियमान्निसर्गविमलस्तथा भवान् ॥१६३॥

---

१. B मुखभद्रनायकाः ।　　　* तद्वत् एति अणुः इतिच्छेदः ।
२. A, C पुरुषो न भक्ति ।

578 सकलाधिकारनिजशक्तिमण्डल-
स्फुटविग्रहाक्षभुवनाधिको नृणाम् ।
भवबन्धमन्धतमसस्य तन्वतः
प्रणिहंसि हंस ! निविरीससंपदः ॥१६४॥

579 प्रतिभागताष्टविधसंविदर्चिषः
[1]प्रतिलङ्घ्य वर्त्म सुरनाथ ! षड्विधम् ।
समये स्थितास्तव निरञ्जनं पदं
प्रविशन्ति शान्तमनसो मनस्विनः ॥१६५॥

580 दधतं निरावरणचित्स्वरूपतां
ध्रुवमप्रतर्क्यममृतं गुहाशयम् ।
स्थिरगौणगाहनिकगौहमौलता-
प्रतिपन्नभिन्ननिजशक्तिविग्रहम् ॥१६६॥

581 सकलं कलाविरहितं प्लवोज्झितं
निरुपप्लवं बहिरुपप्लवस्थितिम् ।
स्थितमध्वनः षडवधेरुपर्यतो
व्यतिवृत्तशान्तमनघं शिवं परम् ॥१६७॥

582 प्रतिभाद्वयातिगममेयतादिक-
स्फुटधर्मयोगमनुपाख्यतां गतम् ।
अणुमादिदेवमनणुं च सर्वतो
मुखमूर्धपाणिचरणेक्षणं विभुम् ॥१६८॥

583 निरुपप्लवस्थितिनिजाङ्गदीपित-
स्थिरपञ्चवक्त्रमयविग्रहग्रहम् ।
सकलप्रमाणविषयातिगस्थिति-
प्रतिपत्तिशून्यगहनात्मतां गतम् ॥१६९॥

---

१. B, C प्रविलंघ्य for प्रतिलंघ्य ।

584 प्रतिपद्य शङ्कर ! भवन्तमव्ययं
सुखदुःखमोहपरिहीणचेतनः ।
व्यतिवृत्ततन्तुमयबन्धनाष्टको
भगवन् ! भवानिव भवत्यणुः स्फुटम् ॥१७०॥

पञ्चभिः कुलकम्

585 विवृतं जगत्कवलनैकतृष्णया
तव ताम्रतालुमुखमण्डलं क्षये ।
श्रियमेति लग्नशतपत्रपाटलं
स्फुरदर्कबिम्बमिव दक्षिणास्पदम् ॥१७१॥

586 पृथुजूटबन्धभुजगाधिपस्फुर-
त्फणचक्रवालमणिरश्मिरञ्जितः ।
शिरसि स्थितः श्रियमसौ तनोति ते
धृतसान्ध्यराग इव बालचन्द्रमाः ॥१७२॥

587 भवतोऽवतंसशशिरश्मिमण्डल-
च्छुरितं विराजति ललाटलोचनम् ।
स्मरभस्मशेषरचितामिव श्रियं
दधता कृतास्पदमयुग्मरोचिषा ॥१७३॥

588 ज्वलितानलेन घटिताच्युतत्त्विषा
पृथुहेतिशोषितसुरापगाम्भसा ।
विशिखेन देहिथ पुरा पुरत्रयं
नयनेन मन्मथमथोर्ध्ववर्तिना ॥१७४॥

589 तव नाथ ! नूतनघनासितोरग-
ग्रथिता विभाति विकटा जटावली ।
परिवर्तनाकुलललाटलोचन-
ज्ज्वलदग्निधूमवलयेव[1] पिङ्गला ॥१७५॥

---

१. C···· धूमवलयेन ।

590　प्रतिपद्य कृष्णरजनीमयं वपु-
　　गिरिकन्यकेव तव नोज्झति क्षणम् ।
स्फुटकालकूटविषधूसरप्रभा-
　　पटलच्छलेन पृथुकण्ठमण्डलम् ॥१७६॥

591　दहने पुरा क्षितिरथस्य चक्रतां
　　गमितं त्वया शिशिररश्मिमण्डलम् ।
प्रतिबद्धलक्ष्ममलिनोदरच्छवि-
　　स्फुटनाभिरन्ध्रमिव नाथ ! लक्ष्यते ॥१७७॥

592　बहुशो व्यतीतगणनेषु विष्टप-
　　प्रलयागमेषु सुरनाथ ! संभृतम् ।
ग्रहचक्रवालममलं करोति ते
　　[1]स्फटिकाक्षसूत्रवलयप्रयोजनम् ॥१७८॥

593　स्फुटकालकूटविषकूटकंधरा-
　　कृतनीरभारगुरुवारिदभ्रमः ।
उपदेशलाभरभसादिवाग्रतः
　　तव नाथ ! नृत्यति [2]कुमारचन्द्रकी ॥१७९॥

594　करणाङ्गहारविधिभिः सविस्तरैः
　　[3]सकलासु शङ्कर ! निशासु नृत्यतः ।
क्रियते त्वयानुकृतिरात्मनो विभो !
　　सचराचरं जगदवाप्य तस्थुषः ॥१८०॥

---

१. B, C स्फटिकाक्षसूत्रवलये for स्फटिकाक्षसूत्रवलय ।

२. B मयूरः (footnotes) ।

३. C सकलाम्बशङ्कर ।

595 प्रतिपन्नगोत्रघटनः कृतस्थितिः
पितृसद्मनि त्वमनिशं समातृके ।
भगवन्ननादि रज इत्यपि स्फुटं
पुरुषः पुरातन ! इति प्रगीयसे ॥१८१॥

596 तव पादपद्मनखदर्पणोदर-
प्रतिबिम्बितैरपि लघूकृतात्मभिः ।
अधिगम्यते हर ! महत्त्वमानतैः
सकलातिशायिसुरदैत्यमण्डलैः ॥१८२॥

597 ससुरासुरस्य जगतः शरण्यतां
भवतो गतस्य चरणाम्बुजद्वयम् ।
जनता नमत्यवनतापि कुत्रचि-
द्ध्रुवमाशुशुक्षणिशिखेव नैत्यधः ॥१८३॥

598 क्षितितोयमारुतकृशानुभानुम-
द्गगनामृतांशुयजमानमूर्तये ।
भवते मतिध्वनिविकल्पगोचर-
व्यतिवृत्तरूप परमात्मने नमः ॥१८४॥

599 सुधियोऽपि नाथ ! मतिशब्दगोचराः
त्वयि न स्थितिं विदधतीह कल्पनाः ।
गुणलेशसूक्तिषु यतः स्तुतो मया
सतृषापि तद्व्यवसिताद्विरम्यते ॥१८५॥

600 अतिदूरवृत्तिरपि येन दृश्यसे
न हि रूप्यसेऽन्तिकगतोऽपि येन वा ।
प्रतिजृम्भते सुरगुरोरनुग्रहः
स विपर्ययश्च तव केन हेतुना ॥१८६॥

601 अथवास्तु तावदिदमद्भुतास्पदं
तव चेष्टितं प्रतिघशून्यसंविदः।
श्रृणु यन्निधाय मनसि व्यपाश्रिताः
शरणं भवन्तमजमव्ययं वयम् ॥१८७॥

602 सुखमेकदा स्थितवतो हिमाचले
स्मितभिन्नवक्त्रपरिहासपेशलम् ।
गिरिकन्यया निभृतमेत्य पृष्ठतः
करपङ्कजस्थगितमुक्तचक्षुषः ॥१८८॥

603 सहसा विलोचनविनाकृतं पुरा
पुरुषं पुराणपुरुषाच्चदुत्थितम् ।
क्षयकालकालरजनीमुखोच्छ्वस-
त्तिमिरौघबीजमिव नाथ ! शुश्रुमः ॥१८९॥ युग्मम्

604 कृतया तदान्धक इति स्फुटार्थया
स जगत्त्रयप्रथितयाथ संज्ञया ।
तनयार्थिने दितिसुताय दुश्चरं
चरते तपोऽत्र समये ददे त्वया ॥१९०॥

605 अभिगम्य वृद्धिमथ तस्य मन्दिरे
स मनोरमाङ्कपरिवृत्तिलालितः ।
उपचक्रमेऽन्धतमसश्छिदोन्मुख-
श्चरितुं सुदुश्चरमनर्गलं तपः ॥१९१॥

606 चिरकालसंभृतिमता प्रसेदुष-
स्तपसा स लब्धनयनः स्वयंभुवः ।
प्रतिमल्लतारहितदेवदानवं
जगतां प्रभुत्वमनपायमासदत् ॥१९२॥

607 दलितान्धकारनिकरं मरीचिभि-
स्तदुरःस्थले स्थितिमवाप्य वैष्णवम् ।
स्फुरदर्कमण्डलमिवास्तसानुनि
व्रजति स्म चक्रमपि निष्प्रतापताम् ॥१९३॥

608 [1]तेनोर्जितेन विजितस्य हरेरमर्ष-
घर्माम्बुशीकरकणावलिराहवेषु ।
वक्त्रं [2]ममार्ज विकटभ्रुकुटीविभङ्ग-
च्छायामलीमसमिवाविरलं गलन्ती ॥१९४॥

609 सोऽस्माकमीश ! करदीकृतलोकपाल-
लक्ष्मीसमाकुलितशेखरशासनश्रीः ।
बन्दिग्रहं व्यधित केतनकाननाग्र-
नित्यानुबन्धयुगपत्स्थितिबन्धहेतोः ॥१९५॥

610 तत्प्राप्तकालमिह यत्कुरु तत्त्वमन्व-
गायात एव [3]हरिरेष स लोकपालः ।
संसारसागरमपि स्फुटमुत्तितीर्षो-
रेकः प्लवस्त्वमनघः किमुतार्तिदुःखम् ॥१९६॥

611 इति वचनमुदीर्यावाङ्मुखे तत्र तूष्णीं
स्थितवति कृतपूर्वाभ्यागमनां तदानीम् ।
सपदि गणपतीनां क्रोधलीलाप्रवृत्तिः
करतलमलनेन क्षुण्णरत्नोर्मिकासीत् ॥१९७॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवे राजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
महाकाव्ये भगवत्स्तुतिवर्णनो नाम षष्ठः सर्गः ।

---

१. B तेनोद्धतेन for तेनोर्जितेन ।

२. C वक्त्रं समाजविकट ।

३. B हरिरीश for हरिरेष, C left two letters "रेष" with dots.

612 क्रूरक्रुधामथ कराभिहतांसकूट-
मुल्लासितभ्रुकुटि दन्तविघट्टितौष्ठम् ।
तेषामनेकविधघोरविकारचेष्ट-
मातास्रदृष्टि सदसि स्फुरितं[1] तदासीत् ॥१॥

613 विन्यस्तपादभरकम्पितकुट्टिमाग्र-
माघट्टनाविघटितामलमौलिबन्धम् ।
क्रोधः सभां न्यविशताङ्गदकोटिलग्न-
विस्रस्तकोमलदुकूलदशं स्मरारेः ॥२॥

614 [2]वक्षःस्थले गणपतेः कुपितस्य हार-
च्छेदोच्छलद्बहलमौक्तिकपङ्क्तिराधात् ।
[3]प्राग्विद्रुताङ्कशरणागतशत्रुलक्ष्मी-
स्वेदोदबिन्दुबिसरच्छुरितेव शोभाम् ॥३॥

615 छायां किरन्मलिनिताम्बरदिग्विभागा-
माविर्भवद्भ्रुकुटि भङ्गभयानकेन ।
वक्त्रेण [4]कालमुखलः सकलारिलोक-
[5]संहाररात्रिघटनामिव कर्तुमैच्छत् ॥४॥

---

१. B विक्षोभः (footnotes) ।

२. B, C वक्षःस्थली for वक्ष-स्थले ।

३. B प्राक् पूर्वं अकृतेपि रणे भयात्पलायिता (footnotes) ।

४. B गणविशेषः (footnotes) ।

५. C संहारिरात्रिघटनां for संहाररात्रिघटनां ।

616 संरम्भगर्भगुरुमन्युमनाश्चकार
हुङ्कार भैरवरवं युधि वीरभद्रः ।
जृम्भाविकासि विकटाननकन्दरार्ध
भागान्तरालकुहरप्रतिशब्ददीर्घम् ॥५॥

617 उद्दामरोषभर-निर्भरभैरवीय-
भीयन्त्रणारहितहुङ्कृतनादसान्द्राः ।
अंसस्थलाभिहतितारखा भटानां
संन्धिं कथञ्चिदभिदन्न दिवस्पृथिव्योः ॥६॥

618 चिक्षेप पाणिकमलेन रुषा विलूय
विष्यन्दिसान्द्रमकरन्दविलीनभृङ्गाम् ।
कण्ठस्रजं रतरसागतशत्रुलक्ष्मी-
लीलाविघातरभसादिव मेघनीलः ॥७॥

619 क्रूरक्रुधः करतलेन ललाटपट्ट-
मापाटलं मलयतः [1]सदसि त्रिमूर्तेः ।
आलक्ष्यतोपरि तृतीयविलोचनस्य
भ्रूमञ्जरीव नवधूमशिखोत्पतन्ती ॥८॥

620 जिह्मीभवद्भ्रुकुटिपाटलरागदृष्टि-
तिर्यग्विवृत्तवदनं हसितांशुगौरः ।
शौर्योष्मणा प्रथितसारनिरर्गलेन
भस्मीभवन्निव भुजः शिखिनालुलोके ॥९॥

621 वक्त्रं दधद्दशनदंशभयादिवाशु
कम्पाकुलाधरदलस्थिति वज्रमुष्टिः ।
दोर्दण्डमाहत करेण सुरारिभङ्ग-
संरम्भरागविकसत्पुलकप्रबन्धः ॥१०॥

---

१. A, B सपदि for सदसि ।

622 श्वासानिला नतमुखस्य कराभिघात-
भिन्नावनिप्रकटरन्ध्रपथप्रविष्टाः ।
[1]पातालगर्भनलिनीमनलस्य चक्रु-
रुद्धूतशेषफणपाण्डुरपुण्डरीकाम् ॥११॥

623 उत्तंसपुष्पनवकेसर-सान्द्रधूलि-
पिङ्गीकृतो मधुमदेन पपात भृङ्गः ।
निर्मथ्नतः सपदि भृङ्गिरिटेर्ललाट-
मूर्च्छाक्षितारक इवाग्निशिखापिशङ्गः ॥१२॥

624 रोषारुणीकृतदृशो [2]नडकूवरस्य
हुङ्कारधूमपटलीं मुखरन्ध्रभागात् ।
दैत्याधिराजकवलीकरणादरेण
[3]कृत्यामिवैक्षत जनः सहसोत्पतन्तीम् ॥१३॥

625 कण्ठावलम्बिमकरन्दरसातिपान-
विस्रम्भमन्थर-विलीन-शिलीमुखौघा[4] ।
हन्तारिसङ्गर-जलाशय-कुञ्जरस्य
भाति स्म शृङ्खलमिवोत्पलदाम जिष्णोः ॥१४॥

626 निर्यन्नखांशुसलिलौघकृताभिषेक-
मेकं सहायमनघं युधि मन्यमानः ।
बाहुद्रुमं करतलेन परामर्मश
[5]दुर्दर्शमूर्तिरथ कर्शितसर्वलोकः ॥१५॥

---

१. B पाताल एव नलिनी for पातालगर्भनलिनी ।

२. C नलकूबरस्य for नडकूबरस्य ।

३. C महोत्पातकृद्देवताविशेषमिव (footnotes) ।

४. B, C शिलीमुखौघं for शिलीमुखौघा ।

५. C दर्धर्षमूर्ति ।

627 प्रेङ्खल्ललाट-कषणोत्थित-सान्द्रधूम-
लेखानुषङ्गकृतलग्नकबन्धमोहम् ।
तिग्मांशुबिम्बमसुदर्शभयङ्करैक-
मूर्तिः सुमूर्तिरददर्शदकर्शितश्रीः ॥१६॥

628 अन्योन्यगाढमलनेन रराज धूम-
वर्तिच्छटा करपुटाद्वियदुत्पतन्ती ।
ईषद्विनिद्रदलमण्डल-पुण्डरीक-
कोषोदराद्भ्रमरपङ्क्तिरिवाग्निकस्य ॥१७॥

629 क्रोधेश्वरस्य च किरीटकपालपङ्क्ति-
रूर्ध्वेक्षणानलशिखापटलावमर्शात् ।
संहारभानुकर-तापित-शैलकूट-
टाङ्कारताररवमस्फुटदुत्तमाङ्गे ॥१८॥

630 निःशेषमाकुलितशेषशरीरनाल-
माघूर्णमान-विकटाभ्रपलाशखण्डम् ।
चण्डेश्वरस्य सरुषो भुवनारविन्द-
मुष्णोष्णनिःश्वसिततापवशेन मम्लौ ॥१९॥

631 सस्वेदशीकरमकम्पत तालकेतु-
राताम्रतालुतल-भीषणजृम्भवक्त्रः ।
सङ्कल्प-निर्जित-पुरःस्थित-वैरिलक्ष्मी-
[1]गाढोपगूहनवशादुत तीव्रमन्योः[2] ॥२०॥

---

१. B गाढोपगूहनवशादिव for गाढोपगूहनवशादुत ।
C गाढोपगूहनरसादुत for गाढोपगूहनवशादुत ।

२. B, C तीव्रमन्युः for तीव्रमन्योः ।

632 तिर्यग्विवर्तितमुखस्य लुलायकेतो-
हीसच्छटा-धवल-भास्मन-भक्तिचित्रः[1] ।
बाहुर्जयद्विरदहस्त इवारराज
पीनांसकूटविकटोन्नतकुम्भपीठः ॥२१॥

633 सस्यन्दिरे सदसि घर्मजलानि सान्द्र-
सिन्दूरताम्रमुखरागरुचः प्रकोपात् ।
सन्देहितेन्दुकिरणाङ्कुरगौरतार[2]-
हाराच्छबिन्दुपटलानि सुनन्दकस्य ॥२२॥

634 चण्डे च [3]चुक्रुधिषि तच्चरणातिभार-
खेदाकुलोन्नमितपीवरदीर्घदोष्णा ।
शेषेण कुञ्चित-कराल-फणासहस्र-
विस्रंसिनी क्षितिरभारितरां कथञ्चित् ॥२३॥

635 क्रुद्धं मयूरपतिकेतनमंशुजालै-
र्न द्वादशापि ककुभः [4]परिदीपयन्तः ।
संहारवासरमिवातनु-दुर्निरीक्ष्य
रूपं विलोचनसहस्ररुचो[5] न चक्रुः ॥२४॥

636 क्षुण्णाङ्गदारुणशिलाशकलोत्थसान्द्र-
धूलिच्छटापटलकुङ्कुमपङ्कचर्चा ।
पञ्चाक्षकोपविकृतिः कृतमण्डनेव
सस्वेदशीकरकणोत्करमौक्तिकासीत् ॥२५॥

---

१. B भस्मचर्चा (footnotes) ।

२. C… किरणाङ्कुररोपिभार for किरणाङ्कुरगौरतार ।

३. B क्रुद्धे (footnotes) ।

४. B परिदीप्तयन्तः for परिदीपयन्तः ।

५. A कुमारस्य षण्मुखस्य द्वादशैव लोचनानि (footnotes) ।

637 दिण्डैः स्फुलिङ्गकणिकाः [1]सरुषः किरद्भि-
रन्योन्यपाणिमलनोत्थितधूमदिग्धैः ।
नाप्लोषि धूर्जटिसदः कथमप्यथौर्व-
संवादितां विदधतः परुषाक्षिपातैः ॥२६॥

638 विष्यन्दमान-घन-घर्मकणावकीर्ण-
मुच्छ्वासिकुङ्कुम-विलेपनमग्निधाम्नः ।
विभ्रान्त-तारक-विशङ्कट-शातकौम्भ-
शैलाधिराजकटकश्रियमाप वक्षः ॥२७॥

639 निष्पिष्टहार-विधुतोद्धत-धूलिपुञ्ज-
भस्मच्छटाभिररुणच्छविलोचनश्रीः ।
क्ष्मामण्डलं ज्वर इवाकुलयाञ्चकार
दुर्वारकोपविकृतिः[2] सदसि[3]त्रिमूर्धा ॥२८॥

640 भास्वत्फणामणिकणोल्बणवह्निचूर्णा-
कल्माषिताम्बरतलोन्मुखरन्ध्रभागात् ।
वल्मीककूटकुहरादुरगा इवाग्नि-
केतोर्निरीयुरथ हुङ्कृतधूमदण्डाः ॥२९॥

641 आमर्दकस्य सुरवैरिविमर्दिनोऽपि
दिक्कामिनीमुखनवागुरुपत्त्रलेखा ।
हुङ्कारधूमपटली भुवनारविन्द-
कोषोदर-भ्रमरपङ्क्तिरधत्त शोभाम् ॥३०॥

---

१. B निकरान् for सरुषः ।
C निकरा for सरुषः ।
२. B प्रतारोऽपि (footnotes) ।
३. B ज्वरोऽपि त्रिदश एव भस्मप्रहरणश्च ।

642 क्रोधावपिष्टशशभृत्किरणच्छटाच्छ-
हारावली-[1]विवलिताग्निशिखस्य धूलिः ।
[2]संरम्भविभ्रमदिशामुखजृम्भमाण-
लक्ष्मीकपोलतलरोध्ररजश्छटासीत् ॥३१॥

643 ज्योतिष्मतः शिखिशिखानिकुरम्बपिङ्ग-
जिह्मोत्कट-भ्रुकुटिभङ्ग-भयङ्करत्विट् ।
साम्भोभरस्थिरतडिद्गुणमेघशोभि-
वक्त्रं विलोक्य सभया विभयांबुभूवे ॥३२॥

644 तारस्य तारतरहुङ्कृतिरोषगर्भां
विन्यस्यतोऽग्निकपिशां दृशमाशु तिर्यक् ।
तत्तापयोगगलितातनुपत्रभङ्ग-
हेमङ्गदांसशिखरो भुजदण्ड आसीत् ॥३३॥

645 निःशेषमेककवलग्रहसौष्ठवेन
मृत्योरिव त्रिभुवनं सरुषो जिघत्सोः ।
जृम्भाविकासि वदनं विकरालजिह्व-
मालोक्य संसदि [3]विजह्वलुरस्य लोकाः ॥३४॥

646 निःशङ्कहुङ्कृतकृशानुकणावकीर्ण-
विस्तीर्णताम्रतलतालुविजृम्भमाणम् ।
संध्यापिशङ्गमरुणांशुशिखावमर्श-
शोणग्रहं नभ इवोर्जितवक्त्रमासीत् ॥३५॥

---

१. B विःसृता for विवलिता ।
C विलुलिताग्नि for विवलिताग्नि ।

२. B, C संरंभविभ्रमदिशाशु विजृम्भमाण for संरंभविभ्रमदिशामुख····।

३. B त्रस्ताः (footnotes) ।

647　जृम्भाविकासि मुखमग्निमुखस्य ताम्र-
　　जिह्वाकराल-विकटस्फुटदन्तमालम् ।
रेजेऽम्बरीषमिव निर्गतवह्निहेति-
　　[1]पङ्क्तिप्रतिष्ठधवलोदरलाजगर्भम् ॥३६॥

648　दीर्घं विनिःश्वसति [2]तिन्दुकिनीप्रसून-
　　विस्पष्टपाटलदृशि त्रिशिखे समन्यौ ।
आसन्नमेव भुवनप्रलयावतार-
　　माबद्धवेपथुरमन्यत राजलोकः[3] ॥३७॥

649　केयूरचक्रदलनोच्छलदिन्द्रनील[4]
　　खण्डावली करतलाभिहतांसभित्तेः ।
कालस्य कुट्टिमतलाम्बुरुहोपहार[5]-
　　गन्धाकुल-भ्रमरसंहति-विभ्रमाभूत् ॥३८॥

650　सञ्चूर्णिताङ्गदकरालकराहतांस-
　　कूटोत्थनिष्ठुर-विरावविपूरिताशम् ॥
अक्रोधि बोधितसुरासुरचक्रवाल-
　　संहारदुर्धरपराक्रममन्तकेन ॥३९॥

651　चण्डाननस्य करताडनखण्ड्यमान-
　　केयूररत्नकणकोणकणत्कृतिश्रुत्[6] ।
दैत्यक्षयाधिकसरोषकृतान्तदन्त-
　　संघट्टभैरवरवानुकृतिं चकार ॥४०॥

---

१. B पंक्तिरूपेण सन्निविष्टाः ।　(footnotes)
२. B रक्तिका ।　　,,
३. B गणानां लोकः ।　　,,
४. C केयूर चक्रदलनोच्छलितेन्द्रनील ।
५. C""म्बुरुहोपकार ।
६. B कणत्कारशब्दः ।　　,,

652 आघातभग्नविकटव्रणकंधरांस-
कूटीच्छलच्छिथिलिताङ्गदद्दोःप्रचण्डः ।
मृत्योरिव प्रतिकृतिः [1]स चुकोप कोप-
कम्पाकुलोत्पुलक-पीन-कपोलभित्तिः ॥४१॥

653 चक्रायुधं सपदि चुक्रुधिवांसमंस-
कूटावमर्दमृदितोर्मिक-पाणियुग्मम् ।
संहारभास्करदुरीक्ष्यमुखं निरीक्ष्य
नो सस्मरुः स्वमपि जातभियः सुरौघाः ॥४२॥

654 चक्रे दिशो दितिसुताहवमावहेल[2]-
हासोल्लसद्दशनदीधितिचक्रवालः ।
व्यङ्ग्याहितप्रलयपैशुनजृम्भमाणा-
काण्डे (?) तरूत्थकुसुमा इव नीलवज्रः ॥४३॥

655 [3]संरम्भिणा शिखितमस्य पुरः प्रकीर्णं
हुङ्कारवह्निकणसन्ततिमत्तुमैच्छत् ।
क्रीडाशुकः शिखिभुवः परिपाकताम्र-
पिण्डीरपिङ्गकणशङ्कि विमुग्धचेताः ॥४४॥

656 पिङ्गेक्षणस्फुरदकलक[4]मरीचितप्ता-
दुल्काग्निदाहभयविक्लवतामिवाप्तम् ।
भ्रूभङ्गपुञ्जितमधत्त ललाटपट्ट-
माघस्य कुट्टिमतलं चरणेन नन्दी ॥४५॥

---

१. B, C प्रचुकोप for स चुकोप ।

२. B सावहेल ।
C मावलेह ।

३. B, C संरंभिणः for संरंभिणा । ४. विमल (footnotes) ।

657 उत्तानवक्त्रकुहरोत्थितयाट्टहास-
हासत्त्विषा कलुषया बिभरांबुभूवे
प्रेङ्खत्यनर्गलरसातलगर्भनिर्य-
दिन्दुप्रभा-धवलशेषशरीरलक्ष्मीः ॥४६॥

658 रोमाञ्चपूरित-विकम्पि-कपोलभाग-
मुद्वर्तमान[1]पुटतारविपाटलाक्षम् ।
वक्त्रं विदष्टविकटौष्टतिकृष्टनास-
मुद्भ्रूविभङ्गमभृतारुणमभ्रकेतुः ॥४७॥

659 संप्राप्य [2]संनहनमाहवगाढराग-
मुज्जृम्भितः सपदि रोष इवैष साक्षात् ।
पातालगह्वरगभीररवावमर्द-
पार्ष्णिप्रहारविधुरामचकम्पदुर्वीम् ॥४८॥

660 पर्यन्तभाग[3]विलसत्पुलकं बभार
हेतिव्रणं सघनघर्मजलं[4] जयन्तः ।
स्तोकावशिष्टजलतीरविरूढबाल-
शष्पाङ्कुरह्रदसरूपमुरःस्थलेन ॥४९॥

661 व्यावृत्तिवेग-विशरारुकरालहार-
तारावकीर्णमणिकुट्टिमपृष्ठभागः ।
विस्रंसितोडुगणशारितभूमिपीठ-
संहारमारुतविलासमसावलासीत् ॥५०॥

---

१. C.... मुद्वर्तमानपटता for मुद्वर्तमानपुटतार ।

२. B दीर्घभूत (footnotes) ।

A, B उद्योगः शरीरं च ।

३. B, C विकसत् for विलसत् ।

४. C सघनघर्मजले for सघनघर्मजलं ।

662　सामर्षहर्षभरपार्षदपार्ष्णिपाणि-
　　लीलाभिघातविधुरा धरणी रराण ।
पातालतालुनि ससंभ्रम-नागभीरु-
　　गर्भप्रगल्भविनिपातनघोरघोषम् ॥५१॥

663　केयूरचक्रनिकरैस्त्रिदशाधिपाना-
　　मंसावमर्दपतितैर्मणिकुट्टिमोर्वी ।
रेजे पुरंदरकरेरितवज्रपात-
　　विच्छिन्नपक्षतिपुटैरिव भूधराणाम् ॥५२॥

664　दैत्यप्रतापशिखिशान्तिमिव क्षणेन
　　कर्तुं विशङ्कटललाटतटस्थलीभ्यः ।
ते घर्मशीकरकणप्रकरान् सलील-
　　माकृष्य कर्कशरुषश्चकरुः कराग्रैः ॥५३॥

665　जृम्भाविकासघटनाविकटैरपाङ्ग-
　　पर्यन्तनिर्यदतनुज्वलनस्फुलिङ्गैः ।
वक्त्रैर्गणाधिपतयः सरुषः क्षणेन
　　दिक्चक्रमग्रसिषतेव करालदंष्ट्रैः ॥५४॥

666　तेषां विवर्तनभरेण परस्परांस-
　　कूटावघट्टघटनादलिताङ्गदानाम् ।
सस्रंसिरे विकटकुट्टिमसीम्नि रुग्ण-
　　बन्धाः सरोषकरपेषभियेव हाराः ॥५५॥

667　लीलावलोकितकरालकृपाणपट्ट-
　　पर्याकुलोत्पुलककञ्चुकलोकपालम् ।
[1]निष्प्रक्रमं प्रचुकुपे कपिलैः कपोल-
　　भागैः कपालिसदसीति गणाधिनाथैः ॥५६॥

---

१. B विशृङ्खलम् ।

668 [1]प्रत्यासीदत्यपिदश्वासहेला-
क्षिप्तक्ष्माभृत्कूटटांकारघोरा ।
गौरीभर्तुः क्लिष्टसत्त्वा[2] सभा सा
दध्रे कल्पापायवेलानुकारम् ॥५७॥

669 विस्पष्टमुष्टिकरसंकरपिष्टहार[3]-
मुक्ताफलोद्धतपरागविपाण्डुराग्रैः ।
मेघावसानसमयैरिव[4] नाकसद्भि-
रस्तोककोपरचितस्थितिभिर्बुभूवे[5] ॥५८॥

670 अन्योन्यपाणिमलनक्षतपद्मराग-
रत्नोर्मिकोद्धतपरागकणैश्चकार ।
ब्राह्मी जगत्कपिशिताखिलदिक्प्रभात-
वेलेव फुल्लकमला करधूलिपुञ्जैः ॥५९॥

671 क्रोधोद्गताकृशकृशानुशिखासहस्र-
निर्यासभास्वरितरूक्षकटाक्षमोक्षैः[6] ।
त्र्यक्षाकृतिः क्षणमदीपि जगत्त्रयोल्का-
दण्डैरिव त्रिदशसंभ्रममाक्षिपद्भिः ॥६०॥

672 चक्रं सुराहितचमूगलचक्रवाल-
च्छेदाभिलाषरभसादुभ्रमयाञ्चकार ।
चण्डी करालसरलाङ्गुलिकोटिभाग-
लग्नं करे श्रवणपूरमिवाजिलक्ष्म्याः ॥६१॥

---

१. B, C प्रत्यासीदत्यार्षदश्वासहेला ।

२. B प्राणिनः ।

३. A, B, C करसंपुष्टिहार for करसंकरपिष्टहार ।

४. A, B, C मेघावसानदिवसैरिव ।

५. C बभूवे for बुभूवे ।

६. C रूढकटाक्षमोक्षैः for रूक्षकटाक्षमोक्षैः ।

673　[1]दलितमसुरचक्रं क्रोधसंरम्भगर्भं
करकमलविदर्भं वैष्णवी तत्र दध्रे ।
[2]विगलितमकरन्दं पद्मरागोर्मिकाग्र-
क्षतिविधुतपिशङ्गच्छायधूलिच्छलेन ॥६२॥

674　भ्रुकुटिकुटिलितभ्रूविभ्रमव्याजचञ्च-
च्चटुलमधुपवेणीबन्धमाधत्त ताम्रम् ।
मुखमखिलविपक्षक्षोदसंरम्भलक्ष्मी-
करकिसलयलीलापङ्कजं भद्रकाली ॥६३॥

675　इत्थं हारोद्दलनविगलत्तारमुक्ताफलौघ-
ज्योतिश्चक्राक्रमणशबलान् कुर्वती दिग्विभागान् ।
सा वेलेव क्षुभितविषमा रत्नराशेस्तदानीं
स्थाणोर्गर्जद्गणपतिशतोल्लोलजाला सभासीत् ॥६४॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो महाकवे राजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये सभाक्षोभवर्णनो नाम सप्तमः सर्गः ।

---

१. B विमर्दित ।

२. C विरलित for विगलित ।

676 इत्थं गणाधिपतिकोपकृशानुशान्ति-
हेतोरिवेन्दुमणिहारलतागुणेषु ।
मुञ्चत्सु शङ्करकिरीटकरालचन्द्र[1]-
खण्डांशुपातवशतः शुचिवारिवर्षम् ॥१॥

677 प्रालम्बमौक्तिक-परिस्फुरदंशुजाल-
ज्योत्स्नातपच्छुरणपाण्डुरितान्तरासु ।
पीतारिपक्षशशिशुभ्रयशःस्विवासि-
यष्टिष्वनेकभटपाणितलस्थितासु[2] ॥२॥

678 माणिक्यकन्दुकममन्दरवीन्दुबिम्ब-[3]
शोभाधरं करतलाग्रविवर्तनाभिः ।
[4]आलानितस्य भुजकल्पतरौ विधान-
पिण्डं दिशन्निव पराक्रमकुञ्जरस्य ॥३॥

679 पर्यङ्कबन्धघटनाविकटेन काल-
[5]कायश्रिया विषधरेण परीतमूर्तिः ।
पर्यन्तवर्ति दलिताञ्जन-धूलिपुञ्ज-
सच्छायसिन्धुपरिखक्षितिमण्डलश्रीः ॥४॥

---

१. C किरीटकरालचक्रं for किरीटकरालचन्द्र ।

२. B, C पाणितले स्थितासु for पाणितलस्थितासु ।

३. B....नवेन्दुबिम्ब for रवीन्दुबिम्ब ।

४. B वद्धस्य (footnotes) ।

५. B कायत्विषा for कायश्रिया ।

680　आकृष्य कालमुसलो मुसलं[1] सलील-
　　मामांसलांसशिखरस्खलदुत्तरीयः[2] ।
वाक्यं निरर्गलमुदाहरदभ्रनाद-
　　साशङ्क-ताण्डवित-षण्मुख-नीलकण्ठम् ॥५॥　पंचभिः कुलकम्

681　येषामवस्तुविषयः प्रथितः किलात्म[3]-
　　लाभः परस्परकृतः प्लवमानवृत्तिः ।
दूरं व्यतीत्य निखिलान् खलु तान्विकल्पा-
　　ञ्शब्दांश्च यः स्थितिमसंकरमूर्तिरापत् ॥६॥

682　येनासकृत्प्रलयकालनिशावतार-
　　प्रारब्धताण्डवनिरर्गलडम्बरेण ।
उत्क्षिप्तमम्बरमिवापरमूढसांध्य-
　　रागं विनिर्गलदसृग्द्विपचर्म बभ्रे ॥७॥

683　यस्याभ्रसिन्धुसलिलोर्मिघटासमीर-
　　[4]पर्यस्तमूलपरिवर्तिकिरीटचन्द्रम् ।
च्छेदाभियुक्तकरजाग्रमिवैति लक्ष्मी-
　　मद्यापि मूर्ध्नि परमेष्टिशिरःकपालम् ॥८॥

684　यस्याद्रिराजसुतया रतिमण्डलेषु
　　विन्यस्तयावकरसः करजः सलीलम् ।
हेलाविलूननलिनासनवक्त्रनाल-
　　विष्यन्दिसान्द्ररुधिरार्द्र इवालुलोके ॥९॥

---

१. C मुसलो सलील for मुसलं सलील ।

२. C''''स्खलदुत्तरीयं for स्खलदुत्तरीयः ।

३. A, B किलार्थलाभः for किलात्मलाभः ।

४. C, B पर्याप्तमूल for पर्यस्तमूल ।

685 संध्याशु यस्य नयनाग्निशिखासहस्र-
[1]सीमन्त्यमानतिमिरं सुरवर्त्म धत्ते ।
पर्यन्तवर्तिसलिलस्फुरदौर्ववह्नि-
हेतिप्रकाश कपिशोदरसिन्धुलीलाम् ॥१०॥

686 यस्योर्ध्वलोचनमनिन्धनधूमराशि-
रध्यास्त एतदनपेक्षितरेणुलक्ष्मा[2] ।
अक्षुण्ण एव दहनः स्खलदुत्तमाङ्ग-
गङ्गाजलोक्षणशमानुगुणेतरार्चिः ॥११॥

687 यस्य व्यलोक्यत सुरैः पुरदाहकाले
हेलोर्ध्वकृष्टमभिसंहितसाग्निबाणम् ।
बाणासनं सरलसङ्गभुजङ्गधौण-
भास्वत्तृतीयनयनभ्रुकुटीकरालम् ॥१२॥

688 लीलाकिरातवपुषो ददृशे शरीर-
च्छाया च यस्य रभसेन[3] वनेचरौघैः ।
अन्तर्निगूढगलगोचरकालकूट-
कूटप्रभापरिणतेरिव मेचकश्रीः ॥१३॥

689 मुक्तेऽपि कारणकिरातवपुष्युदग्नि-
नेत्रप्रभारुणितमौक्तिकहारलेखम् ।
यस्याद्रिराजदुहिताभिमुखी बभार
गुञ्जाफलस्रगुपगूढमिव स्तनाग्रम् ॥१४॥

690 माधुर्यमक्षतगुणं दधतं रसस्य
संक्षोभिताखिलसुरासुरचक्रवालम् ।
[4]अक्षुण्णमेव मकरध्वजमूर्ध्वचक्षु-
रौर्वानलः सपदि यस्य विभोरघाक्षीत् ॥१५॥

---

१. B द्विधा क्रियमाणम् । (footnotes) । २. B वायुः ।
३. C रभसं न वनेचरौघैः । ४. B समस्तमेव (footnotes) ।

691 न स्पृश्यतेऽपि कमलप्रभवो यदीय-
मायाकवाटपुटपाटनपाटवेन ।
अस्मिन् प्रभौ त्रिभुवनस्य निकारलेश-
संभावनापि कुरुते परतोऽनुतापम् ॥१६॥ एकादशभिः कुलकम्

692 [1]अस्याहवे क इह शूलमिदं सहेत
शाखानलक्वथनदुःस्थित-सागराम्भः ।
बिभ्रज्जगत्कवलनोत्थितकालरात्रि-
कोपोत्कट-भ्रुकुटिभङ्ग-भयङ्करत्वम् ॥१७॥

693 एतत्करास्पदमरालशिखाकराल-
शाखान्तरालतरलानलविस्फुलिङ्गाः[2] ।
एतस्य मुञ्चति जगत्क्षयकालवह्नि-
बीजच्छटा इव दिशो दश शारयन्तीः ॥१८॥

694 पश्यत्सु भीतिविधुरं विबुधाधिपेषु
तीक्ष्णाग्रकोटिकरजक्रकचेन कोपात् ।
अस्योच्चमाङ्गमरविन्दसदो[3]ऽप्यमन्द-
मुच्छिन्दतः सदसि कः प्रतिबन्धकोऽभूत् ॥१९॥

695 दंष्ट्राकरालमुखकन्दरकोटिभाग-
हेलाविदारितगजासुरघोरमूर्तिः ।
पञ्चाननत्वमनघं सुरसिंह एष
चूडाशशाङ्ककलिकासटया बिभर्ति ॥२०॥

---

१. C अस्यावहे for अस्याहवे ।

२. B स्फुलिङ्गाशब्दः स्त्रीलिङ्गोऽप्यग्निकणवाचकः (footnotes) ।

३. B ब्रह्मणः ।

696 अस्य स्थिता शिरसि शेखरचन्द्रखण्ड-
संपर्कशीततरतुङ्गतरङ्गभङ्गा ।
उद्दामधाम-रविशोषित-सप्तसिन्धौ
संशोषमेति न जगत्प्रलयेऽपि गङ्गा ॥२१॥

697 अस्य क्षयेष्वलिकलोचनतीव्रवह्नि-
तापस्फुटत्कनककर्परदर्पणाग्रे ।
विस्पष्टमद्रितनया वदनं विलोक्य
पद्मासनाण्डमखिलं सफलीचकार ॥२२॥

698 संवर्तकालरजनीषु विजृम्भमाण-
मस्यालिमेचकरुचि स्फुरदेतदास्यम् ।
विश्वं विशत्प्रलयमेति तदन्धकार-
बीजायमानमभितो दिशि दक्षिणस्याम् ॥२३॥

699 दूरेऽस्थवैष विषयीकृतसप्तलोक-
दुःखानलप्रभव-भावविकारशून्यः[1] ।
आस्तामशेषमहदादिविशेषनिष्ठ-
विश्वोदयस्थिति विनाशदशैकहेतुः ॥२४॥

700 [2]लक्ष्मीमपूरितपदत्रय एव दैत्य-
नाथस्य संप्रति बलेरिव शार्ङ्गपाणिः।
पश्यत्सु दानवभटेष्वहमाक्षिपामि
चक्रांशुपिञ्जरित-पीवरबाहुदण्डः ॥२५॥ युगलकम्

701 क्षुन्दन् रिपोर्विघटमानदृढास्थिसंधि-
बन्धांश्चमूपरिवृढानहमूढरोढः ।
कालस्य किं मुसलतामधुना विधाय
नाम्नो बिभर्मि युधि तत्पुरुषार्थतत्वम् ॥२६॥

---

१. B षड्जन्मादयः ।

२. B त्रीणि पदानि यावन्त पूर्यन्ते यैरेतावल्लक्ष्मीं हरामीत्यतिलाघवोक्तिः ।

702 पर्यन्तवर्तिजलराशितरङ्गभङ्ग-
चीनांशुकारचितचञ्चलचीरचिह्नम् ।
क्ष्मामण्डलं करगृहीतसुमेरुदण्डो
लीलातपत्रमिव किं सहसोद्धरामि ॥२७॥

703 दिक्सुन्दरीरुपदिह्यानमहानिभाग्भि-
रच्छाच्छचन्दनरसैरिव मां यशोभिः ।
पश्यन्तु संप्रति भटा दृढपार्ष्णिघात-
पर्यस्तहेमगिरिभग्नसुरारिसंस्थम्[1] ॥२८॥

704 एको भुजः सरसचन्दनपङ्कदिग्धः
कर्तुं क्षमो विरहिणोर्मम दक्षिणोऽयम्[2] ।
कम्पाकुला मलयवायुरिवाततायि-
नारीलता गलितबाष्पकणौघपुष्पाः ॥२९॥

705 दिक्चक्रवालरभसग्रहणप्रगल्भ-
दैत्यान्धकारनिकरव्यवधानमग्नाम् ।
भास्वानिवाशु दिवसच्छविमुद्धरामि
जिष्णोः श्रियं रुधिरपाटलमण्डलाग्रः[3] ॥३०॥

706 [4]स्वेदच्छटार्द्रकरपिष्टकरालहार-
धूलिच्छटारुधिरचन्दनपङ्कचर्चाः ।
नेष्यन्ति शोषमचिरान्मरुतो ममारि-
बन्दीकरावधुतचामरमण्डलोत्थाः ॥३१॥

---

१. A, C सुरारिचक्रं for सुरारिसंस्थम् ।

२. B दक्षिणा दिक् प्रसृतश्च (footnotes) ।

३. B खड्गः (footnotes) ।

४. C स्वेच्छटार्द्रकरपुष्ट for स्वेदच्छटार्द्रकरपिष्ट ।

707　कम्पाकुलीभवदनेकपलोकपाल-[1]
　　पालीकपालदलनोत्पुलकं कपोलम् ।
एकोऽपि कोपकपिलं दधदुत्कृपाण-
　　पाणिः कृणोमि[2] करुणाकृपणोऽरिचक्रम् ॥३२॥

708　गाम्भीर्यशालिषु रणाम्बुरुहाकरेषु
　　मुक्त्वा गुणान् भवति किं करलग्नमन्यत् ?
[3]पङ्काविला विसलता इव दैत्यराज-
　　सेना वृषाङ्क ! मम खण्डयतो विशङ्कम् ॥३३॥

709　संरम्भिणो मम विधूततमालखण्ड-
　　च्छायासु दानववरूथवतीषु संख्ये ।
निस्त्रिंशयष्टिषु निदाघरुचेरिवासु
　　तेजोऽधुना स्फुरतु तिग्मतरप्रतापम्[4] ॥३४॥

710　बिभ्रत्यभीक्ष्णमतिशायि हि सौकुमार्यं
　　शक्ता न [5]कण्टककृतां क्षतिमेव सोढुम् ।
[6]विस्मापिनी विनिदधातु निशातखड्ग-
　　धारापथेन पदमस्खलितं [7]न लक्ष्मीः ॥३५॥

---

१. B गजारूढलोकपालपंक्तेः कपालदलनेनोद्धतपुलकं लोकपाला अपि दैत्यारवजाताः (footnotes) ।

२. C करोमि for कृणोमि ।

३. C पङ्काभिलाविसलता इव ।

४. B, C तिग्मकरप्रकाशम् for तिग्मतरप्रतापम् ।

५. B चौराः सुवर्णकारादयः (footnotes) ।

६. B, C विस्मायिनी च विदधातु for विस्मापिनी विनिदधातु ।

७. B काकुः विनिदधात्येव ।

711 [1]द्वारि श्रियो मम भुजार्गलदण्ड एष
[2]निःस्यन्दतां नयतु संप्रति संप्रहारे ।
[3]अन्योन्यमात्तघटनावतनू कवाट-
पट्टाविवोभयवरूथवर्तीनिवेशौ ॥३६॥

712 लीलावराह इव [4]निर्वरपीवरांस
कूटस्फुरत्प्रविकटाङ्गद एष बाहुः ।
[5]पर्यस्तकाञ्चनगिरिः क्षपयन् विपक्षा-
नुज्जृम्भतां मम नवाम्बुदमेचकश्रीः ॥३७॥

713 अन्योन्यमत्सरदु[6]रुत्सहबाहुदण्ड-
दर्पोदयोद्धुरसुरासुरकृष्यमाणाम् ।
लक्ष्मीमुपेन्द्र इव मन्दरशैलमूर्ति-
मेकः करोमि भुजपञ्जरसन्निबद्धाम् ॥३८॥

714 स्वच्छं यशोनिवहमावहतु त्रिलोकी-
लीलात्मदर्शमचिरेण विशेषतो मे ।
सङ्ग्रामधामनिहितातनुबाहुदण्ड-
दर्पोद्धताहितचितारजसैव हस्तः ॥३९॥

---

१. B रणे (footnotes) ।

२. B निस्पन्दतां for निस्यन्दतां, निश्चलतां (footnotes) ।

३. C अन्योन्यमात्तघटनार्थतनू for अन्योन्यमात्तघटनावतनू ।

४. B निर्भरपीवरांस for निर्वरपीवरांस ।

५. B, C पर्यस्तकाञ्चनगिरिः for पर्यन्तकाञ्चनगिरिः ।

६. C ··दुरुद्वहबाहुदर्पो for दुरुत्सहबाहुदण्ड ।

715 शक्नोत्यनुग्रहमभीक्ष्णमपग्रहं[1] च
कर्तुं महान्निह [2]महतः समये महस्वी ।
भानुः क्षये विपरिपूरयतीन्दुमाशु
विच्छायतां च नयति प्रसभं प्रभाते ॥४०॥

716 अम्भोदराजिमलिनातनुकालकूट-
लेखेव मन्मथरिपोः समवर्तिसीमा[3] ।
[4]कण्ठग्रहं समरवर्त्मनि पूर्वदेव[5]
नाथस्य संप्रति करोतु ममासियष्टिः ॥४१॥

717 ते कूटशल्मलिविशङ्कटकण्टकौघ-
तीक्ष्णाग्रनिष्ठुरनिकर्तुनिकृत्तकण्ठाः ।
नालोकिता प्रभुविपत्तिरितीव नाथ !
नृत्यन्तु संभृतमदः समरे कबन्धाः ॥४२॥

718 आयोधने श्रवणतालविधूतकुम्भ-
सिन्दूरधूलिपरिपाटलितं मदाम्भः ।
मुञ्चन्तु शोणितमिव प्रतिपक्षचक्र-
सेनाविनाशपिशुनं[6] गजगण्डमेघाः ॥४३॥

719 तस्याधुनैव पिशिताशनलोभलग्न-
हेलोल्लसद्विकटकङ्कमुखैः[7] शरीरात् ।
[8]आकृष्टशक्त-शकलौघ-शलाकमस्तु
सानाथ्यलग्नमिव नाथ ! शकुन्तचक्रम् ॥४४॥

---

१. B निग्रहं (footnotes) । २. B भवतः for महतः ।
३. B यममार्गः । ४. C आलिङ्गनमपि ।
५. B पूर्वदैत्य for पूर्वदेव ।
६. B, C सेनाविनाशपिशुनां for सेनाविनाशपिशूनं ।
७. B पक्षिविशेषमुखैः शल्योद्धरणसाधनैश्च ।
८. C आकृष्टशस्त्र for आकृष्टशक्त ।

720　किं वा मया भुवनकाननसीमदाह-
　　दावाग्नयो रिपुचमूचमरीमृगेन्द्राः ।
तिष्ठन्त्यमी दितिजराजसमिज्जयश्री-
　　केशग्रहोत्सुककरास्तव देव ! योधाः ॥४५॥

721　खर्वीकृताद्रिजलनिर्भरवारिगर्भ[1]-
　　गम्भीरभैरवरवोल्वणवारणासु ।
[2]निर्वर्ण्यतां समरनिर्वरवीरभद्र-
　　दुर्वारता वरद वैरिवरूथिनीषु ॥४६॥

722　शत्रूत्तमाङ्ग-शकलीकृतिमुच्यमान[3]
　　रक्ताम्बुसेक-सुकुमारतरादभीक्ष्णम् ।
खड्गालवालवलयात्सशिथिलीमुखौघ-
　　सङ्ग्रामकाननतले चिरमुल्लसन्ती ॥४७॥

723　आश्रित्य शूरभुजपादपमिन्दुगौर-
　　च्छायं यशःकुसुमराशिमुपादधाना ।
विस्तारिणा[4] फलभरप्रसवैकहेतु-
　　र्लक्ष्मीलता सपदि वृद्धिमुपैतु नूनम् ॥४८॥　　युग्मम्

724　तेजस्विनः समुदिताः स्फटमेकमेव
　　धुर्यावलम्बनमिहोज्ज्वलयन्ति कार्यम् ।
[5]संहारकालसविशेषरुचोऽतितीव्र-
　　मुष्णत्विषो दिनमिवोदयदुर्निरीक्ष्याः ॥४९॥

---

१. B मेघ (fototnotes) ।　　२. B अवलोक्यतां ।
　C निर्वर्त्यतां for निर्वर्ण्यताम् ।

३. C शकलीकृतमस्य मान ।

४. B, C विस्तारिणीफल भर for विस्तारिणां फलभर ।

५. C संहारकालमविशेष for संहारकालसविशेष ।

725 आकर्णनाकुलघनध्वनिमोहमन्द-
मन्दाकिनीपुलिनमन्दिरराजहंसम् ।
आकोपकम्पितसुरासुरचक्रवाल-
मुक्त्वेति कालमुसलो वचनं व्यरंसीत् ॥५०॥

726 स वचनकुरुविन्दव्यञ्जितोद्दामधाम-
व्यतिकरगुरुभास्वच्चित्ररत्नस्तदासीत् ।
सदसि गणपतीनां सूचितान्तर्विवक्षा-
स्फुरदधरपुटानां वक्त्रविन्यस्तदृष्टिः ॥५१॥

727 अथ सकलतदीयोर्जस्विवाक्यप्रपञ्च-
श्रवणपुलकिताङ्गो वीरलोकश्चचाल ।
[1]उपनतरणलीलानिश्चयास्फालितांस-
स्फुटितरुचिररत्नच्छायकेयूरबाहुः ॥५२॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये कालमुसलदण्डव्याहृतिवर्णनो नामाष्टमः सर्गः ।

---

१. C उपगतरणलीला for उपनतरणलीला ।

## नवमः सर्गः

728 इति स्थिते वाक्यमुदीर्य दैत्य-
सङ्ग्रामकार्यैकरसे गणेन्द्रे ।
स्फुरद्द्विवक्त्राकुलितांसकूटः
प्रभामयः शान्तमिदं बभाषे ॥१॥

729 यस्योद्धतान् विद्विषतः समूल-
घातं घ्नती योधजनेन नीतिः ।
अलब्धयुद्धोत्सवसंमदेन
प्रज्ञापरिस्पन्दगुरुर्जगाहे ॥२॥

730 सविभ्रमोल्लासितखड्गवल्ली-
घनान्धकारावृतादिङ्मुखेषु ।
एकाकिनैव भ्रमता सलीलं
न येन भीतिर्ददृशे रणेषु ॥३॥

731 अगाधसत्त्वास्पदतां गतेन
शून्यत्वदोषाद्धृदयेन यस्य ।
विस्तीर्णतालेशलवान्वयेऽपि
न साम्यमाकाशमुपाजगाम ॥४॥

732 अवेक्ष्य लक्ष्मीं विकचारविन्दे
सरस्वती यस्य कृतप्रतिष्ठाम् ।
तत्स्पर्धयेवातनुसौकुमार्यं
पर्याप्तशोभं मुखमध्युवास ॥५॥

733 यस्याभियोगेषु रजांस्यनीक-
विमर्दजातानि दिशः प्रसस्रुः ।
निम्नावकाशेष्ववपूर्य कीर्ति-
सञ्चारयोग्यामिव कर्तुमुर्वीम् ॥६॥

734 यो बाहुमत्यूर्जितवैरिवृन्द-
विमर्दरागोद्धुरमाहवेषु ।
सदैव बद्धास्पदराजलक्ष्मी-
स्पर्शादिवोत्कण्टकितं बभार ॥७॥

735 येनाभयं निर्जयनप्रमूर्ते-
र्विद्वेषिणः संयुगमूर्ध्नि दत्त्वा ।
हराट्टहासच्छविदिक्पुरन्ध्री-
पट्टांशुकं चारु यशो गृहीतम् ॥८॥

736 आकर्णकृष्टातनुचापमुक्ता
निपेतिवांसो युधि यस्य बाणाः ।
विच्छिन्नजीवानि शरासनानि
वपूंषि चारातिजनस्य चक्रुः ॥९॥

737 प्रकाशिताशेषदिशेक्षणेषु
कालाञ्जनं मत्सरकामिनीनाम् ।
चिरं यशश्चन्द्रिकयान्धकार-
मारोप्य रोषादिव यस्य भग्नम् ॥१०॥

738 आभाषमाणस्य गभीरघोषं
दन्तप्रभा तस्य मुखं तदानीम् ।
विभूषयामास विनिष्पतन्ती
ज्योत्स्नेव बिम्बं परिपूर्णमिन्दोः ॥११॥ दशभिः कुलकम्

739 अलं तवाभ्युन्नतधैर्यवृत्तेः
संरम्भितामेत्य कृशेऽपि कार्ये ।
संभाव्यते किं कलविङ्कपक्ष-
स्वाभिघातेन कुलाद्रिकम्पः ॥१२॥

740 ज्याकृष्टिचक्रीकृतकार्मुकस्य
समाधिभङ्गे मदनस्य दीप्ता ।
तारेव संरम्भवतस्तृतीया
विपत्करी यस्य बभूव दृष्टिः ॥१३॥

741 बिभर्ति गुर्वीं जगतो धुरं यः
सर्गस्थितिप्रत्यवहारकार्ये[1] ।
अस्मिञ्शरण्येऽपि सुरासुराणां
स्थितेऽत्र वो ब्रूत किमाकुलत्वम् ॥१४॥ युग्मम्

742 मन्ये निमीलन्नयनारविन्द-
मेतद्विभोः पश्चममस्य[2] वक्त्रम् ।
जगद्धितादेव न किञ्चिदन्य-
द्ध्येयात्मनश्चिन्तयतीन्दुमौलेः ॥१५॥

743 विभाति हारोरगरत्नखण्डै-
रेष क्षयग्रस्तसुरासुरौघः ।
सर्गावतारप्रतिमुच्यमानै-
र्जीवैरिवाद्याप्यविमुक्तकण्ठः ॥१६॥

---

१. B प्रलयकाले (footnotes) ।

२. B ईशानाभिधानम् (footnotes) ।

हरिहरस्वरूपचित्रणम्

744 विभर्ति नारायणमूर्तिरेष-
सर्वाङ्गसन्धिप्रसृताः स्रवन्तीः[1] ।
[2]इतीव बद्धभ्रुकुटिस्तरङ्गै-
श्चकार केशग्रहमस्य गङ्गा ॥१७॥

745 तनोति [3]भागान्तरकेशलग्न-
जीमूतनिर्मुक्तजलौघलक्ष्मीम् ।
कपालमालाकुहरोदरेषु
सुरापगा नाकतलात्पतन्ती ॥१८॥

746 अम्भोधरश्यामलमर्धभाग-
निषण्णनारायणवक्त्रबिम्बम् ।
ललाटवेदी शिखिसान्द्रधूम-
[4]च्छायापरामृष्ट इवैति लक्ष्मीम् ॥१९॥

747 सान्द्रीभवत्युत्कटकालकूट-
च्छायानुविद्धाञ्जनमेचकश्रीः ।
[5]अव्यञ्जितानुल्बणभागसंधिः
कण्ठान्तरस्य च्छविरुल्लसन्ती ॥२०॥

748 शिरःस्थलभ्रंशिसुरस्रवन्ती-
निषेवणाभ्यागतहंसलीलाम् ।
शरीरभागान्तरपाणिपद्म-
बद्धप्रतिष्ठोऽञ्चति पाञ्चजन्यः ॥२१॥

---

१. B नदीः (footnotes) ।   २. B इतीह for इतीव ।

३. B वैष्णवभाग (footnotes) ।

४. C छायाधरामृष्ट for छायापरामृष्ट ।

५. B सवर्णत्वादप्रकटितो मसृणो भागयोः संधिर्यत्र ।

749 स्थितिं विधत्ते सभया कथञ्चि-
द्वक्षः स्थलार्धे विनिमीलिताक्षी ।
विलम्बिहारोरगफूत्कृताग्नि-
ज्वालातडिद्विस्फुरणेषु लक्ष्मीः ॥२२॥

750 संप्रेरितार्धस्य च वक्षसोऽन्तः
शरीरभागेन जगत्सशम्पम् ।
संपादयद्दीधितिचक्रवालं
तुच्छत्वमागच्छति कौस्तुभस्य ॥२३॥

751 टङ्काहतोष्णद्युतिमण्डलोत्थ-
स्फुलिङ्गसन्तान इवाभिरामः ।
हारोरगाणां फणरत्नखण्ड-
स्तस्यैव धत्ते परिवारलीलाम् ॥२४॥

752 प्रक्षाल्यतेऽन्तर्विनिगूढनाभि-
ह्रदप्रतिष्ठाम्बुजबीजकोषः ।
पीठः ससत्कारमिवाब्जयोनेः
कुक्षिप्रविष्ठोदधिवीचिभङ्गैः ॥२५॥

753 त्रयोऽपि लोकाः प्रतिपत्तुमैक्य-
मर्हन्ति मूर्त्योरनयोरितीव ।
विवक्षयोदेति निगूढसंधि-
भागा वलीनां त्रितयस्य लक्ष्मीः ॥२६॥

754 इत्येष मिश्रीकृतकैटभारि-
शरीरभागो विभुताविशेषम् ।
व्यनक्ति लोकत्रितयेऽप्यशेष-
मनन्यसाधारणतामुपेतम् ॥२७॥ दशभिः कुलकम्

755 ग्रासीकृतानन्तफणप्रकाण्डै-
ज्वालाकलापैः स्फुरितं कृशानोः ।
विस्रब्धमारब्धसितारविन्द-
सहस्रहोमैरिव वाडवस्य ॥२८॥

756 ज्वालावलीभिः कलधौतशैल-
शिलोन्नताभिः कृततापयोच्चैः ।
गभीररन्ध्रोदरसंप्रविष्ट-
कुलाद्रिकूटं स्फुटितं धरित्र्या ॥२९॥

757 विलीयमानासु हिमस्थलीषु
तुषारशैलस्य वनानि दग्धुम् ।
टाङ्कारतारारवरौद्रहेति-
र्भवत्यवाप्तप्रसरः कथञ्चित् ॥३०॥

758 निर्वापणं रत्नलतांशुतोयै-
र्ज्वालावलीनामिव संविधित्सून् ।
दहत्यमन्दं सुरशाखिनोऽपि
धूमच्छटासंशयितद्विरेफान् ॥३१॥

759 जटानिकुञ्जास्पदमिन्दुमौले-
स्तच्छाययेव च्छुरितं कपालम् ।
ज्वालाकलापान्तरसंनिरुद्धं
विनिर्दहत्युष्णमरीचिबिम्बम् ॥३२॥

760 शशाङ्कबिम्बं प्रथमावलग्न-
धूमच्छटाविभ्रमलक्ष्मलेखम् ।
विष्यन्दिसान्द्रामृतबद्धदुग्ध-
धाराहुतिः प्लुष्यति विप्लुतार्चिः ॥३३॥

761 ताराकुलं सान्द्रशिखासहस्र-
ताम्रातपापादितपिङ्गिमारात् ।
दहत्यलं शारितदिग्विभाग-
स्फुलिङ्गसन्दोहविनिह्नुतं सत् ॥३४॥

762 माञ्जिष्ठरागारुणचामरौघ-
विडम्बिभिर्भीतमरुद्भिर्धूतैः ।
शिखाशतैस्तत्क्षणपार्श्वलग्नै-
र्दहत्यमन्दप्रसरः सुरेन्द्रम् ॥३५॥

763 चतुर्मुखस्यातनुकर्णिकाग्र-
करालपर्यन्तविघूर्णितार्चिः ।
भस्मीकरोति क्षणदीप्ररूप-
पक्ष्मच्छदः विष्टरपुण्डरीकम् ॥३६॥

764 इति क्रमाद्भस्ममयंस्त्रिलोकी-
मनेकशोऽमुं प्रलयागमेषु ।
उद्धूलनाविभ्रमभूतिचर्चा-
संपादनेनोपचार वह्निः ॥३७॥ दशभिः कुलकम्

765 रसातले गाढनिवेशिताङ्घ्रिः
किञ्चिन्नराबन्धुरकन्धराग्रः ।
ससौष्ठवं पृष्ठपुटं बिभर्ति
कूर्मः समारोपितमन्दराद्रिः ॥३८॥

766 अन्योन्यविद्धाङ्गुलिचक्रवाल-
दोर्दण्डमध्ये भ्रमतो मुरारेः ।
शैलस्य तत्पार्श्वविघट्टनेन
प्रकोष्ठरत्नाभरणैर्विशीर्णम् ॥३९॥

767　विभान्ति सन्दानितदन्दशूक-
　　विकृष्यमाणस्य गिरेः सुधार्द्राः ।
　विघूर्णमानप्रतिमाच्छलेन
　　तरङ्गभङ्गा इव मथ्यमानाः ॥४०॥

768　आशीविषाकर्षणगाढकाष-
　　कृशीभवन्मध्यपरिच्युताभिः ।
　शैलस्य निम्नान्तरवर्तिनीभि-
　　र्नितम्ब एवोपचितः शिलाभिः ॥४१॥

769　दैत्येन्द्रनिष्पीडितकण्ठपीठ-
　　फुल्लत्फणामण्डलफूत्कृतोत्थैः ।
　क्षयार्कबिम्बैरिव वीचिचक्र-
　　मापीयते भोगिपतेः स्फुलिङ्गैः ॥४२॥

770　सुरासुराकर्षणघूर्णमान-
　　मन्थाचलाघातविशीर्यमाणा ।
　तरङ्गपङ्क्तिः शरणार्थिनीव
　　गृह्णाति वेगेन दिशश्चतस्रः ॥४३॥

771　उत्तस्थुषीं तोयनिधेश्च लक्ष्मीं
　　चेतोविकल्पैः परिरिप्सुनारात् ।
　आलिङ्ग्यते मन्दर एव गाढं
　　भुजोपपीडं गरुडध्वजेन ॥४४॥

772　वैकुण्ठदोर्दण्डदृढोपगूढा
　　विवेपते मन्दरशैलमूर्तिः ।
　कौशेयसंकाशनितम्बभित्ति-
　　विस्रंसमानामलनिर्झराम्भाः ॥४५॥

773 क्षणं दधानामृतलाभगर्भ-
विस्रंससंभावनविप्रलम्भम् ।
संवादि तद्वल्गुणाभ्युदेति
सुराधिपानां दयिता सरिस्नु त् ॥४६॥

774 उत्तिष्ठति प्रांशुनवप्रवाल-
वल्लीनिकुञ्जग्रथिता मुहूर्तम् ।
लेखामला धूर्जटिजूटकोटि-
निवासयोग्यामिव कुर्वतीन्दोः ॥४७॥

775 माणिक्यपुष्पोच्चयलग्ननारी-
कचाग्रसंक्रान्तमिवारुणत्वम् ।
प्रवालवल्लीवलयेषु बिभ्रत्
सलीलमुत्तिष्ठति पारिजातः ॥४८॥

776 क्षोदोच्छ्वसद्विद्रमरेणुभङ्गो
मुहूर्तलग्नः सुरवारणस्य ।
आलानलीनोन्नतशातकौम्भ-
स्तम्भत्वमागच्छति मन्दराद्रिः ॥४९॥

777 निर्दह्यमानो भिषजेव किंचित्
स्थानान्तरेष्वौर्वहुताशनेन ।
उच्चैःश्रवा धूतसटासहस्रः
सवेगमुत्तिष्ठति वीचिमध्यात् ॥५०॥

778 शशाङ्कगौरादपि दुग्धसिन्धो-
रभ्युद्गतः श्यामरुचिर्विषौघः ।
ग्रासीकृतः कण्ठगतोऽस्य धत्ते
प्रभाभिरिन्दीवरदामलीलाम् ॥५१॥ चतुर्दशभिः कुलकम्

## त्रिपुरदाहचित्रणम्

779 चक्रीभवन्मण्डलमुष्णरश्मे-
रिन्दोश्च धत्ते पृथुरन्ध्रमध्यम् ।
आसन्नदैत्येन्द्रविनाशवल्ग-
दुत्पातशंसीव भयङ्करत्वम् ॥५२॥

780 रथप्रतिष्ठोष्णमरीचिताप-
परिप्लुता वेदमयास्तुरङ्गाः ।
मुहुर्वलद्ग्रीवविवृत्तलोल-
पार्श्वक्रमात् कूबरिणं वहन्ति ॥५३॥

781 चक्रीकृतोष्णांशुशिखाकृशानु-
र्हेतिप्रतानाहितपाककाष्ठा ।
सशैलकीला वसुधा रथत्व-
मापादिता गाढमुपैति दार्ढ्यम् ॥५४॥

782 व्रजन्नगस्त्येन पुरार्कमार्ग-
रुरुत्सया वृद्धिमलं निरुद्धः ।
रूपान्तरेणाम्बरवर्त्म भूयो
रुणद्धि विन्ध्याचलवंशकेतुः ॥५५॥

783 मध्यं समुष्टिग्रहसौष्ठवं च
कृशीकृतं वासुकिभोगकाषैः ।
दधन्नतान्तोभयकूटकोटिः
कोदण्डदण्डत्वमुपैति शैलः ॥५६॥

784 गिरीन्द्रचापाटनिगाढबन्ध-
निपीडनाद्बन्धुरकण्ठपीठः ।
करोति नागः श्वसितानलेन
दाहक्रियाया इव पूर्वरङ्गम् ॥५७॥

785 क्रमेण दैत्येन्द्रविपत्तिहेतोः
संक्षिप्तदेहो निजमाययैव ।
जनार्दनो मार्गणतामुपैति
पुरेव लोकेषु निरर्गलौजाः ॥५८॥

786 शरीकृतस्याग्रत एव शौरेः
शल्यीभवत्याहिततीव्रदाहः ।
दिधक्ष्यमाणासुरचक्रवाल-
बालाजनस्यानु कृशानुराशिः ॥५९॥

787 आकृष्टनिःशेषकुलाद्रिकूट-
निष्पेषदक्षक्षयकालरंहाः ।
महासुरीणां हृदयैः करोति
कम्पं मरुत्पुङ्खपतत्रपंक्तेः ॥६०॥

788 इत्येष एव प्रणवप्रतोद-
विरञ्चिसारथ्य सनाथमेकः ।
रथाग्रमास्थाय सुमेरुकेतुं
पुरत्रयीं भस्ममयीं चकार ॥६१॥ दशभिः कुलकम्

789 अभ्युद्धतामर्षदुरीक्ष्यमूर्ते-
र्ज्वलत्करालानलहेतिपिङ्गम् ।
समुल्लसन्ती भ्रुकुटिस्तृतीयं
दाहाय तीव्रं नुदतीव चक्षुः ॥६२॥

790 प्लोषावलग्नस्य वपुष्युदग्र-
ज्वालाजटालस्य विलोचनाग्नेः ।
प्रशान्तिहेतोरिव संभ्रमेण
निर्यान्ति घर्मोदकसीकरौघाः ॥६३॥

791 ललाटपट्टेक्षणतारकौघा-
रसंध्याघनाद्विद्युदिवोत्पतन्ती ।
सम्भाविता दृष्टिनिमीलनेन
न वीक्षितुं पिङ्गरुचोज्ज्वलार्चिः ॥६४॥

792 दग्धेऽस्य कामे नयनाग्निनेत्थं
क्रोधः प्रसादश्च तथा जजृम्भे ।
अङ्गेषु लावण्यसुधाह्रदेषु
यथा स लेभे पदमङ्गनानाम् ॥६५॥ कलापकम्

793 सम्भ्रान्तदेवासुरसप्तलोक-
दाहोपशान्त्यर्थमिवाम्बुनाथाः ।
वीचिच्छटाघट्टनघोरघोर-
मन्योन्यमुद्दामरया घटन्ते ॥६६॥

794 ऊर्ध्वेक्षणाग्निग्लपितोष्णमारा-
न्मन्दीभवत्युष्णमरीचिबिम्बम् ।
अन्योन्यसंपृक्तसमुद्रवारि-
तरङ्गभङ्गैरिव लङ्घ्यमानम् ॥६७॥

795 किमेतदित्याकुलताविवर्त-
निष्पीडितस्यैव चतुर्मुखेन ।
रक्तच्छटाभासनपङ्कजस्य
गलत्यमन्दं मकरन्दवृष्टिः ॥६८॥

796 इत्यस्य कालोऽपि विलङ्घिताज्ञः
संधुक्षितः कोपहुताशनेन ।
बभार दावानलदह्यमान-
परिज्वलन्मेकलशैललीलाम् ॥६९॥ कलापकम्

797 संवर्तमेघमलिनच्छविकालकूट-
च्छायाछलेन भुवनप्रलयागमेषु ।
आभात्ययं कवलिताखिलसप्तलोक-
पातालरन्ध्रतमसेव निरुद्धकण्ठः ॥७०॥

798 भास्वत्किरीटमकरीमणिपत्त्रभङ्ग-
च्छायापिशङ्गिततलाङ्गुलिपादयुग्मम् ।
अस्य स्फुरन्नखमयूखशिखाच्छलेन
प्रज्ञाप्रकाशमिव भाति दिशत्सुरेभ्यः ॥७१॥

799 सन्देहमोहविरतिर्गहनेषु कृत्य-
वस्तुष्वपोढतमसामपि नो मतीनाम् ।
अस्यामलाः किल धियो विचरन्ति येन
तासामुपर्युपरि चित्रविशेषनिष्ठाः ॥७२॥

800 प्रज्ञातिरेकवशतो विशदावभास-
मालोच्यमानमखिलं खलु कार्यतत्त्वम् ।
पुष्णाति निष्प्रतिघमर्थविशेषजात-
मुद्धृष्यमाणमिव वर्णकदारुगन्धम् ॥७३॥

801 मन्त्रेण पञ्चविधतामुपजग्मुषा च
नीतिप्रपञ्चरचना विजिगीषुपुंसाम् ।
आ संसृति क्रमजुषा भुवनत्रयेऽपि
निर्वर्त्यते हि मरुतेव शरीरयात्रा ॥७४॥

802 संरम्भमित्थमपहाय निरूपयन्तु
संप्रत्यनेन कृतनीतिपथप्रकाशाः ।
कार्यं भवन्त इदमुज्झितमोहमार्याः
प्रेक्षावतां जगति तन्न यदस्त्यसाध्यम् ॥७५॥

803 आकर्ण्य वाचमिति तस्य गणाधिनाथा-

स्तस्थुः परस्परनिवेशितदृष्टयस्ते ।

लीलाविवृत्ति शिथिलीभवदद्रिकूट-

पीनांसपीठलुठितामलरत्नहाराः ॥७६॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो महाकवे राजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये प्रभामयनयप्रकाशनं नाम नवमः सर्गः ।

---

804 तिग्मप्रतापतपनातप एव यस्य
सङ्कोचितारिकुलकीर्तिकुमुद्वतीकः ।
रूढं जगत्त्रयसरस्यनयद्विकास-
लक्ष्मीं विपाण्डुरयशः शतपत्त्रखण्डम् ॥१॥

805 उछ्वासिशेषफणपाण्डुरपुण्डरीक-
खण्डोपसेवनधियेव रसातलान्तः ।
क्रौञ्चाद्रिकुञ्जविवरोत्थितहंसयूथ-
मार्गानुसाररभसादिव दिङ्मुखेषु ॥२॥

806 विस्पष्टगौरकरसूत्रसुधामयूख-
रेखामृणालशकलस्पृहयेव नाके ।
यस्यानिशं [1]धवलपक्षबलेन कीर्ति-
हंसी सविभ्रममिति भ्रमति त्रिलोक्याम् ॥३॥ युगलकम्

807 गण्डस्थलं समिति यस्य विपक्षभङ्ग-
रागोत्थपीनपुलकाभरणं बभासे ।
लक्ष्म्या विचुम्बितमिवाधिशयानयांस-
कूटोपधानविकटोन्नतबाहुशय्याम् ॥४॥

808 पर्यन्तभागविशरारुतरङ्गभङ्ग-
सिन्धुप्लवा भुजगराजफणास्वमन्दम् ।
प्रेङ्खत्तरा वसुमती बलभारभूरि-
खेदाकुला चलति दिग्विजयाय यस्मिन् ॥५॥

---

१. B धवं लांति गृह्णन्तीति धवलाः, स्वाम्यनुयायिनः पक्षाः तेषां बलेन ।

809 येन प्रकीर्णकगणाः[1] सुरकुञ्जरेण
भग्ना मृगाङ्कधवलाः प्रतिपक्षलक्ष्म्याः ।
निष्कृष्टकोटिमुखनिर्गतसूक्ष्मसूत्र-
जाला मृणालवलया इव पङ्कजिन्याः ॥६॥

810 [1]यस्योन्मदद्विरदकुम्भविभेदमुक्त-
संसक्तमौक्तिकशिखानिकरावकीर्णः ।
क्षीराहुतीरिव मुमोच युधि प्रताप-
वह्नावरीन्धनसमेधितधाम्नि खड्गः ॥७॥

811 यस्मिन् समुच्चलति वोढुमिवान्तरिक्ष-
निर्धूतधूलिधरणीवलयं द्वितीयम् ।
भात्युत्थितं क्षितिभृतां धवलातपत्र-
खण्डच्छलेन पृथुशेषफणासहस्रम् ॥८॥

812 सुश्लिष्टमध्यघटितास्पदपद्मराग-
पीठोज्ज्वलाममलहारलतां दधानः ।
आन्दोलनाय रचितां स्थगितान्तरिक्ष-
विस्तारिबाहुवनदेवतयेव दोलाम् ॥९॥

813 विभ्रद्विकासिपुटतारकदृष्टिपूर्ण-
गण्डस्थलं शशिसितस्मितशोभिवक्त्रम् ।
आधूय कोपशिथिलीकृतभोगिबद्ध-
जूटं शिरोलुलितपिङ्गजटाकलापम् ॥१०॥

814 दन्तप्रभाधवलभासमनेकमार्ग-
वृत्तिं मनोहरपदोज्ज्वलवर्णहंसाम्[1] ।
गाम्भीर्यसिन्धुघटितां गिरमुज्जगार
जह्नुर्भगीरथसुतामिव वह्निगर्भः ॥११॥ एकादशभिः कुलकम्

---

१. B चामरौघाः ।

815　वाक्यं प्रभामय ! यदित्थमुदात्तमात्थ
　　तेनाभिधातुमधुनाहमपि प्रवृत्तः ।
सर्वोऽनुभावगरिमा स मुखानिलस्य
　　शब्दायते श्रुतिसुखं यदतीव वेणुः ॥१२॥

816　वाक्यं वचस्विजनदुर्वचमित्थमेत-
　　द्यामलं त्वदपरः क इवाभिदध्यात् ।
स्यात्कश्चिदेव समणिर्ननु शातकुम्भ-
　　निष्ठीविता जगति यस्य गतः प्रसूतिम् ॥१३॥

817　येषां निसर्गविमलत्वमुपादधाना
　　नार्थान् प्रकाशयति दीपशिखेव बुद्धिः ।
क्रोधान्धकारगहने प्रविजृम्भमाणे
　　तेऽन्धीभवन्ति ननु सत्स्वपि लोचनेषु ॥१४॥

818　बिभ्राणया विमलतामधिकं धियैव
　　मोहं व्यपोहति विशारदिमानमाप्तः ।
दिक्चक्रवालविनिरोधि विजृम्भमाण-
　　मन्धं तमस्तिरयति प्रभयैव भानुः ॥१५॥

819　चन्द्रोदयेऽपि जलधिः स्तिमितत्वमेति
　　विद्युल्लतापि परिमुञ्चति चञ्चलत्वम् ।
तिग्मांशुमण्डलमपि ग्रसते न राहुः
　　प्रज्ञावता नय इह प्रवितन्यमाने ॥१६॥

820　त्रैविद्यवृद्धरचितं नयवर्त्म शश्व-
　　दातस्थुषः स्थिरविपक्षजितो विजेतुः ।
लक्ष्मीर्न मुञ्चति कदाचन चञ्चलापि
　　दीप्रा रुचिर्दिनपतेरिव मण्डलाग्रम् ॥१७॥

---

१. B वर्णश्रेष्ठां (footnotes) ।

821 शङ्के समाप्य महतां हृदयेषु पूर्व-
मीषत्तदंशपरमाणुलवावशेषाम् ।
गम्भीरतां जलधिषु स्थिरतां नगेषु
विस्तीर्णतां च नभसि व्यधिताथ वेधाः ॥१८॥

822 प्रेक्षावतोऽप्यविहितौपयिकप्रयोग-
शून्यानभीक्ष्णमधिकुर्वत एव तीक्ष्णाः ।
चक्षुष्मतोऽपि चरणेष्ववधानवन्ध्या-
न्विध्यन्ति कण्टकशिखा निशिता अवश्यम् ॥१९॥

823 कालादिसाधनमवेक्षितमर्थसिद्धि-
मभ्यर्णतां नयति निष्प्रतिघं जिगीषोः ।
तन्निर्व्यपेक्षमनसां नयशासनेषु
दोर्दण्डदर्परभसो विनिपातहेतुः ॥२०॥

824 पातालमन्दिरनिवासदृढान्धकार-
संसर्गजिह्मितदृशो दितिजाधिनाथाः ।
धाराकृशानुजटिलं युधि यस्य चक्र-
मुष्णांशुमण्डलमिवेक्षितुमप्यशक्ताः ॥२१॥

825 संग्राममूर्धनि विपूरयितुं न येन
यत्नादपि स्फुटमपार्यत पाञ्चजन्यः ।
निःश्वासनुन्नहृदयास्पदसप्तलोक-
संस्थानरुद्धविकटाननरन्ध्रमार्गः ॥२२॥

826 वक्त्रामृतांशुविनिवेशितपाञ्चजन्य-
शङ्खार्पितां कुटिलतामिव यस्य बिभ्रत् ।
चेतो निसर्गसरलं रिपुवञ्चनैक-
कार्यप्रपञ्चरचनाचतुरत्वमेति ॥२३॥

827 यस्य व्यलोक्यत सुधाहरणाभियोगे
लीलापुरन्ध्रिवपुषः कुचकुम्भयुग्मम् ।
वक्षःस्थलीसरभसोत्थितगूढनाभि-
रूढारविन्दमुकुलद्वयशोभि दैत्यैः ॥२४॥

828 यत्तीक्ष्णकोटिकरजक्षतिजृम्भमाण-
लज्जाकुला कुलवधूरिव दृष्टिमार्गे ।
भर्तुः पुनर्न दितिजाधिपतेरतिष्ठ-
दाबद्धहाससुरचक्रविलोकिता श्रीः ॥२५॥

829 दंष्ट्राशशाङ्ककलिकाशकलैकदेश-
कोणोद्धृतामभिसमीक्ष्य बभूव यः क्ष्माम् ।
घोणादरीविवरघूर्णितसप्तलोक-
लीलावराहरचनादरसंभृतश्रीः ॥२६॥

830 यस्यातिमन्थरगतेर्बलिवञ्चनार्थ-
मागच्छतस्तनुरदृश्यत सभ्रमाम्भाः ।
सङ्कोचितावयवसङ्कटसंधिरोम-
कूपान्तरोच्छलितसिन्धुजलेव दैत्यैः ॥२७॥

831 आक्रामतस्त्रिभुवनं बलिराजलक्ष्मी-
निर्वासनाय नवविभ्रममण्डनश्रीः ।
आधायि यस्य सुरसिद्धवधूकपोल-
भागेषु पादनखदीधितिमञ्जरीभिः ॥२८॥

832 उत्खाय नन्दनवनादुपनीत एव
येन द्रुमे भवनकाननभूमिभागम् ।
आलोक्यताप्यनवतंसिततद्विनिद्र-
पुष्पे विकासितदृशा दयितानने श्रीः ॥२९॥

833 यः प्राप्य बल्लवकुलस्थितिमभ्रनील-
मन्तर्निगूढमपरं बिभराञ्चकार ।
तत्कालबद्धहृदयास्पदसिन्धुकन्या-
[1]गाढोपगूहनरसादिव बाहुयुग्मम् ॥३०॥

834 अद्यापि शैशवभृता [2]दमितस्य येन
शल्यायते शिरसि कालियपन्नगस्य ।
विन्यस्तपादभरभग्नमुदंशुमाल-
मन्तः स्फुरत्पृथुफणामणिचक्रवालम् ॥३१॥

835 अश्रूयतानुरहसं[3] प्रतिपन्नगोप-
वेषस्य यस्य रभसाद्व्रजसुन्दरीभिः ।
गीतध्वनिः श्वसितकम्पितगूढनाभि-
रूढाब्जकेसरपरागकषायकण्ठः[4] ॥३२॥

836 वक्षःस्थले घटितसंनिधिरूढगूढ[5]-
रागावतंसहृदयाद्रिशिलाविशाले ।
सा यस्य षोडशनितम्बवतीसहस्र-
गाढोपगूहनवशेन[6] निपीडिता श्रीः ॥३३॥

837 सोऽनेकनाकिनिकुरम्बपुरन्ध्रिलोक-
वक्त्राब्जहासघटनारविबिम्बचक्रः ।
कालक्रमेण हरिरप्यरिभङ्गशौण्ड-
दोर्दण्डदृप्तमनसो दितिजाञ्जघान ॥३४॥ चतुर्दशभिः कुलकम्

---

१. A, C गाढोपगूढन..... । २. C गमितस्य for दमितस्य ।

३. B रहसीत्यर्थः (footnotes) । ४. B मधुरः (footnotes) ।

५. B गूढः सपत्नीसन्निधावप्रवुद्धः राग एवावतंसो यस्य हृदयस्य स ऊढो यथा (footnotes) ।

६. C गाढोपगूहनरसेन for गाढोपगूहनवशेन ।

838 कार्येषु कालमुसलानुगुणव्यवस्थ-
मभ्येत्य तिष्ठति चिरं तरलापि लक्ष्मीः ।
सालक्तकं चरणमम्बुजखण्डगर्भ[1]-
सञ्चारलग्नमकरन्दमिवोद्वहन्ती ॥३५॥

839 न्याय्यं तदेतदिह तावदुपप्लवेऽपि
कुर्वन्त यन्न जगति स्थितिभङ्गमार्याः ।
मर्यादया विरहिताः प्रलयागमेऽपि
किं वाच्यतां जलधयो भुवने न याताः ॥३६॥

840 विस्तीर्णतावयवलेशलवोऽपि ताव-
दस्यान्वकारि न मया हृदयस्य कष्टम् ।
श्यामायतेऽम्बरमितीव गृहीतचिन्त-
मेतत्तवोच्छ्वसितधूमशिखावलीढम् ॥३७॥

841 उद्दामदर्पनिकषान् करिणो विहाय
विष्यन्दिदानजलनिर्झरधौतगण्डान् ।
पृष्ठे कुरङ्ककशिशोः करकालचक्र-
मुत्प्लुत्य पातयितुमिच्छसि नासि सिंहः ॥३८॥

842 तेनोज्झ्यतां गणपते ! रभसोऽयमस्त-
नीतिप्रपञ्चलघुको विजिगीषुबाह्यः ।
कार्यान्तरेष्वनुगमव्यतिरेकदृष्ट-
सारेषु सारगुरवो[2] न हि विप्लवन्ते ॥३९॥

843 उल्लास्यमानकुटिलभ्रुकुटिप्रबन्ध-
बद्धान्धकारगहनेऽपि मुखेन्दुबिम्बे ।
व्यक्तिं दधत्तव गणाधिप ! रोष एष
कस्यास्पदं विमलशास्त्रदृशो न कुर्यात् ? ॥४०॥

---

१. B अन्वय ।
C चरणमम्बुजखण्डगण्ड for चरणमम्बुजखण्डगर्भ ।
२. B महासत्त्वाः ।

844 आबद्ध संभ्रमसुरासुरचक्रवाल-
दृष्टास्य यद्यपि तमः पटलासितश्रीः ।
अव्याहता तव गणाधिप ! खड्गयष्टि-
रेषा रणेषु भुवनक्षयकालरात्रिः ॥४१॥

845 संरम्भमोहरभसप्रतिपत्तिशून्य-
मिच्छामि सम्प्रति तथापि नयानुसारम् ।
कार्येऽपि कर्तुमधुनार्य ! विपर्ययेऽपि
सिद्धेर्भवेत्क्वचन येन न वाच्यता वः ॥४२॥

846 अभ्युत्पतज्जलभृतः स्तनतो निहन्तुं
किं विक्रमेण विनिपातफलेन कुर्यात् ।
पर्यस्तदानजलकुञ्जरकुम्भपीठ-
[1]कुट्टाककोटि-करजक्रकचोऽपि सिंहः ॥४३॥

847 संहारकालशिखिनो जलधारयाभ्र-
खण्डः शिखाहतिमिव ज्वलितस्य कर्तुम् ।
कः संप्रहाररभसप्रतिषेधरौक्ष्य-
मीशस्तव प्रमथनाथ ! गिराथवास्यात् ॥४४॥

848 निःसंख्यसंख्यकुशलप्रतिपक्षपक्ष-
मघ्नन् भवानिव न निर्वृतिमेति [2]शुष्मी ।
और्वाग्निरेकमपि तिष्ठति किं मुहूर्त-
मुद्वीचिमण्डलमभस्ममयन् पयोधिम् ॥४५॥

849 शूली विकीर्णशिखि शूलमिदं विकृष्य
शार्ङ्गं च सङ्गरमुखेषु रथाङ्गपाणिः ।
[3]चक्रीकृतातनुधनुस्तरसा भवांश्च
दोर्दण्डदृप्तमनसो दलयन्तु दैत्यान् ॥४६॥

---

१. B कुट्टनशील (footnotes) ।
२. B तेजस्वी । ३. $B_1$ C वक्रीकृतातनु… ।

850 पीनोन्नतांसशिखरस्य रणाम्बुराशि-
हेलाविलोडननिरर्गलमन्दराद्रेः ।
दोष्णः परिभ्रमणमण्डलितः कृपाण-
पट्टो बिभर्ति तव वासुकिभोगलीलाम् ॥४७॥

851 त्वामन्तरेण रणकाननसीम्नि कस्य
पीनोन्नतद्विरदकुम्भकुचाभिघातैः ।
[1]श्यामा निनाय करवाललता विकास-
[2]लक्ष्मीं यशःकुरबकद्रुमचक्रवालम् ॥४८॥

852 गम्भीरतां दधति तावक एव धैर्य-
मास्थां बबन्ध हृदयेऽत्र विशालसत्त्वे ।
पातालरन्ध्रमपहाय कृतप्रतिष्ठ-
मन्यत्र किं जलनिधेरवतार्यतेऽम्भः ॥४९॥

853 किन्तु ब्रवीमि परलोकजिगीषयेत्थ-
मभ्युज्झतः प्रथममौपयिकं विमोहात् ।
दण्डे गणाधिप ! तव क्रमयोगभाजि
नैवाश्रमान्तर इव ध्रुवमस्ति सिद्धिः ॥५०॥

854 लोकानुसारसरलं नयवर्त्म ताव-
देतन्मयेदृशमिति व्यपदिश्यते वः ।
देवः शुभाशुभमतः परमेष वेत्ति
गौरीपतिर्जगदुपप्लवसिन्धुसेतुः ॥५१॥

---

१. B नायिकापि (footnotes) ।

२. B आलिंगितः कुरबकः कुरुतेविकासम् ।

855 इति तरलितरत्नस्रग्विवृत्यान्धकार-

छिदमनुगतनीतिं भारतीं तस्य वक्त्रात्।

शशभृत इव बिम्बाच्चन्द्रिकां निष्पतन्तीं

[1]मविहति कुमुदौघो राजलोकोऽभ्यनन्दत्॥५२॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो महाकवे राजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये वह्निगर्भनीतिसंदर्भो नाम दशमः सर्गः।

---

१. B निरर्गल (footnotes)।

856 श्रुत्वास्य वाचमिति तां विकटाट्टहास-
फेनच्छटाच्छुरितदिक्तटमग्निदंष्ट्रः ।
चुक्षोभ सिन्धुरिव संसदि कालकूट-
रेखाकरालविकटभ्रुकुटीविभङ्गः ॥१॥

857 संवर्त-वारिद-घटाविकटाभिनील-
च्छायान्धकारकलुषीकृतदिग्विभागाम् ।
[1]आभङ्गिनीं भ्रुकुटिमुत्कटकोपवह्नि-
वेणीलतामिव बबन्ध स कालरात्रेः ॥२॥

858 व्यावृत्तिमण्डलितरोमलतालवाल-
चक्रायमानविकरालकणानि कोपात् ।
सस्यन्दिरे सदसि घर्मजलानि तस्य
[2]तन्वन्ति रत्नकवचश्रियमाशु देहे ॥३॥

859 क्रोधस्तथास्य ववृधे भ्रुकुटीविभङ्ग-
लेखातरङ्गितललाटतटाननाग्रः ।
भर्तुर्यथानधिगतोद्धतशासनोऽपि
संहर्तुमाशु भुवनत्रितयं स ऐच्छत् ॥४॥

860 तस्य घ्नतः करतलेन करालमंस-
कूटं रुषा नखमयूखशिखाः खचन्त्यः ।
ऊहुः कठोरभुजपञ्जरपुञ्ज्यमान-[3]
दुर्वारविक्रममृगेन्द्रसटाविलासम् ॥५॥

---

१. B ईषत्कुटिलाम् । २. B कुर्वाणानि ।
३. B बद्धयमान ।

861 औचित्यशालि सरुषो वचनं विवक्षोः
तस्याहतांसशिखरस्य विनृत्तिलीला[1] ।
सन्नायिकेव सदसि प्रतिपन्नपीठ-
मर्दा रराज कुटिलोन्नमिताञ्चितभ्रूः ॥६॥

862 हृत्पुण्डरीकमिव तस्य सुरैः सरोष-
पादाभिघातकृतरन्ध्रपथेन पृथ्व्याः ।
पातालकुक्षिकुहरे मणिरश्मिराग-
पिङ्गं व्यलोकि पृथुशेषफणासहस्रम् ॥७॥

863 बिभ्रत्स सौरभभराकुलितद्विरेफ-
मालं मणिस्तबककर्णशिखावतंसम् ।
अंसोपधानभुजतल्पनिविष्टयेव
लक्ष्म्यार्पितं निजकराह्निकचारविन्दम् ॥८॥

864 उत्सर्पिदर्पजलधिस्फुरदूर्मिसंघ-
संघट्टघोरतरघोषनिभारवश्रीः ।
लीलाविवृत्तनिजदेहभरावरुग्ण-
रत्नासनाशिथिलसंधिरिदं बभाषे ॥९॥ युगलकम्

865 सत्यं गिरा[2] तव विभूषित एव नीति-
मार्गो निसर्गगहनोऽपि गणेन्द्र ! गुर्व्या ।
एकैव सा जलनिधेरुदियाय चन्द्र-
लेखा समस्कुरुत[3] या शितिकण्ठजूटम् ॥१०॥

---

१. B, C विनृत्तलीला । २. B विलक्षणः ।

३. B समपूजयत् (footnotes) ।

866 उत्पद्यते जगति कोऽपि स एक एव
यस्योक्तिषु स्फुरति सर्वमनोरमोऽर्थः।
अन्यः स कल्पविटपी मणिमञ्जरीषु
चिन्तामणिः स्तबकतामुपयाति यस्य ॥११॥

367 क्षोभं न या व्रजति जातु नयार्थतत्त्व-
गर्भा परा तव गणाधिप! सात्र वाणी।
पङ्कत्वमेति न मधुस्थितिकारणं या
[1]सान्यैव संभृतगुणा कुसुमस्य धूलिः ॥१२॥

368 आकारदारुणतयापि ममान्वितस्य
वाक्यं विलक्षणमभिप्लुतितुच्छरूपम्।
अस्यास्तु तूलमिव शाल्मलिपादपस्य
संश्रूयमाणमुपयास्यति हास्यतां वः ॥१३॥

369 हेलापरिभ्रमणमण्डलितेन यस्य
नीलत्विषारिदलनादसिना रणेषु।
वक्त्रेण मन्मथरिपोरिव निर्मलाट्ट-
हासच्छटा विचकरे[2] भुवनेषु कीर्तिः ॥१४॥

370 स ज्योतिरिङ्गणगणैरिव[3] वज्रमुष्टि-
घातोच्छलद्विकटकङ्कटवह्निलेशैः।
यस्याजिदुर्दिनमुखेषु कृपाणमेघ-
धारा जहार रिपुपङ्कजकोषलक्ष्मीम् ॥१५॥

---

१. C मान्यैव for सान्यैव।

२. B विकीर्णाः।

३. A, C ज्योतिरिङ्गणगणेष्विव।

871 यस्याशु कीर्तिबकुलावलिराततायि-
सेनावधूव्रज[1]मुखस्खलितैः सलीलम् ।
निन्ये विकासमसकृन्नवरक्तशीधु-
गण्डूषसेकविसरै रणकाननेषु ॥१६॥

872 तस्यापि नाम भवतः सकलार्थशास्त्र-
तत्त्वावगाहनगभीरमतिप्रगल्भम् ।
आकर्ण्य वाक्यममरा नयमार्गशालि
शङ्के, भवन्ति सविशेषरणाभिलाषाः ॥१७॥ कलापकम्

873 उद्दामदानववरूथवतीसमीक-
संमर्दयोग्यमपरं क्षितिपीठपृष्ठम् ।
निर्मित्स्यमानमिव पश्य हरिं सरोष-
रत्नाङ्गदप्रकरपेषपरागपुञ्जैः ॥१८॥

874 संरम्भगर्भगुरुमन्युजुषस्त्रिलोकीं
कुर्वन्ति सांप्रतममी मुसलायुधस्य ।
श्वासा विघूर्णनविसंस्थुलतिग्मरश्मि-
बिम्बाहिता नियतदेशदिनत्रियामाम् ॥१९॥

875 भीतिं तनोति विकटभ्रुकुटीविलास-
वेल्लद्द्विषद्द्रुमलताङ्क-ललाटसानुः ।
क्रोधेश्वरक्षितिधरः प्रतिपक्षकोप-
कल्पावसानपवनाहिततीव्रकम्पः ॥२०॥

876 संवर्तमेघमलिनच्छविरप्रकम्प-
कोपस्य हुङ्कृतिहुताशन धूमवर्तिः[2] ।
आभात्यमुष्य कवलीकृतकालदेह-
च्छायेव वक्त्रकुहरादभिनिष्पतन्ती ॥२१॥

---

१. B, C सेनावधूव्रणमुख ।

२. B शिखा (footnotes) ।

877 भ्रूभङ्गमेष विदधाति यथा यथा च
संरम्भपाटलविलोचनतां विधत्ते ।
निष्पिष्टहारलतपाणिपुटो यथा च
प्रेक्षयत्यवश्यमचिरेण तथासुराणाम्[1] ॥२२॥

878 [2]रोषानुबन्धदृढपीडितदन्तपट्ट-
संघट्टवह्निमिव तर्पयति त्रिशूलम् ।
तत्कोटिनिष्ठुरविदष्टनिजौष्ठपृष्ठ-
विष्यन्दिसान्द्ररुधिराहुतिभिः पुरस्तात् ॥२३॥

879 काली मषीमलमलीमसमांसलार्चि-
रुद्दामधामकरवालकरालबाहुः[3] ।
दुर्गाहतां प्रलयकालनवाभ्रकाय-
सच्छायकालियलया यमुनेव धत्ते ॥२४॥

880 स्तम्बेरमाननममुं विकटा विषाण-
दण्डप्रभा कुमुदखण्डविपाण्डुरश्रीः ।
मन्दाकिनीव गुरुसङ्गरबद्धकक्ष्य-
मेषा विचुम्बति मुखे तनयप्रियत्वात् ॥२५॥

881 लज्जानताननतया रणशौण्डदर्प-
कण्डूयनद्रुमभुजोऽत्र विभाव्यतेऽसौ ।
माणिक्यकुट्टिममयूखजलं विषाण-
लीलामृणालशकलेन पिबन्निवैतत् ॥२६॥

---

१. B, C तथासुराद् तान् for तथासुराणाम् ।

२. C omits this श्लोक ।

३. B धाहुः ।

882 वाक्यं तवैतदिति शुश्रुवुषः सलील-
माक्षिप्तनीतिगहनं सदसीन्दुमौलेः।
पश्याधुनातिविमलापि गुहस्य वक्त्र-
च्छाया गणाधिप ! मलीमसतां बिभर्ति ॥२७॥

883 एकीभविष्यति रणे करवालघात-
भीतिप्रणश्यदसुरेश्वरदर्शनोत्थैः
हासांशुभिस्तव यशः स्तबकायमान-
माशालतासु शिशिरांशुमरीचिशुभ्रम् ॥२८॥

884 प्रत्यर्थिनो [1]मदभरोद्धुरकंधरस्य
शक्तिं दधद्दलितभूधरसारगुर्वीम्।
कीर्तिं मृणालधवलामहमुद्धरामि
दन्तार्गलां गणपतेरिव कार्तिकेयः ॥२९॥

885 किं कालखञ्जनिकरैर्मम जृम्भमाण-
वातापिभिः स्फुरदरिष्टदुरन्तशल्यैः।
तान्दैवदग्धवपुषो रणमन्तरेण
नष्टात्मनः प्रथममेव न वेत्थ कस्मात् ॥३०॥

886 अव्याहतप्रसरतां भुवनत्रयेऽपि
प्राप्ताभ्रवर्त्म परिपूरयतु क्षणान्नः।
प्रत्यग्रपत्रमकरा सुरनाथ ! जह्नु-
कन्येव सिन्धुसलिलं युधि बाणपङ्क्तिः ॥३१॥

887 आपाण्डुरीभवतु वः प्रतिपक्षपक्ष-
नारीजनस्य वदनं पतिविप्रयोगे।
दुःखाग्निदग्धहृदयेन्धनभस्मधूलि-
पुञ्जैरिवाभिहतमुच्छ्वसितव्युदस्तैः ॥३२॥

---

१. A, B मदतरोद्धत for मदभरोद्धत।

888 सङ्ग्रामरङ्गभुवि चारुतराङ्गशोभा-
सन्दर्भवत्यतिरसाद्विपतोऽपसारान् ।
सन्नर्तकीव विदधातु कृपाणधारा-
लग्नेन शौर्यविभवेन पदं जयश्रीः ॥३३॥

889 आलक्ष्यतां क्षितितलं दृढवज्रमुष्टि-
निष्पिष्टकुञ्जरघटोन्नतकुम्भमुक्तैः ।
मुक्ताफलैः स्फुरितदीधितिपक्ष्मपङ्क्ति-
शौर्यद्रुमस्तबकविभ्रममाक्षिपद्भिः ॥३४॥

890 संरम्भविभ्रमभृतां युधि मन्युगर्भ-
मुज्झन्तु घर्मजलशीकरविन्दुवृष्टीः ।
[1]सार्धं ललाटकटका भवतामराति-
सीमन्तिनीजनविलोचनबाष्पपूरैः ॥३५॥

891 आयोधने गजघटाविकटास्थिकूट-
कुम्भस्थलस्खलित-खड्गखडत्कृतिर्वः ।
अन्तर्दधातु मधुरं जयशब्दतार-
कोलाहलं नभसि खेचरसंहतीनाम् ॥३६॥

892 [2]संस्फोट-विस्फुटरसस्फुटितव्रणोत्थ-
रक्तच्छटाचिररुचो गजगण्डमेघाः ।
मुञ्चन्तु दानजलवृष्टिममानसस्य
क्षेत्रं विधातुमधुना सुरवैरिचक्रम् ॥३७॥

893 अभ्यर्णतौणिकविकीर्णविकर्णघात-
रुग्णामरारिकरिकर्णमुदीर्णसत्त्वम् ।
तूर्णं वितीर्णमयमस्तु रणं निदाघ-
संशीर्णजीर्णतरुपर्णवनायमानम् ॥३८॥

---

१. C सार्धे for सार्धं ।

२. A, B, C संघट्ट for संस्फोट ।

894 निष्पिष्टलोचनयुगं दृढवज्रमुष्टि-
पिष्टास्थिकूटशिरसं[1] विदधे सुरारिम् ।
वज्राभिघातदलितातनुकूटकोटि-
विस्रस्तरत्नशकलाञ्जनशैलकल्पम् ॥३९॥

895 प्राप्य क्रियासमभिहारमहं प्रकर्ष-
पर्यन्तवर्तिनमुपोद्धृतशैलशृङ्गान् ।
संहारमारुत इव प्रसभं क्षुणद्मि
सङ्ग्रामसीम्नि तरसा सुरशत्रुशैलान् ॥४०॥

896 संभ्रान्तविभ्रमवती[2]करपुण्डरीक-
धूता विपाण्डुररुचो मम चामरौघाः ।
उत्पादयन्ति बत शोकजरामिवारि-
हेलानिकारकलुषीकृतचित्तवृत्तेः ॥४१॥

897 तीव्रात्मनो दलयतः करवज्रमुष्टि-
घातेन दानवकुलाचलचक्रवालम् ।
व्यापारिता युधि भटैः कृपणाः[3] कृपाण-
पट्टा भवन्ति मम नूनममी पुरस्तात् ॥४२॥

898 आरोपितोऽपि सकलासुरसंप्रहार-
भारो भराय न भविष्यति मेऽत्र बाहौ ।
संहारकौलवपुषः खगकेतनस्य
दंष्ट्राग्रभाग इव रत्नवतीनिवेशः ॥४३॥

899 उद्दामकुञ्जरघटोन्नतकुम्भपीठ-
मर्दो हिताहवकलासु विचक्षणोऽहम् ।
तां नायिकामिव जयश्रियमाभिमुख्य-
मेको नयामि नयनिर्विषयैकवृत्तिः ॥४४॥

---

१. C शिरसे for शिरसम् ।

२. B विलासिनी ।  ३. C कृपणं for कृपणाः ।

900 लक्ष्मीमखण्डनवसू रणभूमिरेतु
नानाध्वजांशुककृतां सुरदारुणासौ[1] ।
अद्यैव देव ! हरिणारहिता हिमाद्रि-
सानुस्थलीव पृथुवंशकरीरराशिः ॥४५॥

901 कैलासशैलमिव बाहुबलेन लोक-
मुन्मूलयन्तमहितं बहुदोषमेकः ।
तीव्रार्तिनादमुखरं चरणेन नाथ !
निष्पीड्य संप्रति तवानुकरोमि लीलाम् ॥४६॥

902 सङ्ग्रामवर्त्मनि भयानकतां गतेन
चक्रेण नाथ ! दधतापि सुदर्शनत्वम् ।
राहोरहारि हरिणाशु यदोत्तमाङ्ग-
मास्तंस्तदा दितिसुताः क्व समीकशौण्डाः ॥४७॥

903 एतेन किं नु कवलीकृतसूर्यचन्द्र-
बिम्बेन राहुशिरसा स्फुरतान्तरिक्षे ।
चामुण्डया किमिति मुण्डमखण्डमेत-
दुत्कृत्य मांसमधुना ध्रियते न पाणौ ॥४८॥

904 बद्धे बलौ बलवता मधुसूदनेन
भिन्ने हिरण्यकशिपौ च सकाञ्चनाक्षे[2] ।
दूरं व्यपास्तमधुना भुजदण्डदर्प-
कण्डूविनोदनसुखं दनुजाहवे वः ॥४९॥

905 तद्वाडवं वदनमात्रमनौचितीस्थ-
मौर्वानलः कथमिवाधिवसेदुदर्चिः ।
तस्यास्पदं कवलिताखिलवाहिनीश-
तिग्मत्विषः कुपितवीरकृतान्तवक्त्रम् ॥५०॥

---

१. B देवदारुद्रुमेण (footnotes) ।    २. B हिरण्याक्षे (footnotes) ।

906 तेजस्वितामुपगतोऽपि मृदुः प्रकृत्या
कार्यें क्वचिन्न खलु गण्यत एव नूनम् ।
मध्ये किलाहुतिभुजामतनुप्रकाश-
मिच्छन्ति पञ्चतपसस्तपनं न चन्द्रम् ॥५१॥

907 उद्वृत्तमत्तकरिकूबरिवाजिपत्ति-
दुःसञ्चरत्वमुपजग्मुषि सङ्गराग्रे ।
कृत्तारिकण्ठघनशोणितपङ्किलापि
निस्त्रिंशयष्टिरमलैव भटस्य पाणौ ॥५२॥

908 तेजो विकासि दधतः करचक्रवाल-
[1]लीलागृहीतककुभः शुचिमण्डलस्य ।
भानोर्दिनस्थितिरिवापरिवृत्तिशून्य-
मैकात्म्यमेव [2]भजते क्षितिपस्य लक्ष्मीः ॥५३॥

909 ज्योत्स्नावितानपरिपाण्डुरुचो न जातु
कीर्तेर्जनो भजति भाजनतां विजिह्मः ।
दण्डत्वमेति कुटिलो जयवैजयन्त्याः
प्रत्यग्रकण्टकशिखाजटिलो न वंशः ॥५४॥

910 तुच्छोपमानपदवीमुपजग्मुषापि
निःसारतामपि[3] गतेन जडात्मवृत्तेः ।
क्रोडे न्यधायि हरिणेन पदं यदस्य
चन्द्रस्य पश्यत फलं तदनूष्मतायाः ॥५५॥

911 तज्जाड्यसंभृति विजृम्भितमेव तस्य
तेजस्विशब्दसदृशं विदधाति नासौ ।
निर्ह्रीक इन्दुरसकृत्तपनावधूत-
च्छायोऽप्युदेति निशि यत्प्रतिकारशून्यः ॥५६॥

---

१. C लीलां गृहीत for लीलागृहीत । २. B भजति for भजते ।

३. B, C निःसारतामुपगतेन for निःसारतामपि गतेन ।

912　आजन्मनोऽपि चपला नियमेन तत्र
　　लक्ष्मीः कथं न निवसेदरविन्दखण्डे ।
तिष्ठन्ति यस्य [1]परिणामशुचावखण्ड-
　　कोषस्थितेर्गुणगणाः सकृदेव दण्डे ॥५७॥

913　शान्तिं न यात्यपरथा परविप्रकार-
　　पांसुर्जगत्यतनुसंभृतिरेष तावत् ।
तिग्माभितापशमनाय कृपाणमेघ-
　　धाराजलान्यविरलं न पतन्ति यावत् ॥५८॥

914　[2]आधारधाम्नि रचितस्थितिरल्पकेऽपि
　　तुच्छेऽपि तेजसि परिस्फुरति स्फुटं श्रीः ।
दीपोऽपि मुञ्चति शिखां भवनान्धकार-
　　निर्वासनाय किमुतावसरे प्रवीरः ॥५६॥

915　अन्येषु सत्स्वपि निसर्गविनिर्मलेषु
　　मन्ये महाजनधुरां कतिचिद्वहन्ति ।
एकः स कम्बुरुदभूद्विमलोऽम्बुराशे-
　　र्यः पूर्यते मधुरिपोर्मुखमारुतेन ॥६०॥

916　तिग्मत्विषः परिमिताखिलमानमेव[3]
　　तेजः प्रकाशितजगत्स्थितमत्र[4] बिम्बे ।
तेजस्विनः पुनरपर्यवसानमेव
　　मन्ये तदत्र हृदये निवसत्यवश्यम् ॥६१॥

---

१. B परिपाकपाण्डुरे (footnotes) ।

२. B, C आधारसीम्नि for आधारधाम्नि ।

३. B, C माव एव for मानमेव ।

४. C····स्थितमभ्रबिम्बे for स्थितमत्र बिम्बे ।

917 भ्रूभङ्गमाशु दिशतोल्वणरोषरूक्ष-
मक्ष्णोश्च रागमुपपादयतासहिष्णोः ।
वामभ्रु वामतनुमानपरिग्रहेण
चेतो दुनोत्यभिमुखं स्फुरितोऽधरोऽपि ॥६२॥

918 विस्तारशालिनि हृदि प्रथिमानमाप्य
लोकास्त्रयः किल वसन्ति रथाङ्गपाणेः ।
सप्तापि धीरहृदये सविकासमेव
तिष्ठन्ति ते स्फुटमिति स्म ममैष तर्कः ॥६३॥

919 आजन्मनोऽप्यकृतपूर्वतया परेषां
साधारणत्वरहितां पुरुषप्रकाण्डः ।
प्रत्यग्रतारकगुणां निजपौरुषस्य
च्छायां विमुञ्चति निशामिव शीतरश्मिः ॥६४॥

920 कार्यं भवेत्क्वचन किंचिदणीयसापि
स्थूलैरलं तनुभृतामुपयोगवन्ध्यैः ।
क्ष्माभृत्तटेषु वरमस्तु तृणोपलादि-
किं गण्डशैलनिकरैः पृथुगण्डकल्पैः[1] ॥६५॥

921 निष्ठ्यूतदीधितिशिखादलितान्धकार-
राशिर्वरं मणिरसौ तनुरप्यनर्घः ।
क्षोणीभृतां कटकवर्त्मनि किं नु कृत्य-
मंशुश्रिया विरहितैर्ननु गण्डशैलैः ॥६६॥

922 लूताकृतो वरमसौ जगतीह तन्तु-
रारुह्य नाकमधिरोहति कीटको यम् ।
अस्ताचलस्य शिरसोन्नतिशालिना कि-
मालम्बनं न तरणेः पततो दिवो यत् ॥६७॥

---

१. B पिटकतुल्यैः ।

923　तुङ्गात्मतास्तशिखरस्य मुधैव भानो-
　　　नालम्बनं भवति यत्समये प्रपित्सोः ।
　　श्लाघ्यः स तामरसनीलगुणोऽपि दैत्य-
　　　भीत्या यमेत्य मरुतां पतिराललम्बे ॥६८॥

924　आप्लावितक्षितितला वडवाग्निनैव
　　　सा दह्यतां जलनिधेर्वरमम्भसां श्रीः ।
　　शक्ता न योन्नतिकृतो वपुषः प्रमार्ष्टु-
　　　मङ्कोत्थितस्य शशिनोऽपि कलङ्कलेखाम्[1] ॥६९॥

925　ऊर्ध्वं गताभिरवटास्पदपादपस्य
　　　शाखाशिखाभिरलमुन्नतिशालिनीभिः ।
　　श्लाघ्यामधोगतिमपि स्खलतां कदाचि-
　　　दालम्बकारणमवैमि जटावलीनाम् ॥७०॥

926　भ्रूभङ्गमारचय निष्ठुररोषरूक्ष-
　　　मुद्वर्तयेक्षणपुटौ दश दन्तवासः ।
　　हाराँल्लुनीहि परिपिण्ड्ढि मिथः कराग्र-
　　　[2]युग्मं जहि क्षितितलं पटुपार्ष्णिघातैः ॥७१॥

927　आस्फालयांसशिखरं शिखरानुकारि
　　　गर्जाभ्रनादमुखरस्थिति भिन्द्धि धैर्यम् ।
　　इत्थं वृथा विफलमत्सरमीहमान-
　　　मेतन्न संप्रति विभाति सदः स्मरारेः ॥७२॥

928　न भ्रूविभङ्गरचना वदने, न चांस[3]-
　　　देशाहतिर्नदशनच्छददंशयोगः ।
　　क्रोधानुभावघटनेन विना क्षयेऽग्नि-
　　　र्भस्मीकरोति भुवनानि च दुःसहार्चिः ॥७३॥

---

१. C कलङ्कलेशं for कलङ्कलेखाम् ।　२. B, C युग्मे जहि for युग्मं जहि ।

३. B, C रुचांस for न चांस ।

929 हेलावरोपितकुलाचलचक्रवाल-
लोकापवर्तनसमर्थभुजाः क्व यूयम् ।
संरम्भ एष च विसंवददाननेन्दु-
बिम्बद्युतिः क्व भवतां दितिजाहवेषु ॥७४॥

930 संक्षेप एष गदितो वचनप्रपञ्च-
संचोदनेन किमिवोर्जिततेजसां वः ।
दैत्येन्द्रडामरसमीकनियोगमेव
वाक्यार्थमत्र मम किं विबुधा मनुध्वे ॥७५॥

931 विघटितगुरुपर्वोत्सेधमभ्युन्मिषन्मे
दहतु दितिजवंशं क्रोधहुङ्कारवह्निः ।
पुनरपि पुरुहूतः स्वां पुरीं रत्नसाना-
वधिवसतु पुरेव स्तूयमानः सुरौघैः ॥७६॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये अग्निदंष्ट्रारभटीवर्णनं नाम एकादशः सर्गः ।

---

## द्वादशः सर्गः

932 इति स्थिरारातिविरोधनिश्चया-
मुदीर्य वाचं विरते गणाधिपे ।
स्मितच्छटाबृंहितहारदीधिति-
स्ततोट्टहासो न्यवलद्विवक्षया ॥१॥

933 अरातिमत्तद्विपकुम्भमण्डली-
विपाटनोत्थामलमौक्तिकावलिः ।
कृपाणलग्ना विदधार यस्य सा
तदच्छधाराजलबुद्बुदश्रियम् ॥२॥

934 वितेनिवांसोऽप्यविलङ्घ्यरूपता-
मनेकसंख्या दधतोऽनपायताम् ।
हरेण कल्पा इव येन कालता-
मुपेयुषानायिषत द्विषः क्षयम् ॥३॥

935 दधत्यभीक्ष्णं धवलानि भूयसीं
दिगन्तरव्याप्त[1]निरर्गलां श्रियम् ।
रणेषु निर्जित्य बलानि विद्विषां
यशांसि येन प्रथयाम्बभूविरे ॥४॥

936 दधत्सदाशोणितपानशौण्डतां
कृताभियोगो बहुलक्षपाटने ।
बभूव यस्यातनुदन्तमण्डलः
क्षयाय कौक्षेयकराक्षसो द्विषाम् ॥५॥

---

१. B, C दिगन्तरव्यापि for दिगन्तरव्याप्त ।

937 सुबन्धुरामोदमनोरमां श्रियं
स्फुरच्छरारौ युधि योधिकां दधत् ।
निरास सैन्यं तरसा सुरद्विषा-
मिषीकतूलं शरदीव मारुतः ॥६॥

938 यशः सुवृत्तस्थिति येन निर्मलं
समुद्वहद्दर्पणमण्डलश्रियम् ।
पुरंध्रिनिःश्वाससमीरणाहतं
मलीमसच्छायमकारि विद्विषाम् ॥७॥

939 रणाजिरक्ष्माकलशीकृतं जवात्
क्रमोज्झितः सत्त्वसहाय एव यः ।
अरातिलोकं मथितं सहस्रधा
चकार दण्डाहतमप्यगोरसम् ॥८॥

940 श्रियं दधानं चतुरस्रताश्रया-
[1]मनेकपत्त्यश्वरथद्विपाकुलम् ।
विपक्षमाविष्कृतसंधिविग्रहं
[2]तथाप्यनष्टापदमेव यो व्यधात् ॥९॥

941 विकासयन् कीर्तिकुमुद्वतीं क्षणा-
द्विलोचनानन्दकरः कलास्पदम् ।
सरूपभावेऽप्यपराजयक्षमतां
दधन्मृगाङ्कं विशिनष्टि यो गुणैः ॥१०॥

---

१. C····मनीकपत्यश्व··· ।

२. C तथापि नष्टापदमेव for तथाप्यनष्टापदमेव ।

942 [1]अनेकपक्ष्माहितसङ्गराजितं
श्रियं दधानं विकटांसमुज्ज्वलाम् ।
बभार सद्भाविमपार[2]तारकं
[3]प्रवेष्टयोर्यश्च दृशोरिव द्वयम् ॥११॥

943 उपेयुषोन्मूलनदक्षतां क्षणात्
क्षयानिलेनेव विपक्षतां गता ।
क्षमाभृतां येन ततिः प्रसर्पता
प्रकम्पितासन्नवधातुराजिता ॥१२॥

944 करेण चक्रं दधदुज्ज्वलेन यः
पुरन्दरस्याप्यभिमानमाक्षिपत् ।
रणाजिरं स्वर्गमिवातनोद्बला-
दपारिजातं पुरुषोत्तमो यथा ॥१३॥  कुलकम्

945 अपक्रमारम्भविजृम्भिताधिक-
[4]प्रकोपनिर्धूतशिरः श्लथास्पदम् ।
[5]यथाप्रदेशं विनिवेशनेच्छया
करेण माणिक्यकिरीटमुत्क्षिपन् ॥१४॥

946 उरःस्थलीविस्फुरदश्मगर्भक-
स्फुरत्प्रभामण्डलहारिविग्रहः[6] ।
दधत्त्रिमार्गासलिलावगाहन-
प्रसक्तशैवालसुरद्विपश्रियम् ॥१५॥

---

१. C अनेकपक्ष्माहितमङ्गराजितम् ।
२. B, C''''मचारुतारकम् ।
३. A, B, C प्रकोष्टयोः for प्रवेष्टयोः ।
४. C प्रकोपनिष्ट्च्यूत for प्रकोपनिर्धूत ।
५. C यथाप्रदेशे for यथा प्रदेशं ।
६. C....हारविग्रहं for हारिविग्रहः ।

947 स्फुरज्जयश्रीमणिसालभञ्जिका
विशङ्कटस्तम्भभुजः सविभ्रमम् ।
विवेष्टमानोरगभीरुभीषणां
वितर्कजिह्माकृतिमुत्क्षिपन् भ्रुवम् ॥१६॥

948 सा भारतीं वाङ्मयकल्पपादप-
स्फुरत्प्रतानोज्ज्वलरत्नमञ्जरीम् ।
निनाय निर्यद्दशनांशुकेसरां
सभाङ्गनायाः शुचिकर्णपूरताम् ॥१७॥ कलापकम्

949 विशुद्धवर्णोज्ज्वलहंससंहतिः
प्रसादगाम्भीर्यविशेषशालिनी ।
मनोरमा तस्य मुखं सरस्वती
वसुन्धरापीठमिव व्यभूषयत् ॥१८॥

950 गिरानया प्रस्तुतमेतदीदृशं
तवार्य ! कार्यं बहु मन्यते न कः ।
मृणालवल्लीकुसुमं तनोति तत्
करोति लक्ष्मीरपि यन्निकेतनम् ॥१९॥

951 वचोऽत्र सर्वस्य मनोरमं भवा-
न्यदभ्यधात्तत्र क एव विस्मयः ।
यतो भवत्येव विवेकशालिनां
विपश्चितां प्रातिजनीनवाक्यता ॥२०॥

952 अतस्त्वयात्यूर्जितसत्त्वशालिना
समन्तभद्रेऽपि वचस्युदीरिते ।
ममावकाशोऽस्ति न वक्तुमित्यवन्
ब्रुवे तथाप्याश्रितकार्यगौरवः ॥२१॥

---

१. यदभ्यधात्तन्न for यदभ्यधात्तत्र ।

953 अयं जडोऽस्मात् कुत एव नीतिम-
द्वचोऽभ्युदेतीति न कल्पना क्षमा ।
किमश्मनोऽत्यन्तमलीमसात्मनः
सुवर्णमक्षुण्णगुणं न जायते ॥२२॥

954 गतार्थतत्त्वप्रतिपत्तिहेतुतां
मतिः कुतस्ते तिमिरानुषङ्गिणी ।
प्रभासमाना गणनाथ ! दृश्यते
न रत्नदीपस्य शिखा सकज्जला ॥२३॥

955 अभीक्ष्णमन्तः सरसान्यतन्द्रिताः
सुवृत्ततां बिभ्रति नीतिशालिनः ।
वितन्वते संसदि कूर्चकेसर-
द्रुमाः फलानीव वचांसि सूरयः ॥२४॥

956 समीक्ष्य सम्यग्भुवि कृत्यवस्तु यः
प्रतीक्षते देशबलादिसाधनम् ।
भवन्ति तस्यानपचारचारवः
क्रियाविशेषा न विपाकनीरसाः ॥२५॥

957 अखण्डितात्यूर्जितवीर्यसंपदो
निराकरिष्णोस्तरसा युधि द्विषः ।
प्रमाद-दोषानुपघातसुस्थितं
न नीतितुल्यं [1]सममस्ति साधनम् ॥२६॥

958 प्रयुक्तसंस्कारगुरुर्गरीयसां
व्रजत्यवस्थैव ननु प्रतीक्ष्यताम् ।
भवत्युपावर्जिततैलसेकया
नहि प्रदीपो दशया विना स्थितिम् ॥२७॥

---

१. A क्षममस्ति for सममस्ति ।

959 मलीमसाचारनिरर्गलस्थिते-
रखण्डमन्यन्मलिनं प्रकल्पते ।
तमोवने वेश्मनि तिष्ठतोऽनिशं
व्रजत्यशेषं जगदन्धकारिताम् ॥२८॥

960 सुरद्विषां निह्नुमहे न पौरुषं
न च प्रशंसां तनुमस्तथात्मनः ।
निरूपयामो नयवर्त्म केवलं
यथाभिलाषास्तु परस्य वृत्तयः ॥२९॥

961 सभूमिलाभं शुभवर्तिरेखया
मनोरमं मण्डलकार्यमस्खलत् ।
अशेषमुन्मीलयति क्षमाभृतां
विचित्ररूपा ननु नीतितूलिका ॥३०॥

962 यथाखिलद्रव्यगतांश्चिकित्सका
विविञ्चते पञ्चरसादिकान् बुधाः ।
तथैव मन्त्राश्रयतामुपेयुषः
सुनीतिभाजोऽवयवाञ्जिगीषवः ॥३१॥

963 अपार्थतादोषपरीतमक्रमं
ससंशयं संधिविहीनतां गतम् ।
न देशकालादिविरोधि पण्डितैः
प्रशस्यते कार्यमसाधुकाव्यवत् ॥३२॥

964 बिभर्ति पारिप्लवतामुदन्वत-
स्तदूर्मिसंसर्गकृतामिवोत्थिता ।
अवैमि लक्ष्मीर्नयवर्त्मनागता
स्थिरं निबध्नाति नृपे पदं पुनः ॥३३॥

965 अमन्दरभ्रान्तिकदर्थितोदधि-
विलुप्तदेवासुरमन्थसंभ्रमः ।
सचेतसः कस्य न वल्लभोऽर्जने
नयप्रकारोऽपर एव वा श्रियः ॥३४॥

966 न नीतिशास्त्रोपनिषत्सु पञ्चधा
स्थितिं जहात्येष परः पुमानिव ।
प्रदीपितोद्दामविपर्ययग्रहै-
र्निरूपितो मन्त्र इह प्रणेतृभिः ॥३५॥

967 विभज्यमाना बहुधार्थकोविदैः
ससंशयग्रन्थिरमन्थरात्मभिः ।
मृणालवल्लीव गुणान्विहाय किं
व्यनक्ति नीतिर्जडसङ्करोद्धता ॥३६॥

968 उपायशून्यास्तरवः क्षिताविव
क्रियाविशेषा व्यभिचारिणः फले ।
त एव नूनं नियमेन भूभृतां
फलन्ति कल्पद्रुमवन्नयाश्रयाः ॥३७॥

969 स्थिराभ्युपायप्रकटारसञ्चयं
दधद्विरूढक्रमकालनेमिताम्[1] ।
प्रवर्तितं मण्डलनाभिबन्धनं
न कार्यचक्रं क्वचनावशीर्यते ॥३८॥

970 व्यपेक्षते बाहुबलं जिगीषतः
सुनीतिमाक्रान्तजगत्त्रयं ध्रुवम् ।
रथास्पदं चक्रमिवाश्वमण्डलीं
विवस्वतो मेरुतटीविवर्तिनः ॥३९॥

---

१. C क्रमकालनीमिताम् ।

971　उपायसोपानपरम्परामिमां
　　यथाक्रमं योऽधिरुरुक्षुराश्रितः ।
　स नूनमुच्चैः पद एव नीतिमान्
　　कृतप्रतिष्ठो न चिराद्विभाव्यते ॥४०॥

972　नरेन्द्रलक्ष्मीरुचितैरुपक्रमैः
　　क्रमेण तैस्तैर्गुरुभिः प्रसाधिता ।
　नयात्मदर्शे गुणदोषदर्शन-
　　स्फुटावधाना व्यवलम्बतामियम् ॥४१॥

973　प्रकाश एव प्रविलुप्तदर्शनो
　　गतः क्षणाद्धूक इवान्ध्यविप्लवम् ।
　न जातु कालं मतिदुर्विधो जनो
　　बिभर्ति सामर्थ्यमुदर्कमीक्षितुम् ॥४२॥

974　विघृण्वतां मण्डलसंधिविग्रह-
　　व्यापाश्रयाः कार्यगतीरनेकशः ।
　[1]क्रियापचारा न भवन्ति धीमता-
　　मनुक्रमापक्रमयोगचिन्तया ॥४३॥

975　विरूढमूलस्य नयानुसारिणः
　　सकोषदण्डोपचयस्य भूपतेः ।
　कुशेशयस्यौपचितेव कर्णिका
　　बिभर्ति लक्ष्मीः परिणामपीनताम् ॥४४॥

976　विचिन्वतोऽर्थं निजमण्डलाश्रयं
　　गुणानुपायांश्च नृपस्य शक्तयः ।
　न देशकालानवधारणक्रमा-
　　त्समुत्पतिष्णोरुपयान्ति बृंहणम् ॥४५॥

---

१. C क्रियाभिचारा for क्रियापचारा ।

977　मदच्छटार्द्रीकृतगण्डमण्डली-
　　निलीनभृङ्गद्विपयूथदारिणः ।
निमज्जतो वारिणि तीव्रतेजसः
　　सटा विलुम्पन्ति हरेर्झषा अपि ॥४६॥

978　अतीतकालस्य तदत्र जृम्भितं
　　तपस्यमासे करिणोऽपि दुर्जयः ।
निदाघकाले मुखलाङ्गलः शुना-
　　मपि व्रजत्येव निकार्यतां यतः ॥४७॥

979　समुद्वहन्नक्षतपक्षभूमिभृ-
　　द्विभेददक्षामिह शक्तिमायताम् ।
मयूरकेतुर्वदनैरिवाधिकं
　　विभाति षड्भिर्नयविस्तरो गुणैः ॥४८॥

980　विभाव्यमानासनसंधिसंश्रया
　　गुणाः परिष्कारमणिस्फुटत्विषः ।
तदद्भुतं यद्विजयैषिणां श्रियं
　　[1]प्रसाधयन्त्यप्रविमृष्टविग्रहाः ॥४९॥

981　कृतास्पदा सारगुरुः स्थिरात्मसु
　　क्षमेव दिक्कुञ्जरविग्रहेष्वसौ ।
जहात्युपायेषु चतुर्षु न स्थितिं
　　दृढीकृता नीतिरिह क्षमाधरैः ॥५०॥

982　उपेयसिद्ध्यै भवतां मतिः स्थिरा
　　प्रवर्तते चेदनपायसाधनः ।
अवैमि षाड्गुण्यविचारगोचरैः
　　कृतं ततः संप्रति नीतिशासनैः ॥५१॥

---

१. C प्रसादयन्ति for प्रसाधयन्ति ।

983 क्षमा भवन्तः क्षयसूर्यतेजसो
जगत्त्रयस्य स्थितिसर्गसंहृतः[1]।
विधातुमेकाकिन एव लीलया
न मूर्तिभेदा इव किं स्वयंभुवः ॥५२॥

984 जिगीषतां मण्डलसंधिविग्रह-
व्यपाश्रयाः[2] [3]कार्यंगती[4]र्विहाय वः।
न युद्धसंरम्भरसात्तथापि तु
क्षमाः परान्प्राष्टुमिहास भित्तयः ॥५३॥

985 अवैमि दैत्यान् समरेषु दुर्जयान्
भुजांश्च वो दिग्गजहस्तपीवरान्।
अतोऽत्र युक्तो नय एव सङ्कटे
जलप्लवे सेतुरिवोत्तितीर्षताम् ॥५४॥

986 किमस्त्यतः शंसत वाच्यविप्लुतं
यदभ्युपायेषु परेषु सत्स्वपि।
द्विषत्सु चर्चा [5]भवतामपीदृशी
प्रचण्डदण्डैकरसा विजृम्भते ॥५५॥

987 उपाय एवेति च दण्ड एष नो
न नीतिवृद्धैरवलम्बनीकृतः।
तथापि कार्येऽत्र गुरुण्युपेक्षितुं
न युक्तरूपो भवतामनुक्रमः ॥५६॥

---

१. C सर्गसंहृतीः for सर्गसंहृतः।

२. C reads व्यवपाश्रयात् for व्यपाश्रयाः।

३. C कार्यंभरं विहाय वः for कार्यंगतीर्विहाय वः।

४. A omits....गती....।

५. C भवताममीदृशी for भवतामपीदृशी।

988 निरुद्धरन्ध्रप्रसरश्लथीभव-
ज्जडप्रवेशस्थिरसंधिसुस्थिताः।
न कार्यसिन्धोरिह तारयन्ति के[1]
[2]प्लुता इवोच्चैः कृतिनः सकर्णकाः ॥५७॥

989 दहन्ति कल्पप्रलयेषु मानवौ
जगन्ति वेला श्लथयन्ति सागराः।
न तादृशोऽसौ समयोऽस्ति यत्र वा
स्थितिं विभिन्दन्ति रुषा भवादृशाः ॥५८॥

990 अवैमि नूनं न च भर्तुराज्ञया
विना समर्थाः स्थ रिपोर्वनिग्रहे।
जगत्परिप्लावयितुं न वीचयः
क्षमास्तटस्थस्य कदाचिदम्बुधेः ॥५९॥

991 प्रवर्तमानां प्रतिपत्तुमर्हथ
त्रिधा विभिन्नामत एव शूलिनः।
हिताय [3]शक्तिकृतविष्टपत्रय-
स्थितिं पुरारेरिव नाकनिम्नगाम् ॥६०॥

992 अयं प्रभुः कर्मसु दैवमानुष-
प्रभेदरूपेष्वविलङ्घ्यतां दधत्।
अचिन्तनीयो नयतत्त्वचिन्तकै-
र्मनीषिभिर्दैवमिति स्म कथ्यते ॥६१॥

993 जिगीषतां दोर्द्रुमदर्पविभ्रमा
[4]धियश्च षाड्गुण्यविचारगोचराः।
न यान्त्युपायप्रतिपत्तये दृढाः
पराङ्मुखेऽस्मिन्फलभागितां[5] क्वचित् ॥६२॥

---

१. C कं for के। २. C लवा for प्लुताः।
३. C शक्तिं कृतविष्टपत्रय for शक्तिकृतविष्टपत्रय।
४. C धिया च for धियश्च। ५. C फलभाग्यतां for फलभागिताम्।

994 यदानुगुण्यं भजते जगत्यसौ
तदा तदात्वायतिषु स्फुटं नृणाम् ।
क्रियाविशेषाः सकला प्रवर्तिता
विपर्ययेणापि हि सिद्धिहेतवः ॥६३॥

995 प्रतीयमानाः प्रकटं पृथग्जनै-
र्विरुद्धरूपा इव कस्य विस्मयम् ।
अमुष्य चेष्टा जनयन्ति नोच्चकै-
र्विलुप्तमोहप्रतिपत्तिगोचराः ॥६४॥

996 इहैव निःश्वासगमागमक्रिया-
प्रबन्धभेदेन चराचरात्मनि ।
व्रजत्यभीक्ष्णं [1]प्रतिबद्धवृत्तिता-
मशेषविश्वोदयसंहृतिक्रमः ॥६५॥

997 अमुष्य गर्भीकृतसागरोदर-
प्रतिष्ठशेषोरगभोगशायिनः ।
सुरद्विषो नाभिसरोजकर्णिका-
विटङ्कपीठः समभूच्चतुर्मुखः ॥६६॥

998 अभीक्ष्णमष्टाभिरमुष्य मूर्तिभि-
र्विभोरवष्टभ्य जगन्ति तस्थुषः ।
भिनत्ति मायीयमथाणवं नृणां
स्मृतिस्तथा कार्मणमाशु बन्धनम् ॥६७॥

999 स्थिरप्लवानुप्लवविप्लवोज्झिता
निजेऽत्र तिष्ठन्त्यणवस्तथात्मनि ।
दुरन्तमायीयविवर्तभेदिनी
यदास्य शक्तिः स्वभुवो [2]विजृम्भते ॥६८॥

---

१. C प्रतिबन्धवृत्तिता for प्रतिबद्धवृत्तिता ।
२. C विजृम्भति for विजृम्भते ।

1000　अमुष्य तत्त्वान्यखिलानि शेमुषी-
　　निशेमुषी प्रस्तुतकार्यनिर्णयम् ।
विधातुमर्हन्त्यमलीमसाधुना
　　मुधा किमाध्वे गुरुमोहविप्लुताः ॥६९॥

1001　अस्मादवाप्य भुवनैकगुरोरनुज्ञा-
　　मज्ञानसंतमसबन्धविभेदभानोः ।
कार्येऽत्र सारगुरुणि प्रतिपत्तिमेका
　　मर्हाः स्थ कर्तुमनवस्थितनिश्चयान्धाः ॥७०॥

1002　संरम्भिणः किमिति नीतिपथं विहाय
　　लीलाविगाढगुरुकीर्तितरङ्गिणीकाः ।
स्तम्बेरमा इव तनूः करपिष्टहार-
　　धूलिच्छटाभिरधुना कलुषीकुरुध्वे ॥७१॥

1003　लोकः प्रमादपरमः क्वचिदर्थसिद्धि-
　　माप्नोति नूनमिह सत्यपि नाभ्युपाये ।
आलोकयत्यभिनिमीलितलोचनः कि-
　　मादर्शमण्डलतले विमलेऽपि वक्त्रम् ॥७२॥

1004　प्रस्तूयते यदभिधेयवचोभिरस्त-
　　मोहान्धकारनिकरैरिह कार्यतत्त्वम् ।
भङ्क्तं तदाशु मतिदुर्विधदुर्दुरूट[1]
　　कूटाभिरूपकुटिलाङ्गुलिभिः सहैति ॥७३॥

1005　वन्ध्यात्मनामिह नरेन्द्रकथासु[2] मन्त्र-
　　चर्चां निरूपयितुमाशु तथा क्षमा वः ।
ग्रासीकरोति न तथाभ्रपिशाच एष
　　निःशङ्कमर्कशशिनावधुनापि तावत् ॥७४॥

---

१. C दुन्दुकुट for दुर्दुरूट ।　　२. C नरेन्द्रकलासु ।

1006 प्राप्ता विशुद्धिमधिकां परिणामरूप-
वन्ध्याश्रिता प्रकृतिभोगनिरर्गलत्वम् ।
उर्वीधरस्य चितिशक्तिरिवापचार-
शून्या भवत्यनिशमप्रतिसंक्रमा श्रीः ॥७५॥

1007 तस्मान्निरूपितपरात्मबलाबलैक-
कार्यक्रमौपयिकशक्तिगुणोदयानाम् ।
कर्तुं तदत्रभवतां क्षममाहवेषु
येनानुतापशिखिना न परिप्लवध्वे ॥७६॥

1008 चेतो विकल्पमरुताभिहतं किमेत-
दालक्ष्यलाघवमवस्थितिलाभशून्यम् ।
संवादितां नयति दूरमिषीकतूल-
माकाश एव हि परिभ्रमणाकुलं[1] वः ॥७७॥

1009 तीक्ष्णेन तीक्ष्णमनिशं मृदुना मृदुं च
संसाधयन्ति परमौपयिकेन तज्ज्ञाः ।
सूर्योपलं दिनपतिर्ज्वलयत्यभीक्ष्ण-
मिन्दुश्च चन्द्रमणिमार्द्रयति स्वधाम्ना ॥७८॥

1010 इति गिरं समुदीर्य नयानुगां
विरतिमीयुषि पार्षदनायके ।
अवधूतार्थशरीरतया सदः
कलकलाकुलसाधुवचोऽभवत् ॥७९॥

1011 वाक्यं नवाम्बुदगभीररवं तदीय-
माकर्ण्य पार्षदपतेः सभया तदानीम् ।
संहृष्टयाशु लवलीलतयेव तत्र-
संभावितातनुफलोदयया बभूवे ॥८०॥

---

१. C परिभ्रमणाकुले for परिभ्रमणाकुलम् ।

1012 आबद्धविस्मयविधूनितमूर्धभाग-
हेलोत्पतद्विकटरत्नवतंसभृङ्गैः ।
तद्वाक्यमस्य सुरसंहतयः शशंसु-
रुद्गीर्णमोहतिमिरा इव कर्णरन्ध्रैः ॥८१॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवे राजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
महाकाव्ये अट्टहासनयोपन्यासो नाम द्वादशः सर्गः ।

---

## त्रयोदशः सर्गः

1012A इत्यट्टहासवचनादथ जृम्भमाण-
संरम्भभीषणतरभ्रुकुटीविभङ्गम् ।
चण्डेश्वरेण निजदेहभरावशीर्ण-
माणिक्यपीठनिबिडाश्रयसंधि चेले ॥१॥

1014 निर्व्यूढसङ्गरभरस्य करेण बाहोः
केयूरशोणमणिदीधितिधातुदिग्धम् ।
कुम्भस्थलं करिपतेरिव तीव्रमन्यु-
रास्फालयन् सपरुषध्वनिमंसपीठम् ॥२॥

1015 कार्षाणवीं करपुटोन्मलनादनल्प-
कोपस्य पिङ्गितदिगन्तरमुत्पतन्ती ।
उल्केव तस्य सकलासुरचक्रवाल-
सर्वप्रणाशपिशुना शुशुभे शुभार्चिः ॥३॥

1016 तस्याग्रवर्तिभिरलक्ष्यत तीव्रकोप-
संरम्भविभ्रमभृतः सुरचक्रवालैः ।
आकृष्टिपाशतुलनां दधती विपक्ष-
पक्षश्रियः कुटिलिता सुरसंसदि भ्रूः ॥४॥

1017 तिर्यग्विवर्तनवलद्विकटांसकूट-
हेलाविमर्दरभसोत्थितधूमलेखम् ।
कण्ठं दधत्प्रकृतिनिष्ठुरकालकूट-
कूटासितच्छविमिवेन्दुकलाकिरीटः ॥५॥

1018 केयूरशोणमकरीमणिचक्रवाल-
निर्यत्प्रभारुणितमौक्तिककर्णपूरः ।
क्षीरोदसिन्धुरिव गौररुचिः प्रवाल-
वल्लीप्रभावलयलङ्घितफेनचक्रः ॥६॥

1019 निर्मुच्य धूर्जटिसदस्यभिलङ्घितौष्ठ-
बालप्रवालविटपाङ्कुरकोटिभागम् ।
कोपानलाकुलितदुर्धरधैर्यसिन्धु-
फेनच्छटापटलविभ्रममट्टहासम् ॥७॥

1020 आकोपकम्पितशिराः सहसोज्जिहासु-
रापृच्छ्यमान इव मानिमनास्तितिक्षाम् ।
वाक्यं जगाद गणनाथनुतिप्रगल्भ-
मत्यूर्जितं रणनयान्तरतत्ववेदी ॥८॥ [१]कलापकम्

1021 प्रज्ञां नमामि भुवनेषु विचित्ररूपा-
मायां गिरश्च सकलव्यवहारहेतुम् ।
वक्तुं यदाश्रयवशेन [२]ममापि धैर्य-
मुक्ते त्वयापि गणनायक ! नीतिगर्भम् ॥९॥

1022 मार्गत्रयेऽप्यविहतप्रसरा मनोज्ञ-
शब्दश्रुतिः शुचितयानुगताश्रितश्रीः ।
जह्नोरिवाशु तनया घटमानकर्ण-
धारा मनोहरति कस्य सतां न वाणी ॥१०॥

1023 सुप्त-प्रबुद्ध-वदनर्गलमुन्मिषन्ति
यासु श्रुतासु सुधियामपि धीविकल्पाः ।
श्च्योतन्ति ताः किमपि तन्मधु हृद्यरूप-
मर्थ्या गिरः श्रवणहारिगभीरबन्धाः ॥११॥

---

१. C reads चक्कलकं for कलापकम् ।

२. B, C समाधिधैर्यं for ममापि धैर्यं ।

1024 कार्यं सुनिश्चितमुपक्षिपतीह मन्त्र-
चर्चासु नीतिनिपुणः परिणामरम्यम् ।
बीजं प्रजापतिरुवाप तदर्घ्यमप्सु
यस्माददः समुदभूत्कमलासनाण्डम् ॥१२॥

1025 श्लाघ्यां विकासघटनां वचसेयुषात्व-
माविभ्रता दशनदीधितिपक्ष्मलक्ष्मीम् ।
शंसास्पदत्वमुपजिग्मिथ सौम्य कल्प-
शाखीव रत्नकुसुमस्तवकेन नूनम् ॥१३॥

1026 वाक्यं तव श्रवणहारि विनिर्गतं य-
देतद्गणाधिप ! मुखान्न [1]तदत्र चित्रम् ।
आह्लादहेतुमनिशं न जगत्त्रयस्य
स्यन्दिष्यते कथमिवामृतमिन्दुबिम्बात् ॥१४॥

1027 मन्येऽभिधातुमबुधात्र सरस्वतीति
लीलागृहीतविकचारुणपुण्डरीकम् ।
संस्कारकार्यवशपुञ्जितसप्तलोक-
जिह्वावितानमिव हस्ततलं वहन्ती ॥१५॥

1028 उक्ते त्वयापि परिनिष्ठितनीतिगर्भ-
मित्थं विकल्पशतसंकुलतामवाप्ते ।
वक्तव्यमेव हि मया सविशेषमत्र
नैवास्ति किञ्चिदनपाश्रिततारतम्यम् ॥१६॥

1029 दोर्दण्डदर्परभसप्रतिबद्धवृत्ति-
मुत्साहमुत्ससृजुषां भजतां च नीतिम् ।
न्यक्षेण कार्यगहनं विषमीकरोति
पुंसामुपायकलनाघनमारुतौघः ॥१७॥

---

१. C तदस्ति for तदत्र ।

1030 ब्रह्माण्युदीरयतु साम समीकदर्पा-
द्भेदं जनव्रजमुखानि च यान्त्वलं वः ।
दानं मतङ्गजघटा वितरत्वमन्द-
भूरीकृतो युधि मया दितिजेषु दण्डः ॥१८॥

1031 ते मन्दवीर्यगतयः स्फुटमन्य एव
सामादिमन्थरपराक्रममासते ये ।
ये तु प्रसह्य दलयन्ति विपक्षचक्र-
माक्रम्य ते जगति खण्डविषाणकल्पाः ॥१९॥

1032 एको गुणो गुणशतादपि तावदेष
संप्रत्यनन्यसदृशः किमिवात्र षड्भिः ।
येनेन्दुसुन्दरयशःपटलातपत्र-
दण्डत्वमेति तव पीवर एष बाहुः ॥२०॥

1033 एषा विडम्बित-भुजङ्गम-भोगकाष-
कार्श्याङ्कमध्यविषमस्थितमन्दराद्रिः ।
एकैव यत्र गुहहस्तगता विभाति
शक्तिश्च तत्र तिसृभिः किमिवापराभिः ॥२१॥

1034 प्रेङ्खच्छिखण्डभरशोभिवपुः कलिन्द-
कन्याह्रदश्रियमगाधतया दधानम् ।
शक्तो रणे दलयितुं प्रचलाकिकेतु-
रह्नाय कालियमिवाहितमच्युतश्रीः ॥२२॥

1035 सङ्ग्रामवासभवने नियतं निषण्णा
निःसंशयं विदधति प्रतिपक्षलक्ष्मीम् ।
[1]संवाहिकां चरणयोः करिकुम्भपीठ-
पीनोन्नतस्तनकृतास्पदयोः समर्थाः ॥२३॥

---

१. C असेहिका for संवाहिका ।

1036 आरोप्यते भटजनेन शरासनाग्र-
कोटिं समीकभुवि यो गुणबन्धपाशः।
आकृष्य तेन तरसा तरलत्वमाप्ता
संयम्यते दृढतरं प्रतिपक्षलक्ष्मीः ॥२४॥

1037 तेजस्विनो ननु विधेयमियत्पिनष्टि
दुष्टात्मनां यदनपेक्षितदेशकालः।
दैवानुभाववशतो वनगोचरोऽपि
किं श्रीफलं कथयतापरथा न भुंक्ते ॥२५॥

1038 देशो न सोऽस्ति न कृतस्थितिरेष यत्र
कालं विभोः प्रगुदतस्तदपेक्षया किम्।
मिथ्याविकल्पजनितारिविनाशविघ्न-
निघ्नाः किमेवमधुनाश्रितशङ्कमाद्धे ॥२६॥

1039 क्षीणोऽपि दूरमवलम्बत एव नून-
मव्याहतां जगति कार्यधुरां महस्वी।
किं लोचनोत्सवविधायिकलावशेष-
रूपोऽपि शीतकिरणः कुरुते न रात्रिम् ॥२७॥

1040 अम्भोनिधिं प्रलयकालविलङ्घितात्म-
मर्यादमस्तमयनिष्प्रभमुष्णरश्मिम्।
आलोक्य धीरमनसो हृदयेन नून-
मुच्चैर्हसन्ति विपदि स्थिरधैर्यरूपाः ॥२८॥

1041 उत्प्रेक्ष्य नूनमभयेऽपि भयं [1]निसर्ग-
भीरुर्नितान्तमुपगच्छति विक्लवत्वम्।
पञ्चत्वमेति नितरां सुचिकित्सितोऽपि
शङ्काविषव्यतिकरेण विमूर्च्छितः सन् ॥२९॥

---

१. C निसर्ग for विसर्ग।

1042 विस्तीर्णतादि गगनोदधिभूभृतां य-
श्चक्रे स सङ्कटमनाः स्फुटमन्य एव ।
येन व्यधायि महतां हृदयेष्वनाप्त-
पर्यन्तवृत्ति तदसावपरोऽस्ति वेधाः ॥३०॥

1043 जृम्भापरीतवदनाः श्वसितानुबन्ध-
भाजः प्रकम्पिवपुषोऽरुणरूक्षनेत्राः ।
रोषज्वराकुलधियः सुभटाः कृपाण-
धाराजलं समभिलष्यथ हे न कस्मात् ॥३१॥

1044 क्रोधानलस्य हृदयं भ्रुकुटिर्भ्रुवश्च
दन्तच्छदा दशनकोटिविलङ्घनानाम् ।
स्कन्धाश्च निर्दयकराभिहतेर्भटा वः
स्वाधीनगोचरतयैव दिशन्ति हासम् ॥३२॥

1045 हेलानिरस्तपवना गुरुसंप्रहार-
रीढासहाः सुरभटाः पटुतां वहन्ति ।
उच्चै रटिः सपदि शीतलतां करोति
फूत्केव वक्त्रविसृतोष्मजुषां द्विषा वः ॥३३॥

1046 संवादितामजहतो दलिताद्रिकूट-
कल्पक्षयप्रसृतचण्डसमीरणानाम् ।
कस्मिन्निरर्गलभुजार्गलचण्डदर्प-
निष्पिष्टदानवभटा न चकास्थ संख्ये ॥३४॥

1047 क्रेतुं यशांसि समरापणिषु प्रगल्भ-
मिन्दुप्रभाधवलभांसि कृतस्पृहाणाम् ।
चेतो दुनोति भवतामनुतापहेतुः
कस्मात्परेण कृत एष न मानभङ्गः ॥३५॥

1048 संहारकालशिखितीव्रतरोऽपि मन्यु-
रुत्तंसलूनिफल एव स एष जातः।
च्छिन्ना इतीव भवतां किरणच्छटाभि-
रेते हसन्ति मणिकुट्टिमसीम्नि हाराः ॥३६॥

1049 स्वच्छं सुवृत्तमनुरागि हरिद्वयस्या-
लीलागृहीतमधुनापि यशः प्रकाशम्।
श्वासानिला मलिनयन्ति न बाहुदण्ड-
दर्पश्रियो ललितविभ्रमदर्पणं वः[1] ॥३७॥

1050 शौर्यश्रिया नहि दरिद्रिथ संयुगेषु
पारं गताः स्थ च धिया नयमार्गसिन्धोः।
छिन्नं किमत्र भवतां यदलीकशौर्य-
शौटीर्यशात्रवनिकारदशां सहध्वे ॥३८॥ युग्मम्

1051 उन्मूलितक्षितिभृतां सहसा सहेलं
सुस्कन्धतां च दधतामपरेरितानाम्।
विस्तीर्णमम्बरमिव प्रलयानलानां
सङ्ग्रामवर्त्म भवतां हि विहारमार्गः ॥३९॥

1052 संविद्रते जगति के न यथाशु यूय-
माशाकरीन्द्रकरपीवरबाहुदण्डाः।
लीलावरुग्ण-दृढसंधि-चतुर्मुखाण्ड-
खण्डद्वयं विपरिवर्तयितुं समर्थाः ॥४०॥

1053 उन्मूलितामरभुवां रणसंकटेषु
शक्यं न वः कलयितुं हृदयं परेषाम्।
अभ्युद्धृतक्षितिभृतां प्रलयागमेषु
निष्कम्पमेव गगनं हि समीरणानाम् ॥४१॥

१. C विभ्रमदर्पणे for विभ्रमदर्पणम्।

1054　आकर्ण्य दुर्विषहमप्यरिविप्रकार-
　　मित्थं नयान्तरितनामभयोपगूढाः ।
हस्ताभिघातकृतरन्ध्रपथैः पृथिव्या
　　जिह्मीथ किं न सहसा तलमप्रविष्टाः ॥४२॥

1055　रूढा चिरं भुवनकाननचक्रवल-
　　मूले विपाण्डुरयशःस्तवकोज्ज्वलश्रीः ।
कस्मात्करोति भवतामधुना न मोह-
　　मेषाततायिविषपादपकीर्तिवल्ली ॥४३॥

1056　दैत्यप्रतापतपनातप एष ताप-
　　मभ्युद्धृतामरवधूवदनेन्दुकान्तिः ।
कस्मान्न वः प्रकुरुते विनिकोचितेन्दु-
　　रश्मिच्छटा-धवल-कीर्तिकुमुद्वतीकः ॥४४॥

1057　मन्दीकरोति भवतामसुरप्रताप-
　　वह्निः क्षणाद्भुवनमन्दिरकोटरस्थाम् ।
कीर्तिं निरर्गलतरेण विषोष्मणाशु
　　दीपप्रभामिव भुजङ्गमदृष्टिपातः ॥४५॥

1058　सङ्कल्प एष रणदुर्ललितः क्षणेन
　　वाचात्र कालमुसलस्य विपूरितो नः ।
मन्दाकिनीं प्रथितपुण्यगुणां विहाय
　　रत्नाकरं क इह पूरयितुं क्षमोऽन्यः ॥४६॥

1059　संपश्यतोऽन्तरमिहासुमतां विसारि-
　　मत्त्वं वलादधिकमित्यपि मे वितर्कः ।
सिंहो निपातयति चण्डचपेटयैव
　　पृष्ठेन तद्वहति कुञ्जरमष्टपादः ॥४७॥

1060 [1]गम्भीरगर्जितरवश्रवणोत्थभीति-
नश्यत्कुरङ्गककुलस्य करालमूर्तेः ।
लाभोऽस्ति कः कठिनकुञ्जरचक्रवाल-
कुम्भस्थली-विदलनादपरो मृगारेः ॥४८॥

1061 शब्दान्तराणि खलु सन्ति पृथग्विधानि
यैर्व्याप्तमेव जगदव्यतिकीर्णरूपैः ।
दानाम्बु शोषयति यः करिणां श्रुतोऽपि
कोऽप्यन्य एव हरिणाधिपतेः स नादः ॥४९॥

1062 हेलाविनिर्जितरिपुस्फुटशौर्यलक्ष्मी-
लीलानिकेतविकटोन्नतचन्द्रशालाम् ।
विस्तारिणीं सुभटवंशहिमाद्रिगङ्गां
कीर्तिं न यान्ति रणवर्त्मनि तीर्थकाकाः ॥५०॥

1063 अप्राप्तहारिपरिणामगुणा कदाचि-
दाजन्मनोऽपि विरसा मम सा दशाभूत् ।
किं नीरसा जलपृषज्जलधेरुपैति
मुक्ताफलत्वमिह शुक्तिपुटान्तरेषु ॥५१॥

1064 संग्रामलाभरभसेन भटैः सलील-
मास्फालिताश्च जयकुञ्जरकुम्भभागाः ।
नाकौकसां विगलिताश्च विपक्षचक्र-
सीमन्तनीस्तनतटास्पदतारहाराः ॥५२॥

1065 निस्त्रिंशघातदलितद्विपकुम्भपीठ-
निर्मुक्त-मौ[2]क्तिककणप्रकरावकीर्णे ।
सङ्ग्रामवासभवनेऽभिमता जिगीषो-
स्तीक्ष्णैः शिलीमुखनखैर्वशमेति लक्ष्मीः ॥५३॥

---

१. C गम्भीरगर्वित for गंभीरगर्जित ।
२. C मौक्तिकपण for मौक्तिककण ।

1066　प्रत्यग्ररत्नकिरणच्छुरणाभिराम-
　　मम्भोदनीलमभितोऽधिवसत्यभीक्ष्णम् ।
वक्षः स्थलं मधुरिपोरिव तीक्ष्णवर्त्म-
　　पट्टं परिप्लवतया रहितादृता श्रीः ॥५४॥

1067　संवादिनी नियतमस्य मुरारिदेह-
　　च्छायेति चञ्चलतया रहितात्र लक्ष्मीः ।
शङ्के शरद्गगननीलरुचौ कृपाण-
　　पट्टेऽनुरक्तहृदयारचयत्प्रतिष्ठाम् ॥५५॥

1068　उत्सृज्य षट्चरणचारणचक्रवाल-
　　गीतस्तुतां नवकुशेशयकोशशय्याम् ।
वीरानुरागरभसेन वसत्यभीक्ष्णं
　　शङ्के सलीलमसिपत्त्रवनेऽपि लक्ष्मीः ॥५६॥

1069　दोर्दण्डनिर्जितरिपोर्जगति प्रसङ्ग-
　　लभ्येषु नास्ति विभवेषु कदाचिदास्था ।
तेजस्विनः करजजर्जरितेभकुम्भ-
　　कूटस्य मौक्तिकगणेषु हरेरिवार्याः ॥५७॥

1070　व्याघातावप्लुतमहो विधुरं बतैत-
　　दस्थानसंभ्रमतिरस्कृतधैर्यबन्धाः ।
यूयं यदेवमधुना भुजशालिनाऽपि
　　ग्रासीकृता विषमनीतिपिशाचिकाभिः ॥५८॥

1071　उत्तिष्ठतासुरपतेः शरकाण्डपाण्डु-
　　च्छायानि सम्प्रति यशांसि हतस्य संख्ये ।
धौताञ्जनाम्रसलिलप्लुततत्पुरंध्रि-
　　गण्डस्थलानि च मलीमसतां व्रजन्तु ॥५९॥

1072　दैत्याधिराज-[1]मकराकरलोडनाय
　　संरम्भिणो मयि जयामृतलाभहेतोः ।
आरोपयन्तु विबुधा भरमीश ! ताव-
　　दद्यैव मन्दरमिवातनुकूर्मपृष्ठे ॥६०॥

1073　श्लाघ्यः स एव कलशो भुवनेषु यस्मा-
　　दुत्थाय वन्द्यमहिमा सुरकार्यहेतोः ।
अम्भोधिमेकचुलकेन विवर्तमान-
　　वैकुण्ठकूर्मशफरेण पपावगस्त्यः ॥६१॥

1074　हेतोः कुतोऽप्यसदृशादुदिता गरीयः
　　कार्यं निसर्गगुरवः स्फुटमारभन्ते ।
उत्थाय किं न कलशादपि सिन्धुनाथ-
　　मुद्वीचिमालमपिबत् भगवानगस्त्यः ॥६२॥

1075　क्ष्मामण्डलं सकलमेव सरत्नराशि-
　　विस्तारिनेमिवलयं रणबद्धकक्ष्यः ।
चक्रीकरोति सुभटः श्रवणान्तकृष्ट-
　　मौर्वीलतेन धनुषा सममेव नूनम् ॥६३॥

1076　बद्धास्पदा दितिजनायकचक्रवाल-
　　पङ्कोदरे बहुगुणोद्ध्रियतामिदानीम् ।
नाकश्रियः परिभवातनुवह्निदाह-
　　शान्तीच्छया धवलकीर्तिमृणालवल्ली ॥६४॥

1077　संहारसिन्धुमिव काञ्चनशैलकूट-
　　भागे स्फुरत्तरणिदीधितिदुर्निरीक्षाम् ।
[2]अद्यैव दानवकुलप्रलयाय ताव-
　　दारोपयामि धनुषि द्रुतमत्र मौर्वीम् ॥६५॥

---

१. C मकरालय for मकराकर ।　　२. C अस्यैव for अद्यैव ।

1078　विश्लिष्यदाकुलनिरर्गलगण्डशैल-
चक्राभिघात-विधुरीकृत-तिग्मभासः ।
कोदण्डदण्डघटितान् पृथुचारुकीर्ति-
रायोधनार्थमवनेर्विविनज्मि शैलान् ॥६६॥

1079　बाणासनाग्रविकटाटनिगाढबन्ध-
संभावितार्तिरिव संयुगमूर्ध्नि मौर्वी ।
आस्फालिता नदतु मे वडवानलस्य
हेतिच्छटोदधितरङ्गहतेव तारम् ॥६७॥

1080　कोदण्डकोटिमधिरोपयति स्म बाहु-
शाली समीकभुवि यां ननु सैव मौर्वी ।
लक्ष्मीसमागमनकीर्तिविनिर्गमैक-
विस्पष्टपद्धतिविलासममुष्य धत्ते ॥६८॥

1081　क्रेङ्कारमेव धनुषः श्रवणान्तकृष्ट-
मौर्वीप्रगाढपरिमण्डलितस्य संख्ये ।
ओङ्कारमक्षतमवैमि विपक्षपक्ष-
लक्ष्मीसलीलदृढकर्षणमूलमन्त्रम् ॥६९॥

1082　एकां गमागमनपद्धतिमेव मौर्वीं
कीर्तिश्रियौ भटजनस्य हि धावमाने ।
नूनं परस्परकठोरकुचाभिघात-
विच्छिन्नहारधवलामखिलां विधत्तः ॥७०॥

1083　उद्दामदर्पनिकषप्रतिपक्षसंप-
दुत्सादनेन कृतविग्रहवल्गुशोभाः ।
स्नाताश्च कीर्तिसलिलैः सुरभीभवन्ति
नूनं यशःपरिमलेन पराक्रमाढ्याः ॥७१॥

1084　चेतोहरेण हरकण्ठरुचा प्रकाम-
　　पुण्यात्मकत्वमनिशं दधता गरीयः ।
आत्मानमाशु सुभटः समरे पुनाति
　　निस्त्रिंशपुष्करजलेन कृताभिषेकः ॥७२॥

1085　निष्कण्टकी भवतु संप्रति नाथ ! विश्व-
　　मेतत्प्रसीद वृषकेतन ! देह्यनुज्ञाम् ।
ग्रासीकरोतु वलनाकुलितः कृपाण-
　　सिंहीसुतोऽहितयशः शशिमण्डलं वः ॥७३॥

1086　भस्मावदातरुचयो विनिपत्य दिक्षु-
　　घोरान्धकारकलुषां प्रमथाधिनाथाः ।
भिन्दन्तु दानवचमूमधुनाट्टहास-
　　च्छेदा इव प्रलयकालनिशां स्मरारेः ॥७४॥

1087　सङ्ग्रामभूमिरधुना भुवनाधिनाथ !
　　वृन्दावनस्थितिरिवास्तु सुरासुराणाम् ।
विस्पष्टपीतवसनादरतातिगाढ-
　　रक्ताङ्गनोचितशिवाभिमतव्रजश्रीः ॥७५॥

1088　कङ्कालसङ्कुलमशङ्कितकाककङ्क-
　　सङ्केतधाम रणवर्त्म शशाङ्कमौले[1] ।
टाङ्कारिकार्मुकविटङ्कपटङ्कमस्तु
　　टङ्काङ्कसङ्कटविशङ्कटकङ्कटं वः ॥७६॥

1089　निस्त्रिंशलूनविकटास्थिकठोरकण्ठ-
　　पीठापविद्धशिरसं युधि दैत्यनाथम् ।
अभ्रङ्कषाग्रशिखरस्खलितार्कबिम्ब-
　　मस्तावनींध्रमिव पश्यतु जीवलोकः[2] ॥७७॥

---

१. A, B शशाङ्कमौलः ।　　२. B राजलोकः ।

1090　कार्या वितर्कघटना न कदाचिदूर्ध्व-
　　मायोधनावतरणे बत को विचारः ।
आनन्दशून्यममरारिकुलं सुरेश !
　　कुर्वे स्मितानुगमवन्ध्यमयं समाधिः ॥७८॥

1091　किं चिन्त्यतेऽन्यदपि दुर्बललोकचित्त-
　　[1]मेषोऽञ्जलिर्मधुरमङ्गलगीतिगर्भम् ।
भास्वत्करालकरवालविलूनपीन-
　　पीलून्नतश्रवणमण्डलतालवृन्तम् ॥७९॥

1092　आनन्दनिर्भरनभश्चरचक्रमुक्त-
　　पुष्पोपकारनिपतन्मधुपावलीकम् ।
[2]सेनाविमर्ददलितावनिधूलिधूप-
　　धूमच्छटाशबलिताखिलदिग्विभागम् ॥८०॥

1093　प्रेङ्खद्गदादलितकुञ्जरकर्णशङ्ख-
　　धूलिच्छटापटलवर्णककर्दमाङ्कम् ।
अभ्यापतत् सुभटमन्मथकृष्यमाण-
　　कोदण्डनिर्गतशराशनिलुप्तधैर्यम् ॥८१॥

1094　सङ्ग्रामवासगृहमुच्छ्रितदन्तिदन्त-
　　पर्यङ्कमुत्पुलकमण्डलगण्डभित्तिः ।
आलिङ्गितातिरभसेन जयश्रियोऽय-
　　मद्यैव तावदधितिष्ठतु राजलोकः ॥८२॥　　कलापकम्[3]

---

१. B मेषो जगन्मधुर ।
२. A, C सेनाविमर्द ।
३. A चक्कलकम् ।

1095 अथावस्कन्दलीलाचलितबलपरिस्यन्दखर्वीकृतोर्वी-
संरम्भोत्तम्भनास्थोन्नमितभरनमत्कंधरासंधिरास्ताम् ।
शेषोऽपि स्फारफुल्लत्स्फुटपृथुलफणाफूत्कृताग्निस्फुलिङ्ग-
स्फूर्जत्सन्दोहसन्देहितविकटशिखामण्डलीरत्नषण्डः ॥८३॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये चण्डेश्वरदण्डोपन्यासो नाम त्रयोदशः सर्गः ।

---

## चतुर्दशः सर्गः

1096 इत्थमुक्तवति तत्र भारती-
मुन्मिषत् स्मितकपोलमण्डलः ।
वक्तुमारभत संसदि क्रमात्-
पुष्पहास इति नीतिनिष्ठुरम्[1] ॥१॥

1097 शक्तिमस्खलितसारसौष्ठवां
क्ष्माधरोद्दलनदुर्धरां दधत् ।
स्वामितामपि गतो गरीयसी-
[2]मन्धकारितनयो न योऽभवत् ॥२॥

1098 दुर्धरप्रसरतामुपेयिवा-
[3]नप्रथिष्ठ भुवनान्तरेषु यः ।
और्ववह्निरिव हेतिमण्डली-
सन्ततक्षपितवाहिनीपतिः ॥३॥

1099 यस्य [4]दुर्गतविपक्षसुन्दरी-
मण्डलेन विभराम्बभूविरे[5] ।
रोदनारुणितलोचनोत्पल-
च्छायकुङ्कुमविलेपनाः स्तनाः ॥४॥

1100 भास्वतोऽप्यविहितां करस्थितिं
दिङ्मुखेष्वधिकमाशु कुर्वतः ।
यस्य मण्डलमलङ्घ्यमुच्चकै-
राहवीयमगमन्न विप्लवम् ॥५॥

---

१. A, C निष्ठुर वचः । २. A, B, C अन्तकारितनयो ।
३. B पप्रथे footnotes) । ४. A विपक्षकामिनी ।
५. A विभराम्बुभूविरे ।

1101 नाप भूतिमलनात्कदर्थनां
तापयोगमगमन्न च क्वचित् ।
[1]यः सुवृत्तविमलस्थितिर्दधौ[2]
रत्नदर्पण इवाधिकां श्रियम् ॥६॥

1102 यस्य चारुगुणमौक्तिकोत्कर-
भ्राजितेन्दुकरपाण्डुरच्छविः ।
हारयष्टिरिव [3]कीर्तिरुच्चकै-
र्मण्डनत्वमगमत्परं दिशाम् ॥७॥

1103 यस्य च प्रसृतया[4] निरर्गलं
कैटभद्विष इवोन्नतिश्रितः ।
विष्टपत्रयमलङ्घ्यताञ्जसा
दूरमस्खलितया यशःश्रिया ॥८॥

1104 चन्द्रदीधिति-विपाण्डुना यशः-
पुष्पसंभूति-भरेण भूरिणा[5] ।
लङ्घिता भुवनकाननोदरे
यस्य नेमुरखिला हरिल्लताः ॥९॥

1105 स्थेयसीं भुवनमन्दिरस्य दि-
ग्भित्तिभागरचिताश्रितस्थितिः।
[6]चारुटङ्कघटना बभौतरां
यस्य कीर्तिमणिशालभञ्जिका ॥१०॥

---

१. A, C या for यः । २. A स्थितिर्मधो ।
३. A कीर्तिमुच्चकैः । ४. B जंघयो च (footnotes) ।
५. भूयसा for भूरिणा ।
६. B शशिपाण्डुरैकतां for शशिपाण्डुरेकताम् ।

1106 तस्य तत्र वदतो वचस्तदा
निर्गता दशनरश्मिमण्डली ।
जाह्नवीव शशिपाण्डुरेकतां[1]
प्राप शम्भुगलकान्तिसिन्धुना ॥११॥ दशभिः कुलकम्

1107 क्रुद्धकालमुसलादिकीर्तितं
संप्रहारनयगोचरं वचः ।
ऊर्जितं च मधुरं च शुश्रुवा-
न्वक्तुमभ्यधिकमुत्सहेत कः ?॥१२॥

1108 कोविदार-चित-शोभ उच्चकै-
रत्र सन्निहितनीलकन्धरे ।
[2]द्रोणकाक इव निष्ठुरं सदः[3]
कानने किमपि रौम्यलज्जितः[4] ॥१३॥

1109 शुश्रुवानपि गणाधिपोदितं
वाक्यमेतदहमक्षमं[5] ब्रुवे ।
श्रोत्ररन्ध्रगतकेकिकूजितः
किं विरौति परुषं न मौकुलिः[6] ॥१४॥

1110 तत्तथापि जडतानुरोधतः
शत्रुतोऽथ युधि बिभ्यता मया ।
नीतिवर्त्मरभसादुतोदितं
श्रोतुमर्हथ मलीमसं वचः ॥१५॥

---

१. B दारुटङ्कघटना for चारुटङ्कखटना । २. B वृद्धवायसः (footnotes) ।
३. A, C सदा । ४. C रौमि लज्जितः for रौम्यलज्जितः ।
५. B, C मक्षमो ब्रुवे । ६. B काकुः (footnotes) ।

1111 न क्रुधोऽवसर एव साम्प्रतं
[1]गाढमान्ध्यमतमो नृणामसौ ।
दृश्यतां गणपतेऽन्यया दृशा
कार्यमेतदतिसङ्कटे स्थितम् ॥१६॥

1112 तीक्ष्णतामविहतां दधानया
भेदपाटवजुषा युधि द्विषाम् ।
साधयन्त्यमलया धियोन्नताः
कृत्यपक्षमथवासिधारया ॥१७॥

1113 यस्य नाम्नि सहसाभ्युदीरिते
सम्भ्रमज्वरपरिग्रहाकुलाः ।
बिभ्रति स्म [2]विरसत्वमाननैः
शोषितौष्ठपुटतालवः सुराः ॥१८॥

1114 सप्रतापमतितीव्रतान्वितं
छाययैव सुरराजमण्डलम् ।
यश्चकार परिहीनमोजसा
भानुबिम्बमिव सिंहिकासुतः ॥१९॥

1115 [3]प्राप्तमन्धमवमृद्य तापितं
यः करस्थितिमुपागतं क्रमात् ।
आत्मदर्शमिव विद्विषां व्यधा-
न्मण्डलं मुखविलोकनक्षमम् ॥२०॥

---

१. B गाढमन्ध्यतमस् for गाढमान्ध्यमतमो ।
C गाढमन्धतमसं for ,, ।
२. B, C विधुरत्वमाननैः for विरसत्वमाननैः ।
३. B, C प्राप्तमर्दमवमृद्य for प्राप्तमन्धमवमृद्य ।

1116　　संयुगेषु शशिशुभ्रमुच्चकैः
　　　　　साधुशब्दमुखरीकृताम्बरम्[1] ।
　　　　यश्च शङ्खमिव कैटभं[2] द्विष-
　　　　　न्सन्दधौ करतलाश्रयं यशः ॥२१॥

1117　　तादृशेऽपि सुरवैरिणीदृशं
　　　　　स्पष्टमग्रहणमेव[3] बिभ्रताम् ।
　　　　ब्रूत किं नु भवतां विभाव्यते
　　　　　धैर्यमेतदुत जाड्यजृम्भितम् ॥२२॥　　　　पञ्चभिः कुलकम्

1118　　साध्यवस्तुषु न सामपूर्वकं
　　　　　साधनं न खलु शस्यते बुधैः ।
　　　　बिभ्रती भवति धीरकोपता-
　　　　　माननं प्रथममुन्मिषत्स्मितम् ॥२३॥

1119　　कृत्यवस्तु निपुणां प्रसाधय-
　　　　　द्विप्लवोदयदशाविनाकृतम् ।
　　　　विद्धि भेदगहनैरवस्थितं
　　　　　तच्च सङ्कलितपञ्चभक्तिकम् ॥२४॥

1120　　[4]कृत्यपक्षमखिलं विचिन्वतां
　　　　　साधनाङ्गवचनानुदाहृतेः ।
　　　　दृश्यते पुरत एव मन्त्रिणां
　　　　　वादिनामिव विपर्यये जयः ॥२५॥

---

१. A कृतास्वरम् ।　　　　२. B कैटभद्विष for कैटभं द्विष ।

३. B अवलेपं (footnotes) ।

४. A कार्यपक्षमखिलम् ।
　B, C कार्यतत्त्वमखिलम् ।

1121　मोहविप्लुतदशं प्रवर्तित-
　　स्वेदबिन्दुपुलकाङ्कुरोत्करम् ।
विद्विषां हरतु मन्त्र एष वः
　　क्ष्वेडमाप्यमिव दर्पविभ्रमम् ॥२६॥

1122　दर्शितावयवपञ्चकं क्रमा-
　　त्तत्कणव्रतविनेयविभ्रमाः ।
दुर्जयोर्जितविपक्षनिर्जये
　　वाक्यमञ्चितधियः प्रयुञ्जते ॥२७॥

1123　साधयद्भिरविरुग्णमीप्सितं
　　शास्त्रहेतुभिरिव त्रिलक्षमभिः ।
[1]जृम्भितं जगति यैरनर्गलं
　　वैरिभिः प्रतिदिशं दिवौकसाम् ॥२८॥

1124　विस्फुरन्मणिकरालमूर्धतां
　　बिभ्रतामतनुमेचकत्विषाम् ।
भोगिनामिव न दण्डघट्टना
　　नोपघातघटनाय विद्विषाम् ॥२९॥　युगलकम्

1125　आरिराधयिषुणा वृषध्वजं
　　येन तीव्रतपसि स्थितात्मना ।
अन्धकार इव शीतरोचिषा
　　धूमराशिरकृशः पुरा पपे ॥३०॥

1126　संयुगेषु हृतजीविताञ्जवा-
　　ज्जीवयन् दितिभुवोऽपि विद्यया ।
सोऽमृतप्रतिनिधित्वमीयिवां-
　　श्चिन्त्य एव भृगुनन्दनोऽपि वः ॥३१॥　युगलकम्

---

1. C जृम्भिते जगति for जृम्भितं जगति ।

1127　आयतेषु हृदयेषु शेमुषी-
　　मन्दिमानमधुनाभ्युपागता ।
　ब्रूत दीपकशिखेव किं नु वो
　　लक्ष्यते रभसधूर्णनाकुला ॥३२॥

1128　सङ्कटेष्वधिकमेव धीमतां
　　विस्फुरन्ति ननु मन्त्रशक्तयः ।
　व्याप्तवस्तु तिमिरेषु दिक्तटा-
　　नुन्मिषन्त्यहिमदीधितित्विषः ॥३३॥

1129　यूयमाहवरसे व्यवस्थिताः
　　सप्रभावमपि वीर्यमत्र वः ।
　चिन्त्यतां ननु विपाक ईदृशे
　　कृत्यवस्तुनि यतो भवेद्गुणः ॥३४॥

1130　अप्यपायफलसाधनास्पदं
　　क्ष्माभृतां चिरमनुज्झितक्रमैः ।
　मण्डलं जगदिवर्तुभिः स्फुटं
　　षड्भिरेव परिवर्त्यते गुणैः ॥३५॥

1131　चञ्चलत्वविरसाविसंवदत्-
　　स्वाशयानुगुणवृत्तितां गताः[1] ।
　मूढमार्गरभसाहृताः स्फुटं
　　न श्रियोऽपि बहु मन्वते पतीन् ॥३६॥

1132　सम्प्रति प्रगुणरूपमुच्छ्वसत्-
　　सम्प्रहाररभसो मनोरथः ।
　नीतिवर्त्म विषमीकरोति वः
　　क्षुण्णमेतदभितो महाजनैः ॥३७॥

---

१. C गुणाः for गताः ।

1133　[1]ह्लादहेतुरधिकं रणेषु वो
यद्यपि क्वचन भीमदर्शनैः ।
नोज्झिता सजलमेघमेचकैः[2]
कीर्तिचन्दनलतासिभोगिभिः ॥३८॥

1134　यद्यपीन्दुकरकोमलच्छविः
कीर्तिरप्रतिमरूपतां गता ।
कातरस्य गणनाथ ! हारिणी
नाकलोकललनेव दुर्लभा ॥३९॥

1135　मन्दमारुतसलीलघट्टना
मञ्जुलक्वणितधारतां गताः ।
संयुगार्थमिव यद्यपीह व-
श्चोदयन्ति करवालयष्टयः ॥४०॥

1136　आहतस्तनतटारिसुन्दरी-
क्रन्दितेन जयशङ्खघोषणाः ।
सम्प्रहारधरणीतलोत्थितै-
रेणुभिश्च[3] पटवासपांसवः ॥४१॥

1137　खड्गकृत्तभटकण्ठमण्डलै-
र्निर्मलाश्च मणिहारयष्टयः ।
[4]चण्डमारुतरयप्रवर्तिभि-
र्गृध्रपक्षपवनैः प्रकीर्णकाः ॥४२॥

1138　घातमूर्छितभटाननासृजा
नागवल्लिदलरागसंपदः ।
बद्धसंमदशिवोपगूहनै-
र्गाढभीरुपरिरंभविभ्रमाः ॥४३॥

---

१　A, B, C ह्लादहेतुरनिशं ।　　२. A मोघकैः ।
३. B चन्दनादिचूर्णम् (footnotes) ।　　४. C गण्डमारुतरय for चण्डमारुतरय ।

1139 शोकदीनरुदिताश्रुविन्दुभि-
हर्दिवाष्पजलशीकरोत्कराः ।
प्रेतसैनिकजनानकारवैः
सम्प्रहारजयदुन्दुभिस्वनाः ॥४४॥

1140 छायया शकुनिमण्डलोत्थिता[1]
च्छत्रधारणविडम्बनक्रमाः ।
फेरवाननगतान्त्रमण्डली-
दामभिश्च जयमङ्गलस्रजः ॥४५॥

1141 नीलनीरजदलोज्ज्वलाननै-
र्मार्गणैः स्मरविलासशेखराः ।
बाणभिन्नकरिकुम्भमण्डली-
मौक्तिकोत्करकरैः स्मितोद्गमाः ॥४६॥

1142 संयुगश्रमजलच्छटाकणै-
र्मोहना विरलवारिविन्दवः ।
हेतिभिन्न-भटदेहमण्डली-
शोणितेन हरिचन्दनद्रवाः ॥४७॥

1143 संस्थिताप्लवनवारिसंचयै[2]-
रुच्छलद्भिरभिषेकविप्रुषः ।
दुःखदैन्यपरिदेविताक्षरै-
र्मन्द्रमङ्गलमृदङ्गनिःस्वनाः ॥४८॥

1144 संप्रहारमुखदीर्घनिद्रया
प्रत्युषः [3]समयबोधविभ्रमाः ।
[4]वैरिवन्दिनिगडैः सनिःस्वनैः
सारवा निजपुरन्ध्रिनूपुराः ॥४९॥

---

१. B, C शकुनिमण्डलोत्थया for शकुनिमण्डलोत्थिता ।   २. C सवनवारिसंचयैः ।
३. A समरबोधविभ्रमाः for समयबोधविभ्रमाः ।
B सारसबोधविभ्रमाः for ,, ।
४. B वैरिबन्धनिगडैः for वैरिवन्दिनिगडैः

1145 संयुगेषु हतबन्धुसंहते-
स्ते तथापि भुजवीर्यशालिनः[१] ।
आस्थितस्य तरसा जयश्रियं
ब्रूत यद्यधिभुवो न दूषिताः ॥५०॥ त्रयोदशभिः कुलकम्

1146 आयुधानि विविधानि[२] सन्ति वः
पीवरा भटजनस्य बाहवः ।
कार्यमोहतिमिरावबोधिनी[३]
दुर्लभा तु मतिदीपिका नृणाम् ॥५१॥

1147 [४]दार्ढ्यशालिगुणनीतिशृङ्खला
बन्धसंयतपदामनर्गलम् ।
स्थेयसीं विदधतीह पण्डिताः
[५]स्त्रीनिसर्गतरलां नृपश्रियम् ॥५२॥

1148 सांख्ययोगपरिनिष्ठितात्मतां
ज्ञातसत्त्वपुरुषान्तरो दधत् ।
नूनमेति न विकारविप्लव-
क्लेशलेशघटनां विवेकभाक् ॥५३॥

1149 मुह्यते य इह कृत्यवस्तुनि
[६]ज्योतिरक्षतनयात्मकं दधत् ।
अन्धकूपकुहरे परिस्फुटं
दीप्रदीपककरः पतत्यसौ ॥५४॥

---

१. A, B, C जयशौर्यशालिनः for भुजवीर्यशालिनः ।

२. A, B, C सुलभानि for विविधानि ।

३. A, B, C तिमिरावभेदिनी for तिमिरावबोधिनी ।

४. B, C दैर्घ्यशालि for दार्ढ्यशालि ।

५. B स्त्रीस्वभावतरलां for स्त्रीनिसर्गतरलां ।

६. B, C ज्योतिरक्षनयात्मकं for ज्योतिरक्षतनयात्मकम् ।

1150 विद्विषत्यतुलितोरुविक्रमे
विक्रमेत सहसा न नीतिमान् ।
को नु संशयितपन्नगे करं
वामलूरविवरे विनिक्षिपेत् ॥५५॥

1151 [1]मन्त्रयुक्तिगहनं प्रमाणतां
सामभेदकृतसौष्ठवं[2] दधत् ।
श्रौतमागममिवातिवर्तितुं
कः क्षमेत नयशास्त्रसंग्रहम् ॥५६॥

1152 संभ्रमः प्रशममुपैतु वोऽत्र हेला-
निष्पिष्टस्फुटकटकाच्छरत्नबन्धः ।
मा स्मैतत्सुरसुरवैरिणां विरोधे
त्रैलोक्यं सकलमकाण्डभङ्गुरं भूत् ॥५७॥

1153 नन्दन्तु नन्दनवनावनिवीथिकासु
लीनालियूथशबलीकृतयूथिकासु ।
सार्धं सुरासुरगणाः कदलीदलोरू-[3]
दोःकन्दलीवलितपीवरकण्ठभागाः ॥५८॥

1154 [4]पुष्पौघवर्षममरप्रमदा मुदा च
मुञ्चन्तु शान्तसुरदैत्यविरोधहृष्टाः ।
मन्दारदामविगलन्मकरन्दबिन्दु-
संदोहदोहदनदत्समदद्विरेफाः[5] ॥५९॥

---

१. A, B, C यन्त्रयुक्तिगहनं for मन्त्रयुक्तिगहनं । २. A सौष्ठवां ।

३. A, C कवलोरुथ ।

४. A कु पुष्पप्रवर्षं for पुष्पौघवर्षं ।
C सत्पुष्पवर्षं for पुष्पौघवर्षं ।

५. B समदालिवृन्दाः for समदद्विरेफाः ।

1155 [1]उडुपथमण्डलं भवतु मा शुचिरवनिपत-
द्दिनकरखण्डचण्डचडुलीनिबिडतरतडित्[2] ।
दिशि दिशि मा क्षुभन्जलधयः[3] पिशुनितसमराः
[4]प्रस्तरविकीर्णरत्नपटलीशबलतटभुवः ॥६८॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवे राजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
महाकाव्ये पुष्पहासनयोपन्यासो नाम चतुर्दशः सर्गः ।

---

१. C उडुपतिमण्डलं for उडुपथमण्डलं । २. D चडुलीनिबिडिततडित् ।

३. C जलरथा for जलधयः ।

४. A, B, C प्रसरधिकीर्णं for प्रस्तरविकीर्णं ।

## पञ्चदशः सर्गः

1156 इति संहृतसंयुगाभियोगे
सदसि व्योम्नि पयोमुचीव तस्मिन् ।
अभिगर्जति साधुवादकेका-
कलकोलाहलनीलकण्ठचक्रे ॥१॥

1157 चलिते समरोत्सवाप्तिकाल-
प्रमदोत्फुल्लविलोचनारविन्दम् ।
प्रलयानलधामदुर्निरीक्ष्य-
त्विषि सम्भावितपौरुषं भटौघे ॥२॥

1158 कथमेतदिति व्युपायचिन्ता
भरयोगाञ्चितमूर्ध्नि शून्यदृष्टौ ।
स्थितवत्यपरत्र नीतिगर्भे
स्फुटनिम्नोन्नतपृष्ठभुग्नवक्षः ॥३॥

1159 मुकुलीकृतदृष्टि फुल्लगण्डं
परिवाह्याशु शिरो मुखं दधाने ।
जडमैडविडेऽरिमण्डलश्री-
क्षयकण्डूभरडिम्बडम्बरस्थे[1] ॥४॥

1160 परदेशमुपेत्य यस्य भीत्या-
नवमञ्जीरकमण्डलीसनाथम् ।
चरणाम्बुरुहं विपक्षलोकः
स्मरति स्म व्यसनातुरः पुरन्ध्र्याः ॥५॥

---

१. B बाहुयुद्धप्रपञ्चस्थे ।

1161 गमनादिव [1]मन्थरत्वमुच्चैः
परिपाण्डुत्वमिवाच्छगण्डभागात् ।
कृशता भृशमाददे च मध्या-
दिव यस्यारिनितम्बिनीवपुर्भिः ॥६॥

1162 परिवृत्ति-परीत-हारिवर्ण-
स्वरमभ्युज्झित[2]साधयोगमुच्चैः ।
रिपुचक्रमनूष्मतां दधानं
सपदि प्राकृतमेव यस्य जज्ञे ॥७॥

1163 युधि येन विवल्गता सलीलं
करिकुम्भा गलदच्छमौक्तिकौघाः ।
करवालसहायबाहुना स्त्री-
स्तनभारैः सह चक्रिरे रिपूणाम् ॥८॥

1164 स्फुटपक्षपरिग्रहेण शश्व-
द्दधताप्याहवमूर्ध्न्यपक्षतित्वम् ।
क्षयकालनभस्वतेव शैला-
स्तरसापिक्षत येन[3] विद्विषन्तः ॥९॥

1165 युधि वल्गति यत्र तिग्मतेजः
प्रतिपक्षास्तमयप्रदोषखड्गे ।
दितिजा भुजवीर्यसम्पदोच्चै-
रदरिद्रासिषुरद्रिसारदेहाः ॥१०॥

1166 श्रियमेति च यस्य खड्गयष्टि-
[4]र्विपुला पाण्डुरदन्तमण्डलाङ्का ।
उडुपाण्डुनिजाण्डपिण्डनिर्य-
त्तिमिरव्रातविधूसरोरगश्रीः ॥११॥

---

१. B आलस्यं (footnotes) । २. B संधियोगमुच्चैः for साधयोगमुच्चैः ।
३. A, B, C येव । ४. B, C विकटा for विपुला ।

1167　प्रथयन् भुजपादपालितस्य[1]
　　स्फुटकेयूरमदार[2]रश्मिभङ्ग्या ।
　कदलीदलसन्निवेशमुच्चै-
　　रिव दुर्वारपराक्रमद्विपस्य ॥१२॥

1168　भुवनप्रलयानलस्त्रिलोकी-
　　[3]दहनायेव शिखावलीर्विकीर्णाः ।
　स दधत्परिपिङ्गला जटाली-
　　र्गुरुसंरम्भविधूनितोत्तमाङ्गः ॥१३॥

1169　गुरुकार्यविचारणावितर्क-
　　स्फुरदुद्वृत्तपुटां दृशं दधानः ।
　प्रमथाधिपतेर्निराकरिष्यन्
　　गिरमौर्जित्यवतीं विवृत्य[4] किञ्चित् ॥१४॥

1170　दशनांशुमिषेण नन्दिषेणः
　　शुचिना दर्शिततारकाशशोभाम् ।
　अपमृष्टकलङ्कदोषरम्याम्
　　इति निश्चित्य सरस्वतीं ससर्ज ॥१५॥　पञ्चदशभिः कुलकम्

1171　स्फुरिताधर-धातुराग-धूलि-
　　[5]च्छुरिता दन्तमरीचयोऽस्य शुभ्राः ।
　शुचिमानसनिर्झराभिरामां
　　श्रियमासेदुरथो विनिष्पतन्त्यः ॥१६॥

---

१. B बद्धस्य (footnotes) ।　२. B मरकत (footnotes) ।
३. B दहता येन for दहनायेव ।　४. A, B, C विसृज्य for विवृत्य ।
५. C, B स्फुरिता for छुरिता ।

1172 हरसंसदि तस्य चाभिधित्सो-
गिरमुच्चैरनभिप्लुतार्थगुर्वीम् ।
ककुभः [1]समवस्त्रयन्निवैता
दशनांशूत्करमिन्दुरश्मिगौरम् ॥१७॥

1173 अनपेक्ष्य भवादृशां पुरो य-
ल्लघुवाग्मित्वमभिव्यनक्ति मादृक् ।
अपराध्यति तत्र नूनमेषा
तदनार्या खलु कायनिम्नतैव[2] ॥१८॥

1174 प्रतिपादयितुं यदन्यथार्थान्
कुशलत्वेन जनो व्यवस्यतीमान् ।
सकलः स गुणोऽस्य वाग्मितायाः
सततं ते पुनरात्मरूपनिष्ठाः ॥१९॥

1175 निजशक्तिपरिक्षयेण लोको
भयमेव व्यवलम्बतां नयाख्यम् ।
पृथगेव पराक्रमस्तु सिद्ध्यै
घटते दोर्द्रुमदर्पदर्पणो वः ॥२०॥

1176 रिपुणा व्यवरोपितेषु धाम्नः
परिमृष्टावयवार्थसंज्ञकेषु ।
सकलेषु कृतेषु नाकसत्सु
प्रसभं ह्रीपदवृत्तिजीवितेषु[3] ॥२१॥

---

१. B परिदधुः (footnotes) ।

२. B, C कार्यनिम्नतैव for कायनिम्नतैव ।
B गाम्भीर्यं (footnotes) ।

३. A, B, C जीवितेषु ।

1177 [1]असुरीजनकर्णपूरलीला-
व्यवलुप्तामलरत्नपल्लवेषु ।
सुरशाखिकदम्बकेषु दूरं
दधतापास्पदतामुपागतेषु ॥२२॥

1178 दितिजापहृतामरेन्द्रबन्दी-
रतसाक्षित्वमुपेयिवद्‌ध्वत्सु ।
विकसन्मणिपुष्पनेत्रचक्रं
त्रिदशाक्रीडलतागृहान्तरेषु ॥२३॥

1179 स्फुटलक्ष्म-गवाक्षमार्गनिर्य-
न्नवकालागुरु-धूमसारमध्यम् ।
विदधत्स्विव मण्डलं हिमांशो-
रपनीतेषु विमानमण्डलेषु ॥२४॥

1180 [2]विनिमग्नसुरारिचक्रकान्ता-
कुचकाश्मीरकपिञ्जरीकृतासु ।
व्यवरोपित-रत्नपङ्कजासु
त्रिदशोद्यानलतारविन्दिनीषु ॥२५॥

1181 करलाङ्गलनिर्दयावकृष्ट-
प्रकटाराव-विपक्षवाहिनीके ।
हलिनीव हृते हिमांशुशुभ्र-
त्विषि दुग्धोदधिजन्मनि द्विपेन्द्रे ॥२६॥

1182 गुरुदुःखभरानुबन्धकाष्ठा-
रुदितोच्छूनविपाटलेक्षणासु[3] ।
सकलामरराजवृन्दवन्दी-
जनतासु व्यसनौघविप्लुतासु ॥२७॥

---

१. A, B, D अमरीजनकर्णपूर for असुरीजनकर्णपूर ।
२. A, B, C विनिमानसुरारि for विनिमग्नसुरारि ।
३. A, C रभसंभिन्नभुजे ।
B भरसंभिन्न भुजे ।

1183 जगदप्रतिमल्लदर्पकण्डू-
[२]भुजसंभिन्नभुजे भुजिष्यभावम् ।
नयति प्रसभं प्रसारितेजः-
प्रसरे संप्रति देवराजशत्रौ ॥२८॥

1184 प्रतिवद्धजयाश इन्दुमौलौ
सुरलोके सममेव लोकपालैः ।
गमयत्यपि वासरान् कथञ्चि-
द्दयितालिङ्गनमङ्गलाभिलाषात् ॥२९॥

1185 अमुनापि किमास्यते जयश्री-
रभसाकर्षणवद्धनिश्चयानाम् ।
ननु ताम्यति मानसं भटानां
किमुपायान्तरचिन्तनान्तरायैः ॥३०॥ दशभिः कुलकम्

1186 अनपेक्षितकालयापनानां
भुजदण्डेऽद्रिशिलाविशङ्कटांसे ।
युगपन्निवसन्ति सत्वभाजा-
मसिसङ्ग्रामजयश्रियो भटानाम् ॥३१॥

1187 कृतमेव हि मन्त्रचिन्तया वः
समरस्योन्मिषत[१]ः [२]शिताश्रिपाणेः ।
कवलीकुरुते यदस्तभीति-
र्ग्रहकल्लोल[३] उपेत्य चन्द्रसूर्यौ ॥३२॥

1188 युधि दैत्यपतौ विजृम्भमाणे
वयमासिष्महि [४]यन्निरस्तयत्नाः ।
प्रभुशासनलाभशून्यतायाः
परिणामः कटुकः सुदारुणोऽयम् ॥३३॥

---

१. B पश्यतः (footnotes) । २. B चन्द्रस्य (footnotes) ।
३. B राहुः (footnotes) । ४. B स्थिताः (footnotes) ।

1189　पिनषाम किमाशु चूर्णपेषं
　　विनिमेषान्तरतः सुराहितानाम् ।
इति चन्द्रकिरीट ! देह्यनुज्ञां
　　त्वदनुद्योगहता हि नो जयश्रीः ॥३४॥

1190　द्रुतमित्थमतर्किते गतेऽपि
　　द्विविधं कालमवेत[1] शौर्यशौण्डाः[2] ।
समयाख्यमुपस्थितं रणे नः
　　सुरशत्रोः समवर्तिसंज्ञमन्यत्[3] ॥३५॥

1191　रणमूर्धनि दैत्यराजलक्ष्म्या
　　दिदरिद्रासति नूनमन्धकोऽसौ ।
यदनेन कृताः प्रकुप्यतां वो
　　भ्रुकुटीभङ्गतरङ्गिता ललाटाः ॥३६॥

1192　अपजह्नुविरे यथाशु जह्नो-
　　स्तनयायाः पतिता दिवो जलौघाः ।
सकलासुरवंशनाशहेतु-[4]
　　स्तव सैकैव[5] जटास्तु नाथ ! मुक्ता[6] ॥३७॥

1193　रणमूर्ध्नि जयश्रियं भटौघे
　　दृढमाश्लिष्टवति द्युलोकनार्यः ।
सुरनाथ ! भवन्तु दूरचिन्ता-
　　मदनाकूतविघातबद्धमूर्च्छाः ॥३८॥

---

१. B जानीत (footnotes) ।　　२. B हे शोण्डाः ।

३. B, C संज्ञमन्यम् for संज्ञमन्यत् ।

४. A, B वंशनाशहेतोः ।　　५. B सैवैक for सैकैव ।

६. B शत्रुक्षयोद्यता हि शूरा युधि जटामोक्षं वितन्वन्ति ।

1194 कवचानि पिनेह्हिवांस एते
समराय प्रमथाः सघोरगर्जाः[1] ।
क्षयकाल-[2]घनाघनौघ-[3]घार्टिं
दधतु व्योम जवाद्विलङ्घयन्तः ॥३९॥

1195 गणनाथ ! भवन्तमुत्सुकत्वा-
[4]त्परिषिष्वङ्क्षुरविश्लथं जयश्रीः ।
पुलकोद्गमकर्कशां बिभर्ति
ध्रुवमायोधनमूर्ध्नि देहयष्टिम् ॥४०॥

1196 स्थिरनिश्चितवैरमानसेन
प्रभुतामप्यधिजग्मुषा त्रिलोक्याम् ।
द्विषता मलिनात्मकेन शंभो-
स्तिमिरेणेव न भास्वतोऽस्ति संधिः ॥४१॥

1197 भजते हि न साध्यतां स साम्ना
सकलोच्छेदितयाप्तवान् प्रभुत्वम् ।
नियतं विबुधेषु बद्धवैरा
अपि तन्मण्डलवर्तिनो न भेद्याः ॥४२॥

1198 न तदस्ति जगत्त्रयेऽपि रत्नं
न कृतं तेन यदात्मसात्किलादौ ।
भवतां[5] तदुपप्रदानसाध्यां
स्थितिमीयादिति[6] वार्तमेव[7] मन्ये ॥४३॥

---

१. A, C सघोरवर्णाः, B प्रथमा स्म गौरवर्णाः ।

२. B नवमेघ (footnotes) । ३. B साम्यं (footnotes) ।

४. आलिंगितुमिच्छुः (footnotes) ।

५. C तदुपप्रधानसाम्याम् । ६. B गच्छेत् (footnotes) ।

७. A वान्तमेव ।
B असारं (footnotes) ।

1199　इति दण्ड इहावशिष्यमाणे
　　　सकलाः सन्तु वरूथिनीचरा नः ।
　　स्फुटकुट्टनविभ्रमासयोऽमी
　　　सुरनारीजनसङ्गमेष्वरीणाम् ॥४४॥

1200　अथवा किममीभिरिन्दुमौलि-
　　　भ्रुकुटीभिन्नललाटभित्तिरास्ताम् ।
　　क्षणमेकमपि व्रजन्तु चारि-
　　　प्रमदानां स्मरणीयतां विलासाः ॥४५॥

1201　शिखितापविलीनमेरुशृङ्ग-
　　　स्रुतकार्तस्वरनिर्झरद्रवेषु ।
　　प्रविलङ्घितसीमसप्तसिन्धु-
　　　[1]प्लवमग्नावनिपीठमण्डलेषु ॥४६॥

1202　परिपुञ्जिततारकप्रसर्प-
　　　त्पवनाघूर्णितसप्तविष्टपेषु ।
　　गुरुगर्जितपूरिताखिलाशा
　　　मुखसंवर्तकमेघमण्डलेषु ॥४७॥

1203　भुवनप्रलयेषु सोमसूर्य-
　　　ज्वलनानेकमरुद्गणा विशन्तः ।
　　पृथुवक्त्रगभीरतालुमूलं
　　　बहुधा विश्वसृजो मयास्य दृष्टाः ॥४८॥　　　तिलकम्

---

१. A, B, C प्लवमानावनिपीठः ।

1204 [1]अविपन्नविभावसूचितत्वं
[2]दधदुद्दीपितमीनकेतु चक्षुः ।
श्रियमापदमुष्य चित्रभेद-
[3]स्फुटशृङ्गाररसप्रभेदकल्पम् ॥४९॥

1205 द्विषतामयतिष्यतायमेको
भुवनोपप्लवदायिनां वधे चेत्[4] ।
समपत्स्यत नेदृशो निकार-
स्तदयं नाकसदां सदैव तेभ्यः ॥५०॥

1206 [5]बहुना किमुदीरितेन नाथ !
त्वदुपेक्षावसरेण दैत्यलोकः ।
सकलानपुनःप्ररोहहेतोः
स्मृतिशेषानमरान्विधास्यतेऽसौ ॥५१॥

1207 उपयुक्तमृणालसूत्रगर्भ-
स्थितिरत्राहितभीतितो मरुत्वान्[6] ।
अपनिद्रयतीति पक्षपाता-
दिव यस्याम्बुजखण्डमुष्णरश्मिः ॥५२॥

1208 नमुचिप्रमदालतासु यस्य
स्मितपुष्पोद्गमशोभितां दधानाः ।
कुलिशाग्निशिखाहता इवैते
न ययुर्विभ्रमपल्लवाः प्ररोहम् ॥५३॥

---

१. A omits the first line of the 49th श्लोक ।

२. A reads the 4th line as follows ।
दधदुद्दीपितमीनकेतु चक्षुः ।

३. A, B स्फुटशृङ्गाररसप्रबन्धकल्पम् for ....रसप्रभेदकल्पम् ।

४. B वधवित् for वधे चेत् । ५. B, C बहुधा ।

६. B इन्द्रः (footnotes) ।

1209 अवधीरितघोरवज्रवह्ने-
नर्मुचेर्निष्ठुरकण्ठपीठमूलम् ।
गमितं सपदि च्छिदां मयेति
स्वरुचेतीव जहास यस्य फेनः ॥५४॥

1210 पुनरप्यरविन्दनालसूत्र-
स्थितिमासाद्य स दानवेन्द्रभीतेः ।
कृशिमातिशयेन शोकदीनः
स विकासास्पदतां पुरैति शक्रः ॥५५॥ चक्कलकम्

1211 शिखिनि प्रलयं क्रमेण नीते
द्विषतायोधनमूर्ध्नि तद्वधूनाम् ।
स भविष्यति दाहसत्क्रियायै
स्फुटमेवान्यमयो वियोगवह्निः ॥५६॥

1212 प्रधने निधनं प्रभञ्जनोऽपि
प्रसभं दानवमण्डलेन नीतः ।
सुरनाथ ! पुरावरोधनारी-
गुरुनिःश्वासमयः प्रवर्ततेऽसौ ॥५७॥

1213 दितिजास्त्रकृशानुतापशुष्कः
पुनरप्याप्स्यति नूनमात्मलाभम् ।
गुरुदुःखभरावरोधनस्त्री-
स्रवदस्रस्रुतिनिर्झरैः प्रचेताः ॥५८॥

1214 विनिहत्य यमं च दैत्ययोधाः
नरकद्वारकवाटसंपुटालीः ।
दलयन्ति पुरा परेतचक्र-
प्रसभाकर्षणहर्षबद्धहासाः ॥५९॥

1215 इति [1]डामरमस्तु मैव ताव-
त्सुरकर्णोड्डमरप्रणादचण्डम् ।
[2]रणसिन्धुतरण्डबाहुदण्डा
रिपुलक्ष्मीहरणे भटाः क्रमन्ताम्[3] ॥६०॥ पञ्चभिः कुलकम

1216 रथकुञ्जरवाजिपत्तिसैन्यं
प्रथतां दिक्षु रसातलोदरं वः ।
विदधद्धरनम्रभूमितास्य-
त्फणिफूत्कानलधूमधूम्रगर्भम् ॥६१॥

1217 संक्षिप्तमेतदिह दुर्धरधैर्यदर्पा-
दुद्वेलवारिनिधिकम्पितशैलचक्राः ।
नायान्ति यावदसुराधिपतिध्वजिन्य-
स्तावत्क्षमं [4]तदभिषेणनमिन्दुमौलेः ॥६२॥

1218 आक्रान्ति-भुग्न-भुजगेन्द्रफणाग्रपीठ-
पारिप्लवक्षितितला पृतना स्मरारेः ।
प्रस्ताप्यतां [5]रुरुधुषी दिननाथवर्त्म-
कल्पावसानजलधेरिव वीचिपङ्क्तिः ॥६३॥

1219 उद्धृत्तदानवकुलप्रलयोत्सवाय
देवो यदैव [6]चलितः पृतनासहस्रैः ।
तद्ग्रासघस्मरतया विवृतौष्ठवक्त्र-
मभ्येत्य धावति तदैव पुरोऽस्य मृत्युः ॥६४॥

---

१. B तुमुलं (footnotes) । २. A, C रणसिन्धुतरङ्ग ।
३. A उत्साहन्ताम् (footnotes) ।
४. B सेनया शत्रोर्गमनम् (footnotes) । ५. B व्याप्तवती (footnotes) ।
६. A बलितः for चलितः ।

1220 हेलानिरस्तहरिहेतिविलूनकण्ठ-
पीठः सुरारिपृतनानिकुरम्ब उच्चैः ।
प्राप्नोतु सांप्रतमविग्रहतामुपोढ-
सिंहीसुतानुकृतिरर्दितचन्द्रसूर्यः ॥६५॥

1221 क्षुन्दन्तु दन्तपरिघप्रसभाभिघात-
निर्धूतकाञ्चनपरागपिशङ्गिताङ्गाः ।
वप्राभिघातघटिताः करिणो विरुग्ण-
कल्पद्रुमौघविषमानि तटानि मेरोः ॥६६॥

1222 आवासितस्य [१]शिशिरांशुभृतोऽधिमेरु-
मन्दाकिनीह्रदजलं[२] विनिमज्जनेषु ।
कुर्वन्तु सैनिकवधूजनता मुखेन्दु-
लावण्यकान्तिजितकाञ्चनपद्मशोभाम् ॥६७॥

1223 उत्पाता एव नूनं सकलदितिसुतग्राससंरम्भधाव-
न्मृत्युव्याधूतकल्पानलकपिल[३]शिखाविभ्रमोल्काकलापाः ।
शंसन्त्युद्वेल्लरत्नाकरसलिलरयाध्मात[४]तीराद्रिरन्ध्र-
ध्वानैः संग्रामगोष्ठीमुदित[५]सुरवधूचक्रसंचारिकां वः ॥६८॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो महाकवे राजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये नन्दिषेणनयाभिषेणनवर्णनो नाम पञ्चदशः सर्गः ।

---

१. B शम्भोः (footnotes) ।    २. B प्रवाह (footnotes) ।
३. B कपिश for कपिल ।    ४. C ध्मातभीराद्र for ध्माततीराद्रि ।
५. A मुदितसुतवधू ।

1224 तस्मिन्नुदीर्य वचनं जितमेघगर्ज-
मावर्जितोर्जितभटं विरते शिखण्डी ।
स्फूर्जत्सभाभवनभित्तिपुटोपगूढ-
पर्जन्यधीरनिनदप्रतिनादसान्द्रम् ॥१॥

1225 [1]वैकक्ष्यकस्फुरदुदंशुविचित्ररत्न-
दामाभिरामतनुरिन्दुकरच्छटाच्छैः[2] ।
तिर्यङ्निषण्णकुलिशायुधकार्मुकाङ्क-
नीहारशैलसदृशीं श्रियमादधानः ॥२॥

1226 प्रेङ्खत्फणामणिशिखारुणितोपवीत-
सूत्राधिकारभुजगः [3]सदसीन्दुमौलेः ।
निर्धौतधातु-[4]कपिलीकृतनिर्झराद्रि-
लीलां दधद्वचनमित्थमुदाजहार ॥३॥ तिलकम्

1227 विद्याधिपो यदनघान्द्विषतो जिघांसु-
रत्यूर्जितं वचनमाह न विस्मयस्तत् ।
लोकान्दिधक्षुरखिलानयुगार्चिरर्चि-
रुग्रं यदीरयति तत्र किमद्भुतं स्यात् ॥४॥

1228 सारं तथापि गदतः सदसि ग्रहीतु-
मर्हाःस्थ यूयमधुना वचसो ममास्मात् ।
अम्भोजपक्ष्मरजसो मकरन्दबिन्दु-
माधूसरादपि किमाददते न भृङ्गाः ॥५॥

---

१. B तिर्यग्वक्षसि निक्षिप्तं वैकक्ष्यकमुदाहृतम् (footnotes) ।
२. B तनुरिन्दुकरच्छटाच्छः for तनुरिन्दुकरच्छटाच्छैः ।
३. A सपदीन्दुमौलेः । ४. A, B, C मपिशीकृत for कपिलीकृत ।

1229 गर्भीकृतत्रिभुवनोदरवर्तिविश्व-
निःसंख्यवाङ्मयकृतास्पदवर्णदेहा ।
काप्यद्भुतेयमनघा परमेश्वरस्य
शक्तिः स्थिता प्रतिमुखं भुवि मानवानाम् ॥६॥

1230 [1]यस्याः प्रसादवशतो विनिशेमुषां[2] नः
कार्यार्थतत्वमनघस्थिति शेमुषीयम् ।
वक्तुं निसर्गमलिनामपि वाचमित्थ-
मुच्चैः प्रवर्तयति संसदि चन्द्रमौलेः ॥७॥

1231 भ्राम्यन्त्यनर्गलमितस्तत एव मोह-
पङ्कप्रतानमलिना शशिमौलिना धीः ।
स्पष्टीकृते व्रजतु नीतिपथे प्रसाद-
मेषा शरत्समयबन्ध इवापगा वः ॥८॥

1232 व्यापारिता नयपथेन जगत्यभीक्ष्णं
[3]भावा व्रजन्तु मृदवोऽपि पटुक्रियत्वम्[4] ।
प्रस्तौति मन्त्रकृतसंस्कृतिरूपवेणु-
वीणारवोऽपि विषमस्य विषस्य नाशम् ॥९॥

1233 सत्कृत्य साधनविविक्त[5]नयानुसार-
निष्नायमानमनसः समयव्यपेक्षः ।
प्राज्यः समीकरभसो हृदये न मेऽस्ति
सान्द्रो रसः कथमिवाम्रशलाटुनि स्यात् ? ॥१०॥

---

१. A, B यस्यां for यस्याः । २. B निश्चितवताम् ।

३. B, C भावा भजन्ति for भावा व्रजन्तु ।

४. B कटुक्रियत्वं for पटुक्रियत्वम् ।

५. B शोभन (footnotes) ।

1234 संहारभानुरिव रत्ननिधिं प्रताप-
रिक्तीकृतामलयशःसलिलं य एकः ।
चक्रे हरिं प्रकटितातनुमीनकूर्म-
रूपं विशृङ्खलमखण्डितमण्डलाग्रः ॥११॥

1235 आकर्णताण्डवितकीर्तिलतालवाल-
कोदण्डमण्डलभुजेन नतोत्तमाङ्गाः ॥
येनोज्झिता युधि दयामृदुना विजित्य
यथार्थ्यमापुरमराः प्रथितस्य नाम्नः ॥१२॥

1236 सङ्ग्रामदुग्धजलधेः स्फुटकालकूट-
लेखायमानकरवालकरालमध्यात् ।
योऽभ्युत्थितां कुमुदगौररुचिं चकार
सत्कीर्तिचन्द्रकलिकां श्रवणावतंसम् ॥१३॥

1237 [1]यः सोदभारजलदच्छविना निशात-
पत्रेण संयुगमुखेष्वसिनापि दोष्णः ।
साहायकं विदधता स्फुटमत्रपिष्ट[2]-
पिष्टाततायिकरिकुम्भभुवोर्जितश्रीः ॥१४॥

1238 सोऽप्यन्धकः सकलदानवचक्रवाल-
भास्वत्किरीटकषणक्वणिताङ्घ्रिपीठः ।
हेलावरोपित-निरर्गलवैरिवंश-
बाहुद्रुमोऽत्र भवतामभियोज्य पक्षे ॥१५॥ पञ्चभिः कुलकम्

1239 ये दानवाधिपतयो मृदिता मृधेषु
शार्ङ्गायुधेन कथमप्यपरः स तेभ्यः ।
येनेतरः शममुपैत्यनलो जलेन
भस्मीकरोत्यखिलमेव तदौर्ववह्निः ॥१६॥

---

१. A यस्योद भार । for यः सोद भार ।
२. B ललज्जे (footnotes) ।

1240 नैकत्र शक्तिविरतिः क्वचिदस्ति सर्वे
भावाः क्रियास्वपरिनिष्ठिततारतम्याः ।
आकल्पमौर्वदहनेन निपीयमान-
मम्भोधिमेकचुलुकेन पपावगस्त्यः ॥१७॥

1241 निर्जित्य यान्विजयिनः सुरलोकपालान्-
दैत्यानसौ सकलदिक्प्रभुतामनैषीत् ।
प्रत्येकमाजिभुवि तेऽपि च दृष्टसाराः
सर्वाभिसाररभसेन सुरैरजेयाः ॥१८॥

1242 यत्राभियोगचलिते[1] दिवि देवजात-
मालोक्य सैनिकधुतावनिधूलिलेखाः ।
सस्मार लग्नशशिमौलिशिलीमुखाग्नि-
संधुक्षितत्रिपुरधूमशिखावलीनाम् ॥१९॥

1243 दध्रे रणेषु कनकाङ्गदबन्धनिर्य-
दंशुच्छटापटलविच्छुरितासियष्टिः ।
दोष्णापि यस्य भुवनक्षयदक्षशिक्ष-
शौर्यातिरेकनिकषोपलपट्टिका श्रीः ॥२०॥

1244 अभ्येत्य यत्र चरणानतिभाजि गाढ-
मानग्रहा रिपुचमूः प्रतिपत्तिमूढा ।
प्राप्ताधिकक्षतिरचेष्टत नैव किञ्चि-
दाप्लावितक्षितितलं परमस्रमौज्झीत् ॥२१॥

1245 प्रत्यग्रमौक्तिकशिलाशबलान्यवाप्य
बेलातटान्यविरलं बहुधा विभिन्ना ।
कीर्तिः शशाङ्ककलिकाधवला तरङ्ग-
लेखेव दुग्धजलधेः श्रियमाप यस्य ॥२२॥

---

१. B यत्राभियोगदलितं for यत्राभियोगचलिते ।

1246 संत्रासकम्पतरलाः कुरुते विपक्ष-
सीमन्तिनीस्मृतिगतोऽपि स कालकेतुः[1] ।
यस्याच्छमौक्तिकनिभेन वहन्ति सिन्धु
वेलावनानि फलितामिव कीर्तिवल्लीम् ॥२३॥
पञ्चभिः कुलकम्

1247 यस्य प्रयाणसमयेषु चमूविमर्द-
निर्दारितावनितलोत्थितधूलिदिग्धाः ।
श्यामीबभूवुरहितोन्नतवंशदाह-
लग्नप्रतापशिखिधूमचिता इवाशाः ॥२४॥

1248 आलग्नभग्नकरजाङ्कुरया नृसिंह-
मूर्तौ नवाभ्र इव गर्जति शार्ङ्गपाणौ ।
यस्योत्थिताभिनवरत्नशलाकयेव
लक्ष्मीरुरःस्थलविदूरभुवा विदध्रे ॥२५॥

1249 [2]सङ्ग्रामकाननतलेऽवचिकाय[3] यस्य
चारूणि कीर्तिकुसुमानि रिपुद्रुमौघात् ।
विस्पष्टहेतिपरिघट्टनतारघोष-
माणिक्यनूपुरकलक्वणिता जयश्रीः ॥२६॥

1250 यं प्रस्थितं समनुगन्तुमिवारिपक्ष-
लक्ष्मीस्वयंवरपतिं तरसा विचेलुः ।
उद्दामनागकटका धरणीभृतोऽपि
सेनावमर्दपरिकम्पितभूमिपीठाः ॥२७॥

1251 शक्यो हिरण्यकशिपोस्तनयः[4] स जेतु-
मायोधने कथमिव त्रिणतां धुनानः ।
केयूररत्नरुचिचन्दनमालिकाङ्क-
पीनोन्नताग्रजयतोरणबाहुदण्डः ॥२८॥ पञ्चभिः कुलकम्

---

१. B दैत्यविशेषः (footnotes) । २. A संग्रामकाननतलेऽत्र ।
३. B उच्चितवती (footnotes) । ४. A, B हिरण्यकशिशोः ।

1252 यस्मिन् परिस्फुरति संयुगमूर्ध्नि[1] दूर-
मैरावणस्य मदशून्यकपोललग्नाः ।
शङ्के शिलीमुखगणाः क्वणितच्छलेन
शौर्यातिरेकमतिगाढरुजो[2] निनिन्दुः ॥२९॥

1253 दिक्चक्रवालघटितास्खलितप्रताप-
तीव्रातपव्यतिकरादिव मन्दिरेषु ।
बन्दीकृतोर्जितविपक्षनितम्बिनीनां
श्यामायितं सपदि यस्य मुखेन्दुबिम्बैः ॥३०॥

1254 रोमाञ्चकण्टकितताां जडिमानुबन्ध-
मुद्वेपथुत्वमतिलोठनतामदार्ढ्यम् ।
यस्याततायिपृतना युधि नायकस्य
संदर्शनादभृत संभ्रमलोलदृष्टिः ॥३१॥

1255 येनावकीर्ण[3]-मुखराग्रशराग्निहेति-
तिग्मत्विषा विदधिरे दयितायमानाः ।
प्लुष्टारिकाननतलोत्थितसान्द्रधूम-
धम्मिल्लबन्ध[4]रचनारुचिरा इवाशाः ॥३२॥

1256 श्रौतः स मन्त्र इव कस्य न शान्तिहेतु[5]-
रायोधनेऽप्रतिरथस्तिमिरासुरः[6] स्यात् ।
शोकेन यस्य मलिनानुकरोति मन्द-
सञ्चारिणी रिपुवधूर्निजदृष्टिमेव[7] ॥३३॥ पञ्चभिः कुलकम्

---

१. A, B, C संयुगसीम्नि for संयुगमूर्ध्नि ।
२. A, B कवगाढरुजो for मतिगाढरुजो ।
३. A, C मुखराग for मुखराग्र ।
४. B पटनारुचिरा for रचनारुचिरा ।
५. C संधिहेतु or सिद्धिहेतु for शान्तिहेतु ।
६. B, C तिमिरासुतः for तिमिरासुरः ।
७. A निजदृष्टिरेव for निजदृष्टिमेव ।

1257 यस्याभिषेणनरसप्रवणस्य[1] पीन-
हस्तार्गलान्तरविनिर्गतशीकरौघैः ।
मार्जन्ति मत्त-जय-नागघटा रिपूणां
दिग्भित्तिलग्नमिव कीर्तिसुधोपलेपम् ॥३४॥

1258 सच्चक्रनन्दकतयानिशमन्वितस्य
यस्याहवेषु [2]जुहुषां श्रियमाशु दीप्ताम् ।
शोरेः समग्रजगतामिव संक्षयेषु
कुक्षौ मता स्थितिरलक्ष्यत शात्रवाणाम् ॥३५॥

1259 वोढुं क्षमा धवलमस्य यशःप्रवाह-
मेका न भूरिति विचिन्त्य स यस्य धात्रा ।
ज्योत्स्नानिभेन नभसि स्फुटशेषभोग-
च्छायाच्छलादवनितालुनि[3] च व्यभाजि ॥३६॥

1260 लीनद्विरेफविधुतामरपुष्पकर्ण-
पूरोत्थितोऽनधिगतप्रसरोऽपि दूरात् ।
यस्याशु केसररजोनिकरश्चकार
नाकाधिपस्य कलुषत्वमभीक्ष्णमक्ष्णाम् ॥३७॥

1261 शक्यः कथं स शतदुन्दुभिराहवेषु
जेतुं सुरैर्दलितसंधिविनिर्गताभिः ।
यस्य प्रतापदहनोग्रशिखावलीभिः
शङ्के बहिर्ज्वलितमेव दिवस्पृथिव्योः ॥३८॥ पञ्चभिः कुलकम्

1262 अभ्येयुषां विरचिताञ्जलिबन्धमुर्वी-
तृष्णा दयार्द्रमनसा परिरक्षतासून् ।
येनोपतापशमनैकरसेन खड्ग-
धाराजलैः शममनीयत शात्रवाणाम् ॥३९॥

---

१. A, B प्रधानस्य । २. B त्यक्तवतां (footnotes) ।
३. B पाताले (footnotes) ।

1263　भ्राम्यन्ननेकशतपत्रशरारिराशि-
　　सेवास्पदाहवसरोभुवि राजहंसः ।
　यो हेलया चिरमखण्डयदूढशुक्ल-
　　पक्षो रिपोर्धवलकीर्तिमृणालवल्लीः ॥४०॥

1264　पस्पन्दिरे शिखरिणोऽब्धिपयांसि दूर-
　　माकाशवर्त्म परिपुप्लुविरेऽनुवेलम्[1] ।
　पुस्फोट चावनितलं वलचक्रवाल-
　　मर्देन यस्य हरनृत्त इव प्रयाणे ॥४१॥

1265　[2]पातालरन्ध्रघटितास्पदभोगिभोग-
　　[3]वेल्लज्जटाविघटनाहित[4]पातशङ्कः ।
　भ्रष्टार्कचन्द्रफलदन्तुरदिग्लताग्र-
　　संशीर्यमाणविकटाम्बुदपत्रवृन्दः ॥४२॥

1266　तेनावरुग्णकरकेसरपक्ष्मशोभ-
　　नक्षत्ररत्नकुसुमस्तबकोज्वलश्रीः ।
　एकेन कालदमनासुरकुञ्जरेण
　　नोन्मूल्यते न भुवनत्रयकल्पवृक्षः ॥४३॥　　युगलकम्

युगलकगर्भं पञ्चभिः कुलकम्

1267　उत्खातशातकरवालकरालबाहु-
　　रुत्प्लुत्य मत्तजयकुञ्जरकुम्भकूटात् ।
　मूर्ता रिपो रुचिरधौतदुकूलशुक्लां
　　जग्राह कीर्तिमिव यो युधि वैजयन्तीम् ॥४४॥

---

१. मुहुर्मुहुः (footnotes) ।

२. B, C पातालगर्भघटितास्पद for पातालरन्ध्रघटितास्पद ।

३. B मूल (footnotes) ।　　४. B कृत (footnotes) ।

1268 यस्याततायिजनताश्चरणप्रणाम-
वैलक्ष्यखेदजनितं परिपाण्डुरत्वम् ।
वक्त्रेषु गोपयितुमाकुलिता भवन्ति
सेवाञ्जलिस्थगितदीर्घललाटपट्टाः ॥४५॥

1269 पार्ष्णिप्रहारघटनारभसावदीर्ण-
शल्यायमानविकटास्थिशिलावकीर्णम् ।
यस्यामराधिपगजोऽपि बिभर्ति दान-
पङ्कच्छटाकलुषकान्तिकपोलमूलम् ॥४६॥

1270 यस्य प्रतापदहनो धवलं निनाय
विच्छायतामरियशः प्रविजृम्भमाणम् ।
उल्लङ्घितार्णवतटः सहसा सहस्र-
रश्मेः प्रकाश इव शीतमरीचिबिम्बम् ॥४७॥

1271 शक्तो गवाक्षमधुना[1] क इवानुबन्धु[2]-
मायोधनेषु रचितातनुजालमार्गम् ।
यत्रारिभीतितमसा न पदं व्यधायि
विस्पष्टपाण्डुरयशः शशिचन्द्रिकाढ्ये[3] ॥४८॥

पञ्चभिः कुलकम्

1272 सत्कर्णिकाकनकपीठ-पठद्द्विरिञ्चि-
निर्मुक्तमञ्चितदलं हरिनाभिपद्मम् ।
उत्खाय यः करतलेन सुरारिराज-
लक्ष्म्या वतंसकपदे विनिधातुमैच्छत् ॥४९॥

---

१. B गवाक्षमपि यं for गवाक्षमधुना ।
C गवाक्षमपिरार्क ।

२. B अनुसतुं (fooootnotes) ।

३. A, C शशिचन्द्रिकाढ्यम् for शशिचन्द्रिकाढ्ये ।

1273 सङ्ग्राममार्गमरुभूमिषु तिग्मरश्मि-
रश्मिच्छटाखचितखड्गमरीचिकासु[1]।
छायामुपोढजरठातिदृढोष्मवैरि-
चक्रं न यस्य यदवाप किमङ्ग तं तत् ॥५०॥

1274 दोर्दण्डदर्पदलनाकुलितत्वमाप्त-
मायोधनेषु रभसात्प्रविजृम्भमाणम्।
उत्सृष्टिकाङ्क्षमिव यो विदधौ निवृत्त-
युद्धोद्धतप्रहरणं प्रतिपक्षमेकः ॥५१॥

1275 यस्मिन् समुच्चलति फूत्कृतवह्निसान्द्र-
धूमच्छटारुणितकान्तिकलापमुच्चैः।
शेषः फणामणिगणं परिणामिपिण्ड[2]-
खर्जूरकोमलमधत्त विगाढखेदः ॥५२॥

1276 [3]तं संयुगाग्रभुवि भावय भावयत्व[4]-
मुत्सृज्य मत्सरमयं गणनाथ ! भावम्।
उन्निद्रतां सुमनसामसकृच्चकार[5]
शौर्यं मधोरिव विजृम्भितमाशु यस्य ॥५३॥ पञ्चभिः कुलकम्

1277 निःश्रेणिमूर्जितविपक्षचमूं विधाय
कीर्तिं दिदृक्षुरिव दिक्षु कृतप्रतिष्ठाम्।
यस्यारुरोह शशिशुभ्रयशःप्रकाश-
शौधोन्नतांसशिखरं भुजवीर्यलक्ष्मीः ॥५४॥

---

१. C रक्तमरीचिकासु for खड्गमरीचिकासु।

२. B परिणामपिंग for परिणामपिण्डि।

३. C ते संयुगाग्रमिव for तं युगाग्रभुवि। ४. C omits भावयत्व।

५. A सुमनसामसकृन्नराणां।
C सुमनसामसकृन्नयन्तु।

1278 [१]अक्ष्मायि यस्य शिथिलीकृतनागनाथ-
विस्तारिभोगनिगडं भरखर्वितं सत् ।
उद्वेलसिन्धुपरिखं क्षितिपीठपृष्ठ-
[२]माजघ्नुषीभिरभितः ककुभश्चमूभिः ॥५५॥

1279 [२]यस्यारिकुञ्जरकटेषु तलाभिघात-
लीलाविवर्णरुधिरौघमलीमसेषु ।
विच्छिन्नदानसलिलेष्वपि तत्कलङ्क-
शङ्काकुलैश्चिरमलीयत चञ्चरीकैः ॥५६॥

1280 तं च प्रतापवडवामुखवह्निहेति-
संप्लुष्टदुस्तरदुरन्तविपक्षसिन्धुम् ।
हेलाविडम्बितहरिं क इवोत्सहेत
जेतुं विलङ्घितजगत्त्रितयं प्रजङ्घम् ॥५७॥ कलापकम्

1281 यस्याततायिदयितानयनोदबिन्दु[३]-
संपातहेतुरनिशं विरराज खड्गः ।
पीनांसकूटविकटोन्नतबाहुदण्ड-
निर्यत्प्रतापशिखिधूम[४] इवाहवेषु ॥५८॥

1282 आस्कन्दलग्नबलबंहिम[५] भूरिभार-
नम्रीकृतं विधुरितस्थिति दिग्गजेन्द्रम् ।
शेषेण यस्य धरणीवलयं कथञ्चि-
दुत्क्षिप्तकुञ्चितफणानिकरेण बभ्रे ॥५९॥

---

१. B विधूनितं for अक्ष्मायि ।
C सूक्ष्मापि for अक्ष्मायि ।

२. A omits....रिकुञ्जरकटेषु ।
C reads यस्याहवेषु करिकुञ्जकटेषु ।

३. A omits दबिन्दुसंपातहेतु । ४. A, B, C शिखिमार्ग ।

५. B बाहुज्य ।

1283　आपीनमग्नजयकुञ्जरकुम्भचीन
　　पिष्टाच्छटाच्छुरिततोयतरङ्गताम्राः[1] ।
यत्सैनिकैर्ददृशिरे जलधेस्तटेषु
　　गर्भीकृतौर्वदहना इव वारिवाहाः ॥६०॥

1284　यस्य प्रयाणसमयेषु वशीकृतानां
　　वैलक्ष्यखेदजनितं परिपाण्डुरत्वम् ।
निह्नूयते सपदि पादनखांशुजाल-
　　लेपेन शङ्खशुचिना वदनेष्वरीणाम् ॥६१॥

1285　मन्दप्रतापघटने सति तिग्मभासि
　　पर्यस्तशोणितरसारुणमण्डलाग्रे ।
छायाद्रुमेण रणवर्त्मगतेन तेन
　　दूरायतोन्नतिभृता सविशेषमूहे ॥६२॥　　पञ्चभिः कुलकम्

1286　व्यूहं समारचय तेजय सैनिकौघ-
　　मास्फालयेष्व[2]सनमाशु विमुञ्च बाणान् ।
भिन्द्धि क्षणात्करिघटा दलयाश्ववारा-
　　नाचेरिवांसमिति योऽरिगणं व्यमृद्गात्[3] ॥६३॥

1287　मायाप्रपञ्चविवशीकृतविग्रहेण
　　येनावलोकयत एव शशाङ्कगौरम् ।
विस्मायिनस्त्रिदशदानवमण्डलस्य-
　　दैत्यारिणामृतमिवाशु यशोऽपजह्रे ॥६४॥

1288　यस्याभियाति भवनेष्वसमाप्तचित्र-
　　संभारभित्तिपुरुषा मलिनीभवन्तः ।
उन्मीलनावसरशून्यदृशः समिद्धां
　　दध्युर्दिवानिशमिव श्रियमन्यवस्थाम् ॥६५॥

---

१. C तरङ्गतायाः for तरङ्गताम्राः ।　　२. A omits ष्वसन ।

३. B विमृद्गात् for व्यमृद्गात् ।

1289 नाभाति कोमलकपोलतलार्पितैक-
हस्ताङ्गुलीनखमयूखशिखावकीर्णम् ।
यस्याततायियुवतेर्नवयौवनेऽपि
विभ्रज्जराधवलतामिव कर्णमूलम् ॥६६॥

1290 शक्यः कथं स रणवर्त्मनि धूमकेतु-
रुत्सोढुमन्यसुभटैर्दृढमूलबन्धः ।
उल्लासिकीर्तिधवलाञ्चितवैजयन्ती-
रुद्धाखिलाम्बरतलोन्नतबाहुदण्डः ॥६७॥ पञ्चभिः कुलकम्

1291 लक्ष्मीलतामकृत यो बलिदानवस्य
पर्युच्छ्वसत्सुमनसं फलबन्धहृद्याम् ।
विश्राणनामलजलस्फुटखड्गयष्टि-
धारानिरर्गल-निपातविरुग्णमूलाम् ॥६८॥

1292 शीतांशुशुभ्ररुचि लङ्घयतो जगन्ति
यस्यात्मना सह यशो बलिबन्धहेतोः ।
पादारविन्दमकरन्दरसायमान-
मन्दाकिनीसलिलधौतमिवोद्गतं सीत्[1] ॥६९॥

1293 विच्छिन्नदैत्यपति-निष्ठुरकण्ठपीठ-
विष्यण्णशोणितमलीमसशातधारम् ।
प्रत्यग्रटङ्कघटनापरिषेकलग्न-
पङ्कच्छटाङ्कमिव यस्य विभाति चक्रम् ॥७०॥

1294 प्रेङ्खन्नखप्रकरदीधितिपक्ष्मपङ्क्ति-
रक्ताङ्गुलीदलकुलं विरराज यस्य ।
विश्वाकृतेरतनुपाणिसरोजयुग्म-
मुत्तम्भितार्कशशिमण्डलबीजकोशम् ॥७१॥

---

१. A omits गाढोप ।

1295 यस्याचक्रासततितरां प्रतिपन्नविश्व-
रूपस्य दीर्घसरला बहुतामवाप्ताः ।
निःशेषषोडशनितम्बवतीसहस्र-
[1]गाढोपगूहनरसादिव बाहुदण्डाः ॥७२॥

1296 यस्याधिवारिनिधि खर्वितशेषभोग-
शय्यानिरर्गलविवर्तनविभ्रमश्रीः ।
हेलाविनिर्मृदितशोणितपङ्कगर्भ-
दूरावमग्नमधुकैटभटिट्टिमासीत् ॥७३॥

1297 फूत्कारपावकशिखानिकरो दिधक्षु-
राक्रान्तकालियफणानिकुरम्बमुक्तः ।
निर्वापितः सपदि यस्य शिखण्डमूल-
निःष्यन्दमान-यमुनाजलनिर्झरौघैः ॥७४॥

1298 यस्य व्यलोक्यत नवाम्बुदनीलकान्ति[2]-
रुत्तालकेशि-वदनावटसीम्नि बाहुः ।
विभ्रद्विसारिवडवामुखरन्ध्रलग्न-
वेलानिलावधुतसिन्धुतरङ्गलीलाम् ॥७५॥

1299 विभ्यत्स कैटभरिपुः स्फुटकोलसिंह-
रूपामवाप वनभूमिमिव[3] व्यवस्थाम्[4] ।
येभ्यः सचामरकराममराधिराज-
लक्ष्मीं मुखेक्षणपरां परमां दधद्भ्यः ॥७६॥

1300 किं कीर्तितैर्बहुभिरत्र कृतात्मभिस्तै-
रन्यैश्च सारमिदमेव ननु ब्रुवे वः ।
शंसन्ति नीतिहृदयं सुधियस्तदेत-
दालोच्यते स्वपरपक्षबलाबलं यत् ॥७७॥ दशभिः कुलकम्

---

१. B उन्नताम् । २. A, B मत्कुणः । ३. C नीलकीर्ति ।
४. C वमभूमि तव व्यवस्थाम् । B विविधां दशाम् ।

1301 वक्त्रामृतांशुकिरणाहतमप्यभीक्ष्ण-
मुन्निद्रमेव दधती करपुण्डरीकम् ।
लक्ष्मीर्नृणां मतिमतामिह चित्तवृत्ति-
माह्लादयत्यधिकमेव नयादवाप्ता ॥७८॥

1302 तत्तस्य कश्चिदुपयातु समीपमाशु
संदेशदानचतुरो दितिजस्य दूतः ।
भिन्नेतरप्रकृतिमण्डलकार्यतत्त्व-
बोधे यतः प्रणिधिरेव रिपोस्तमाहुः ॥७९॥

1303 तेनोदितोऽपि मधुरं सुरलोककार्य-
मार्याः स नोऽसुरपतिः प्रतिपत्स्यते चेत् ।
सर्वक्रियासु भवतां तदवस्थ एव
दण्डस्ततः समुपपादितसद्व्यवस्थः ॥८०॥

1304 इति नयगुणगर्भं कीर्तितं वो मयैत-
न्न मम दितिसुतेभ्यः काचिदस्त्यत्र भीतिः ।
विभुरयमधुनास्ते कार्यदोलाधिरूढः
किमपरमिति तर्कातीतमार्गं न विद्मः ॥८१॥

1305 इत्यान्दोलितरत्नकुण्डलशिखानिर्घृष्टगण्डस्थलो
वाक्यं नीतिपथानुसारि रभसादुक्त्वा व्यरंसीदसौ ।
शंसन् साध्विति तच्च कालमुसलं दूत्ये नियोज्य द्विषः
शूली बन्दिजनाभ्युदीरितजयज्योत्कारमौज्झीत्सभाम् ॥८२॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये
दूतसम्प्रेषणनिरूपणो नाम षोडशः सर्गः ।

## सप्तदशः सर्गः

1306 उत्तस्थुष्वथ दिवसार्धशङ्खशब्दे-
रामाभिस्तदनुचराः सविभ्रमाभिः ।
उच्चेतुं तरुकुसुमानि मन्दराद्रे-
र्निर्जग्मुः मुदितधियः कृतानुयात्राः ॥१॥

1307 तं नानाफलरसपानसङ्गमत्त-
व्यावल्गत्कपिकरलुप्तमातुलुङ्गम् ।
कल्पान्तोत्थितपवनाभिघातसाक्षि-
व्याघृत्तिव्यतिकररत्नगण्डशैलम् ॥२॥

1308 प्रभ्राम्यत्सुरपुरदीर्घिकोदगाह-
व्यासक्तद्विपकरशीकरोक्षितार्कम् ।
कुञ्जान्तः फलितमृगेन्द्रनादलीला
वित्रस्यच्चमर-चमूर-चक्रवालम् ॥३॥

1309 उद्वेल्लत्तटकलधौतकल्पवल्ली-
संतानस्तिमिततडिद्विलासमेघम् ।
संभुक्तत्रिदशवधूविशीर्णभूषा-
रत्नांशुच्छुरितगुहागृहाग्रभित्तिम् ॥४॥

1310 स्थूलाश्मप्रतिफलदच्छनिर्झराम्भो-
निर्धूतत्रिदशवधूरतान्तखेदम् ।
प्रभ्राम्यद्रविरथ वाजिवक्त्रनिर्य-
त्फेनौघस्तबकितरत्नसानुकुञ्जम् ॥५॥

1311　　स्वच्छाम्भः कटकसरस्तटान्तकूज-
　　　　त्कादम्बी दलितमृणालकाण्डखण्डम् ।
　　दावाग्निव्यतिकरदह्यमानभूरि-
　　　　प्रत्यग्रागुरुमवलोक्य रेमिरे ते ॥६॥　　　पञ्चभिः कुलकम्

1312　　लावण्यग्लपितशरन्निशाकराणि-
　　　　श्यामानामिव परिपश्यतां मुखानि ।
　　तच्चित्रं सुगततया यदन्वितानां
　　　　पादानामविरलरागताविरासीत् ॥७॥

1313　　बिभ्राणा विपुलकबन्धतां जयन्त्यो
　　　　निःशेषं भुवनमुदीर्णकम्बुनादाः ।
　　प्रत्यग्रोज्ज्वलकरवालिकास्तरुण्य-
　　　　स्तन्वाना रुचिरतराङ्गदोपशोभम् ॥८॥

1314　　अङ्गानामसमरतान्ततरताभिरामां
　　　　बिभ्रत्यः श्रियमसिरोपघातभाजाम् ।
　　भूयस्योवनमनु नायकानुयाता-
　　　　स्ता सेना इव कुसुमायुधस्य चेलुः ॥९॥　　　युगलकम्

1315　　यान्तीनां विजितविनिद्रपङ्कजानां
　　　　पादानां कुमुदवनानि संमदेन ।
　　मञ्जीरक्वणित-विकृष्यमाणहंस-
　　　　व्याजेनानुगममिव व्यधुर्वधूनाम् ॥१०॥

1316　　कान्तानां कुचकलशैर्यथा यथोद्वे
　　　　तुङ्गत्वं व्यवदधदाननेन्दुलक्ष्मीम् ।
　　तामुद्वीक्षितुमिव तैस्तया तथाप्तै-
　　　　र्विस्तारं क्षितिरवतस्तरे नितम्बैः ॥११॥

1317　विस्रस्ते त्रिदशपुरंध्रिरुत्तरीये
पश्यन्ती दयितनखक्षतं स्तनाग्रे ।
चस्खालानवहितचित्तवृत्ति यान्ती
प्रेमाहो क्वचिदपि नेक्षते व्यपायम् ॥१२॥

1318　आलोक्य प्रियतमचुम्बिचक्रवाकी-
चक्राङ्कस्फुरदरविन्दवृन्दमम्भः ।
औत्सुक्यात्किलजघनालसाः प्रियाणां
कण्ठान्तः प्रणिहितदोर्लतं ययुस्ताः ॥१३॥

1319　न्यस्यन्ती सपदि पदानि तत्पदेषु
स्वेदाम्भःकणक-करालितानि पश्चात् ।
सञ्चेले दयिततमस्य वर्त्मनैका
प्रेमाहो विविधविधिप्रपंचदक्षम् ॥१४॥

1320　कस्याश्चिल्ललितगतागतैः प्रयान्त्याः
संसक्तं भुजलतया विघट्यमानः ।
चक्रन्दासुलभनितम्बपातशङ्का-
सम्मोहादिव मणिमेखलाकलापः ॥१५॥

1321　मा स्मैषां पथि परुषे कदर्थनाभूद्-
पादानामिति दययेव कोमलानाम् ।
स्वच्छायाकिसलयसंस्तरः पुरस्ता-
दातेनेऽरुणमणिनूपुरैर्वधूनाम् ॥१६॥

1322　क्लामन्त्याः प्रतिपथमाशु वीजितायाः
सख्याराद्नवशिखिपिच्छनालगौरैः ।
कस्याश्चिद्विमलकपोलबिम्बितश्री-
रुत्तंसस्तबकपदे प्रकीर्णकोऽभूत् ॥१७॥

1323 अन्यस्या दयितकरावलम्बिपाणे-
स्तत्स्पर्शाहितपुलकानुबन्धभाजैः ।
गच्छन्त्याः पथि विचकास वक्त्रशोभा
नीवी च श्लथितनितम्बबिम्बवासाः ॥१८॥

1324 सर्पन्त्याः किसलयपाणिना मुहूर्तं
श्लिष्यन्तीं तरुगहनेऽभिवेष्ट्य दूरात् ।
श्यामायास्तनुममिमीत मध्यभागं
कस्याश्चित्प्रकटकुतूहलेव वल्ली ॥१९॥

1325 गच्छन्त्यस्तनुखगजालपादमुद्रा-
न्यासानामुदधिपुरन्ध्रिसैकतानाम् ।
सुन्दर्यः सरसनखक्षतावचूलै-
स्तुल्यत्वं विकटकटीरकैः शशंसुः ॥२०॥

1326 उत्तानस्थिति विकराल-[1]कालजङ्घ-
व्याकोशाङ्गुलिखगपादनिर्विशेषम् ।
संस्थानं तनुतरनालपत्त्रमग्रे
नारीभिः प्रतिपथमैक्ष्यतोरुवूकम् ॥२१॥

1327 ताः शोभाधिगतपरस्परोपमानं
श्रोत्राक्षिस्तनकरपादमुद्वहन्त्यः ।
सद्वर्त्मस्थितिमपि पक्ष्मपङ्क्तिमूहु-
र्यज्जिह्मां तदवमतामिव प्रपेदे ॥२२॥

1328 आह्लादं शिशिरतरावमर्शहृद्याः
कुर्वत्योऽधिकमपरिप्लवप्रकाशाः ।
और्वर्यः स्फुरदनघावलम्बिबिम्बाः
बिम्बोष्ठ्यो विबभुरपूर्वविद्युतस्ताः ॥२३॥

---

१. A, D नीलजङ्घ ।

1329 आक्षिप्तप्रियतमचेतसा तदानीं
पुष्पेषुस्फुटमवतावधानयोगम् ।
पर्याप्तस्वरपद-तालसङ्गिरुच्चै-
र्गान्धर्वस्थितिरथ यौवतेन तेने ॥२४॥

1330 आभास्वत्किरणकरालरत्नहार[1]-
प्रत्यग्रां दधदलकास्पदामभिख्याम् ।
वैदग्ध्यीं युवतिजनोऽथ पुष्पकाञ्चीं-
छायावान्द्रविणपतेरिवाललम्बे ॥२५॥

1331 तुङ्गत्वं कुचकलशेष्वथाङ्गनानां
विस्तारं विकटकटीरकस्थलीषु[2] ।
मध्येषु कृशिमदशां शशंश लोको
भावेषु स्थितिरुचिता जनस्य शस्या ॥२६॥

1332 प्राप्तानामबलतयापि निःसहत्वं-
भ्रष्टानां न तु बलिभावलग्नतायाः ।
उत्तुङ्गैः कुचकलशैरभारि तासां
सद्वृत्तैरपि चतुरश्रताश्रया श्रीः ॥२७॥

1333 विस्पष्टद्रढिमगुणाभिरामरूपैः
सत्स्थानस्थितिभिरनूनलक्षणाढ्यैः ।
रामाणां करणगणैरिवाङ्गहारा-
नाजह्रुः श्रियमथ मौक्तिकैर्न हाराः ॥२८॥

1334 शृङ्गारस्थिति-रमणीयनर्मगर्भ-
व्यापारातनुरसनायकानुयाता ।
रम्भोरूरथ चतुरङ्कलाञ्छितश्रीः
प्रत्यग्रामतनुत नाटिकेव शोभाम् ॥२९॥

---

१. B, C रत्नहारैः ।        २. A स्थलेषु ।

1335 विभ्रत्या समकरकेतनश्रियोच्चैः
प्रत्यग्राम्बधरदलप्रवालवल्लीम् ।
मार्गस्थं हरिणदृशा जनं हरन्त्या
लावण्यं जलनिधिवेलयेव भेजे ॥३०॥

1336 संस्पृष्टश्चरणतलेन पक्ष्मलाक्ष्याः[1]
संसक्तैः स्तबकशतैरशोकवृक्षः ।
क्षेपीयः पथि विकसल्लताकुलोऽभू-
न्मार्गस्थः क इव न भाजनं विभूतेः ॥३१॥

1337 नन्वस्मिन् रतगुरुणा समं निकुञ्जे
विश्रम्य व्यपनय तावदध्वखेदम् ।
इत्यारादकृतनवांशुकाञ्चलाग्र-
व्यासक्ता व्रततिरिवार्थनां रमण्याः ॥३२॥

1338 अन्यस्या गुरुजघने बभार पश्चा-
दायान्त्याः स्फुटमधिकं सगौरवत्वम् ।
पश्यन्त्यां प्रतियुवतौ सरागमेनां
यत्कान्तश्चिरमनुपालयाञ्चकार ॥३३॥

1339 अन्वीये मधुकरमण्डलेन तावत्
संसर्पन्नुपवनमारुतः सुगन्धिः ।
यावत्स्त्रीपरिमलगोचरो न लेभे
को नाद्यं त्यजति पदं विशेषलाभात् ॥३४॥

1340 प्रस्तावे नवमधुमासनाटकस्य
स्थित्वान्तर्गहनलतातिरस्करिण्याः ।
प्रारब्धा परभृतनर्तकेन कूजा
स्त्रैणस्य श्रुतिमहरत्प्ररोचनेव ॥३५॥

---

१. A, B पक्ष्मलाक्ष्यां ।

1341 बिभ्राणं वसनमिवान्तरापि चूतं
सामोदस्थिति गिरिकर्णिकाभिरामम् ।
माणिक्यं सविकटहारतां दधत्तत्-
क्ष्माभर्तुस्तटमनुकाननं च रेजे ॥३६॥

1342 निर्वाणस्थितिमपवर्तितैलमुच्चै-
रव्याप्तं न मृदु मरुद्भिधीयमानम् ।
तं प्रातस्तनमिव दीपकं विलोक्य
स्त्रैणेन द्विगुणरताभिलाषतापे ॥३७॥

1343 बिभ्राणः [1]कनकमयं नु बीजकोश-
व्याजेनातनुचषकं कुशेशयिन्याः ।
उत्क्षिप्तस्तरलदलाङ्गुलिर्व्यलोकि
श्यामाभिः कर इव भास्करस्य पद्मः ॥३८॥

1344 गच्छन्तः पथि घटिता निकुञ्जदेशे
विश्रान्ताः क्वचन परस्परं युवानः ।
सौहार्द्रं विदधुरयन्त्रणं क्रियाणां
विस्रम्भः सुहृदि फलं ननु प्रधानम् ॥३९॥

1345 वामभ्रूमुखमदिरासुगन्धिसेक-
व्यासङ्गस्फुटबकुलद्रुमप्रसूनम् ।
भृङ्गालीचरणविधूतपक्ष्ममाला-
पर्यस्तस्तबकपरागपारिभद्रम् ॥४०॥

1346 उद्गच्छन्नवलवलीलवङ्गपुष्प-
प्रत्यग्रातनुतरसौरभाभिरामम् ।
दिक्चक्रस्फुरदनुबन्धिगन्धफुल्ल-
न्मन्दारस्तबकमधुप्रसङ्गिभृङ्गम् ॥४१॥

---

१. A कनकमयेन ।

1347 सच्छायं विपिनमनुप्रविश्य पार्श्व-
व्यासक्तप्रियकरलग्नपाणिपद्मः ।
[1]प्रश्च्योतन्नवमकरन्दपानलीला-
विस्रम्भातिशयसुखोपलब्धनिद्रैः ॥४२॥

1348 ऐक्षिष्ट भ्रमरकुलैः कृतं गुरुत्वं
वल्लीनां युवतिजनस्तदा नतानाम् ।
कस्यार्थी [2]न भवति गौरवाय लोके[3]
संपन्नाभिमतफलः समाश्रितो वा ॥४३॥ [4]चक्कलकम्

1349 आबद्धक्रमहरिकम्प्यमानसाला
सा रामाभिगमसमाकुला तदानीम् ।
लङ्केव स्फुटशुकसारणा वनोर्वी
बभ्राजे घनरुचिराक्षसानुविद्धा ॥४४॥

1350 आकर्षन्मधुरसशीकरान् वनेभ्यः
शेफालीकुसुमकषायगन्धगर्भः ।
आनन्दं मरुदतनोत्तनूदरीणां
कः श्रेयानधिकगुणत्वमाप्य न स्यात् ॥४५॥

1351 एकोऽपि प्रसवशरः स केन सह्यो
नानात्मा किमु गणनातिगोचरो यः ।
तद्भिन्ने हृदि चरितार्थ एव कामो
[5]मानिन्यां न पुनरभूदधिज्यचापः ॥४६॥

1352 वासन्त्यः कुसुमभृतश्च कुन्दवल्यो
ग्रैष्म्यश्च प्रतिगिरि पाटलाः प्रफुल्लाः ।
अन्योन्यं युवतिजनस्य मानभङ्ग-
प्रागल्भ्यं व्यतिजहसुस्तरामिवारात् ॥४७॥

---

१. B प्रश्च्येतत् । २. B भवति न । ३. C शोकः ।
४. A omits । ५. B मानिन्याः ।

1353　रामाणां नवनवमालिकाविकास-
　　प्रत्यग्रप्रसवतिरस्कृतं तदानीम् ।
प्रारम्भे परिणतिमाप मानधैर्यं
　　सुग्रीष्मे मुकुलमिवाथ कुन्दपुष्पम् ॥४८॥

1354　प्रत्यग्राङ्कुररचितश्रियं वनाली
　　बिभ्राणा विटपततिं सपत्त्रिनादाम् ।
अभ्यर्णा शरदिव निम्नगातटोर्वी-
　　मानन्दं व्यतनुत मत्तकाशिनीनाम् ॥४९॥

1355　उत्सृज्य प्रविकचचूतयष्टिमुच्चै-
　　स्तृष्णान्धा अपि परिबभ्रमुर्द्विरेफाः ।
कान्तास्ये श्वसितसुगन्धिनि प्रकर्षा-
　　न्नैवार्ता लघुनि पदे भवन्ति धीराः ॥५०॥

1356　संस्थानं दधदुपरि च्छदत्रयस्य
　　त्रेताग्निस्थितिसदृशं नितम्बिनीभिः ।
[1]नृत्यन्त्याः पवनवशाल्लताङ्गनायाः
　　[2]काङ्कूलः कर इव पल्लवो व्यलोकि ॥५१॥

1357　बिभ्राणैरधिकगुणत्वमङ्गनानां
　　हस्ताग्रैः प्रसभमकारि पल्लवानाम् ।
प्रत्यग्रोज्ज्वलनिजशोभया सरागै-
　　र्भग्नानामपि पुनरुक्त एव भङ्गः ॥५२॥

1358　मूलस्थप्रियनखमण्डनस्य बाहो-
　　रुत्क्षेपात्प्रतियुवतिं विदूनयन्त्याः ।
आदित्सोर्द्रुमविटपाग्रवर्तिपुष्पं
　　पुष्पत्वेऽप्यमृतफलत्वमेव भीरोः ॥५३॥

---

१. A मानिन्याः ।　　२. A कण्डूलः ।

1359 श्लिष्यन्त्या विटपशिखाश्रयप्रसून-
व्यादित्सासरभसचेतसस्तरुण्याः ।
अप्राप्तप्रसवफलोदयोऽपि शाखी
संपत्तिं फलभरशालिनीमवाप ॥५४॥

1360 शाखाग्रस्थिति कुसुमं तरोर्जिघृक्षु-
र्यत्पीनस्तनवनिता शशाक नाप्तुम् ।
तत्रासीद्गतगुरुणा विलूय दत्ते
प्रत्यक्षं प्रतियुवतेः समुन्नता स्त्री ॥५५॥

1361 बिभ्राणै रसभरशालितामभीक्ष्णं
रागश्रीसमुदयशोभिभिस्तदानीम् ।
दिव्यस्त्रीकरजपरिक्षतैस्तरूणां
तारुण्यं सफलमभारि पल्लवौघैः ॥५६॥

1362 भग्नानामगणिततद्विपत्तिदोषै-
र्वल्लीनां मधु कुसुमेष्वपायि भृङ्गैः ।
शुकानां तरलतया मलीमसानां
न स्वार्थात् क्वचिदतिरिच्यतेऽनुरोधः ॥५७॥

1363 कुर्वाणा पृथुनि वधूर्नितम्बबिम्बे-
विस्रस्तं वसनमनास्थदुर्विनीतम् ।
विस्पष्टमनुरहसं प्रियस्य नान्या
न व्याक्षीन्निधुवनलालसां स्फुरन्तीम् ॥५८॥

1364 भ्रूक्षेपानुगतनिकुञ्जदत्तदृष्टे-
राकूतं सपदि निशेमुषी प्रियस्य ।
तद्वर्त्मन्यविशत काचिदिङ्गितज्ञा
नो कार्ये क्वचन भवन्ति दीर्घसूत्राः ॥५९॥

1365　निःश्वासैरविरलसौरभैर्विकृष्टः
　　श्यामायाः करकमलेन संभ्रमन्त्याः ।
　बभ्रामाभिमुखमपाकृतोऽपि भृङ्गः
　　पर्याप्तं न खलु मलीमसस्य धाष्टर्य्यम् ॥६०॥

1366　कान्तानां करकमलैरनोकहानां
　　लुप्तेषु प्रसभमुपेत्य पल्लवेषु ।
　धूतानामुपवनवाहिभिः समीरैः
　　किं चित्रं यदसुमनस्कताविरासीत् ॥६१॥

1367　व्याविद्धा मधुकरपङ्क्ति[1]धूम्यया रा-
　　दाभासीदधिकमशोकपादपस्य ।
　प्लुष्यन्ती सपदि मनांसि मानिनीना-
　　माताम्रच्छविरभिलुङ्कितेव[2] वल्ली ॥६२॥

1368　नीलाब्जं श्रवणवतंसतां तरुण्या
　　यद्भर्त्रा विकचमनीयतानतं[3] सत् ।
　आत्मानं विमलकपोलदर्पणस्थं
　　तच्छोभातिशयपरीतमैक्षतेव ॥६३॥

1369　न श्रेयान्सममधिकश्रिया विरोधो
　　युक्तात्र प्रणतिरितीव पीवरोर्वाः ।
　उत्तंसोत्पलमवनस्य दूरमक्ष्णः
　　प्रास्तावीत्स्तवमिव चञ्चरीकशब्दैः ॥६४॥

1370　आताम्रासितधवलैः [4]प्रसूनवृक्षैः
　　स्थेयोभिः कृतवसतिस्थितेस्तदानीम् ।
　व्यातस्थे स्मरणभुवो वनस्थलीषु
　　स्थूलाभैश्चिरमविसंस्थुल[5]स्फुलश्रीः ॥६५॥

---

१. B धूमसमूहेन ।　　२. B ज्वलिता (footnotes) ।
३. B स्रस्तं (footnotes) ।　　४. B, C प्रसूनवृत्तैः ।
५. B, C चिरमधिसंस्थुलैः स्फुलश्रीः for चिरमविसंस्थुलस्फुलश्रीः ।

1371 पर्यश्रुस्त्रु तिपरिपाटलत्वमक्ष्णोः
कुर्वाणं मनसि मनोरमं व्यलीकम् ।
मानिन्यो रज इव चक्षुषि प्रविष्टं
संरम्भस्फुरदधरा न पर्यमृष्यन् ॥६६॥

1372 कुर्वाणामधितरु [1]संग्रहेऽपि पुष्पे
हस्ताग्रं सपदि युवा स्वयं प्रदित्सुः ।
रम्भोरूमरुधदनेकयुक्तिभेदैः
प्रेमाहो रचयितुमीहतेऽनुकूलम् ॥६७॥

1373 नैकत्र श्रवसि तथा सहेमताडी[2]
ताटङ्केऽप्यकृत वधूः प्रसाधितास्थाम् ।
अन्यत्र प्रियकरकृष्ठलम्बपाली-
[3]विन्यस्तच्छदसुभगे यथाभ्यमित्रम् ॥६८॥

1374 अन्यस्याः सुरभिमुखानिलावकृष्टाः
वक्त्रेन्दोः पृथुपरिवेशचक्रबन्धम् ।
भृङ्गाणां ततिरकरोत्पतत्रवात-
व्याधूतस्तबकवतंसधूलिजालैः ॥६९॥

1375 उन्निद्रच्छदमुपदेति[4] पुष्पभारा-[5]
दानीतं दयिततमेन मेनकाश्रीः ।
विब्बोकाञ्चितविनिहिचितोत्तमाङ्गा
वामोरूरभिमुखमग्रहीत् सपत्न्याः ॥७०॥

---

१. B अनपह्नुतैः (footnotes), C सुग्रहेऽपि for संग्रहेऽपि ।

२. B पटमण्डपशोभा (footnotes), C सहेमतन्वी ।

३. B, C पर्यस्त for विन्यस्त ।

४. C उन्निद्रछदमुपधौत । ५. B, C पुष्पमारात् for पुष्पभारात् ।

1376　व्यत्यासाद्दयिततमेन कापि नाम्नः
　　　प्रत्तायामपि सुमनस्यमर्षहेतोः[1] ।
　　संरम्भस्फुरदधरारुणेक्षणश्री-
　　　स्तच्चित्रं यदसुमनस्कतां प्रपेदे ॥७१॥

1377　विश्राम्यत्कुचयुगलोरसि प्रियस्य
　　　स्मेरान्या मृदुचरणाग्रदुर्निविष्टा ।
　　आदाय [2]स्खलनपदं विलोलदृष्टिः
　　　कण्ठान्तः प्रणिहितबाहुकन्दलीका[3] ॥७२॥

1378　[4]संरम्भोन्नमितनितान्ततान्तमध्या[5]
　　　भूयोऽपि स्थितिमधिजग्मुषी कथञ्चित् ।
　　आमोदापहृतमधुव्रतं नतभ्रू-
　　　रुत्तंसं शिरसि बबन्ध बन्धुरश्रीः ॥७३॥　　　युगलकम्

1379　कस्याश्चिद्दयितकराब्जयोजितेन
　　　श्रोत्राग्रे तरुणतमालपल्लवेन ।
　　धूमेनाविरतमिवाभिहन्यमानं
　　　बाष्पाम्भः प्रतियुवतेर्मुमोच चक्षुः ॥७४॥

1380　नीरन्ध्रव्रततितिरोहितेऽपरस्याः
　　　साशङ्कं दयिततमे बभूव चेतः ।
　　अध्यास्ते हृदयमकृत्रिमप्रियाणां
　　　[6]कान्तानामतिबहुमत्सरो ह्यनङ्गः ॥७५॥

---

१. B, C सुमनस्थमर्षहेतोः for सुमनस्थमर्षहेतोः ।
२. B व्याजं (footnotes) ।
३. B लता (footnotes) ।
४. B प्रयत्न (footnotes) ।
५. B नितान्ततान्तमन्या for नितान्ततान्तमध्या ।
६. B कान्तनामतिशय for कान्तानामतिबहु ।

1381 सम्बाधाद्विरहितवल्लभा तदानीं
गायन्ती रणरणकात्तपञ्चमैका ।
निर्लक्षं कुसुमपरिग्रहाय सुभ्रूः
[१]संदंशं सुचिरमबभ्रमत् कराग्रम् ॥७६॥

1382 स्पष्टाक्षिभ्रुवविकृतिप्रपञ्चशोभी
श्रृङ्गाराकृतिपिशुनो विपक्षवामः[२] ।
सग्रीवानिरुपमरेचको जजृम्भे
रम्भोर्वा दयितविलोकनेन हावः ॥७७॥

1383 रामाणां द्रुमविटपाग्रजन्मपुष्प-
व्यादित्साग्भसवशात्सवेपथुभ्यः ।
हारौघैः प्रविगलितं पयोधरेभ्यो
नोद्वृत्तैः सह गुणिनां चिराय योगः ॥७८॥

1384 [३]नेपथ्ये मसृणमनोरमे कृतास्था
श्रृङ्गाराञ्चितरसशालितां वहन्ती ।
कान्तस्य प्रमदमुदारनृत्तलीला
रम्भोरूरतनुत कैशिकीव वृत्तिः ॥७९॥

1385 संफुल्लन्नवनवपुष्प[४]शेखराङ्के
निःशङ्कं मधु पपुषीभिरन्तराले ।
कान्तानां चितरसर्साञ्चितेन चेतो
रामाभिर्मदकिलिकिञ्चितेन जह्रे ॥८०॥

---

१. C संदशं for संदशं ।
B तर्जन्यंगुष्ठसंयोगरस्त्वरालस्यं यदा भवेत् ।
अधुग्नतलमध्यस्थः स संदंश इति स्मृतः । (footnotes) ।

२. B सपत्नीप्रतिकूलः (footnotes) । ३. B आकल्पे अनुद्वत (footnotes) ।

४. B गुच्छे (footnotes) ।

1386　विभ्राणा श्रुतिसुखतां मनोरमश्री-
　　यन्तीनां वनभुवि [1]मत्तकाशिनीनाम् ।
मायूरी कलविरुतिः स्वराश्रयत्वं
　　संप्राप्ता व्यतनुत मार्जनेव शोभाम् ॥८१॥

1387　प्राप्ताया रहसि मनोरमेण योगं
　　रामायाः प्रमदभरोत्थमीक्षणाम्भः ।
पत्त्रालीं सपदि दुधाव गण्डभित्ता-
　　वश्रेयो जगति भवेज्जडान्न केषाम् ॥८२॥

1388　अक्षुण्णा बत [2]शतमन्युता तवेयं
　　साश्चर्या सुभग विनिर्ममे विधात्रा ।
निःशङ्कं विदधत एव गोत्रभेदं
　　वज्रस्ते निवसति वाचि यन्न पाणौ ॥८३॥

1389　इत्यारादभिदधुषीं पुनः सपत्नी-
　　नाम्नैवावनतशिरा [3]युवानुनीषुः ।
बाष्पाम्भःप्लुतनयनां विजृम्भितान्तः
　　सन्तापामपि युवतिं व्यधात् सहासाम् ॥८४॥　　युगलकम्

1390　वीक्ष्याराद्वनभुवि चूतशाखिवल्लीं
　　वल्गन्तीं कुसुमपृषत्कहस्तभल्लीम् ।
निर्माना युवतिरभूद्रते विधेया
　　नौत्सुक्यं व्रजति हि रम्यदर्शनात् कः ॥८५॥

1391　उत्तुङ्गद्रुमकुसुमग्रहाभिलाषा-
　　दुत्तानीकृत-वदनश्रियोऽवतंसः ।
स्रस्तांसे युवतिजनस्य कर्णमूला-
　　दारूढो विनिपततीति नात्र चित्रम् ॥८६॥

---

१. C मत्तकामिनीनाम् for मत्तकाशिनीनाम् ।
२. B शतापराधता (footnotes) ।　　३. B युवानुबध्नन् (footnotes) ।

1392　कान्तायाः कुसुमरजो विलोचनस्थं
　　यत्प्रेयान्वदनसमीरणैर्निरास्थत् ।
तेनैव प्रतियुवतेः समीपभाजः
　　कालुष्यं युगलमनायि दूरमक्ष्णोः ॥८७॥

1393　उत्क्षिप्ता कुसुमजिघृक्षया तदानीं
　　तन्वङ्ग्याः सदुपलपत्रमण्डनश्रीः[1] ।
अम्लायद्भुजलतिकातिसौकुमार्यात्
　　सद्वृत्तैरपि खलु खेदमेति कश्चित् ॥८८॥

1394　विभ्राणे स्फुटतरशुष्कवर्णगेय-
　　स्थानीये निरुपमवक्त्रपाणिशोभाम् ।
विच्छित्तिं वपुषि विलोक्य वल्लभायाः
　　प्राणेशो विपुलविलोचनोत्सवोऽभूत् ॥८९॥

1395　आबध्य स्रजमभिधाविपर्ययेण
　　श्यामाया दददतिवैमनस्य भाजः ।
वैलक्ष्यागमपरिपाण्डुराननोऽन्यो
　　निःस्पन्दस्थितिरकरोज्झरङ्कशङ्काम् ॥९०॥

1396　सागस्के सुहृदि सवेपथुत्वमाप-
　　स्वेदाम्भः प्लुतपुलकाङ्कुरोत्करासीत् ।
आदातुं सुतनुरियेष चावहित्थं
　　प्रेमाहो युवतिषु मौग्ध्यदुर्विदग्धम् ॥९१॥

1397　उत्सृज्य स्फुटतरवर्णशोभमारा-
　　न्निर्गन्धं युवतिजनोऽथ कर्णिकारम् ।
आदित्सुः सुरभितया लवङ्गमस्यै-
　　दाकारादपि गुण एति वल्लभत्वम् ॥९२॥

---

१. B मणिमयैः पत्रैः मण्डनश्रीर्यस्याः ।

1398　भ्राम्यद्भिर्घनमकरन्दशीधुपान-
　　व्यासङ्गप्रमुदितमानसैस्तदानीम् ।
संरम्भादलियुवभिर्वितन्यमानो-
　　न स्त्रीभिर्न नवलतोत्सवः[1] शशंसे ॥९३॥

1399　सौगन्ध्यादविरलकान्तिसौकुमार्या-
　　च्चङ्क्रमैरथ विजितः सरोजखण्डाः ।
भृङ्गौघैः क्वचिदपि [2]नाध्यवत्स्यतारा-
　　द्रूच्यन्ते न खलु परैर्विशेषनिष्ठाः ॥९४॥

1400　बिभ्रत्यः प्रकृतिमनोरमाकृतित्वं
　　ता माल्यग्रथनविकल्पशिल्पदक्षाः ।
प्राणेशानथ सविशेषमेव जह्रुः
　　साधीयो हरति गुणान्तरेण गुण्यः[3] ॥९५॥

1401　श्लक्ष्णत्वं विरलविलेपनश्रियस्ता
　　बिभ्रत्यो रुचितराङ्गवर्तनाभिः ।
सद्रूपाः सललितनाट्यचित्रभित्ती-
　　रालोक्याभिमतजनः पुपोष तोषम् ॥९६॥

1402　गच्छन्ति प्रकृतिमनोरमाः कदाचि-
　　त्कालेन स्फुटमसता[4] गुणेन योगम् ।
निःश्वासश्वसनपरम्पराभिरामां
　　सौगन्ध्यं यदुचितमापि कर्णिकारैः ॥९७॥

---

१. B यत्राभिनवया वध्वा लतयेव मध्नौ द्रुमः ।
　स्वयमालिङ्ग्यते कान्तः सस्यान्नवलतोत्सवः ॥

२. B अधिष्ठितः (footnotes) ।　　३. B गुणवान् (footnotes) ।

४. B अविद्यमानेन (footnotes) ।

1403 प्रेयस्या निबिडनितम्बबिम्बशोभा-
मादित्सुः कुसुममयीं विधाय काञ्चीम् ।
यामारात्सरसमना युवोपनिन्ये
संसर्गात्प्रतियुवतेः कृतापराधः ॥९८॥

1404 [१]प्राप्तस्तत्स्मरणसरोषपाटलाक्ष्या
सस्मेराननलिनस्तया बबन्धे ।
प्रायेण ह्यननुगुणे विधावुपैति
ध्यातोऽर्थः परिणतिमन्यथैव पुंसाम् ॥९९॥ युगलकम्

1405 निःश्वासावधुत पयोधरा विहार-
व्यापाराद्वनभुवि [२]मम्लुषी तदानीम् ।
स्वेदाम्भःकणनिकरं मुमोच सुभ्रूः
शेफाली पवनहतेव पुष्पवर्षम् ॥१००॥

1406 प्रम्लानाञ्चितपुटतामरालकेश्या
बिभ्राणा निपतितारकाभिरामा ।
अन्यस्या विपिनविहारविभ्रमेण
श्रान्ताया दयिततमं जहार दृष्टिः ॥१०१॥

1407 भ्रान्ताया गिरितटकानने मृगाक्ष्याः
प्रेक्ष्यत्वं दयिततमस्य जग्मिवांसः ।
स्विद्यन्त्या बभुरवलग्नबिन्दुचित्राः
प्रोत्तुङ्गस्तनतटवर्तिनो नखाङ्काः ॥१०२॥

1408 [३]प्राप्ताया किसलयपाणिनोपकण्ठं
कस्याश्चित्कुसुमरजोभिरासजद्भिः ।
आलीव द्रुतमलिखल्लता कपोले
निर्धौतां श्रमसलिलेन पत्रवल्लीम् ॥१०३॥

---

१. B अवष्टब्धः सन् (footnotes) ।
२. B मम्लुषीं for गम्लुषी । C मम्लुषे for गम्लुषीं ।
३. C श्यामायाः for प्राप्तायाः ।

1409　सर्वर्तुग्रथितमनोरमश्रियोऽद्रा
　　वुन्निद्रस्तवकभृतो यथाविशेषम् ।
　भृङ्गेभ्यो भृशतरमस्वदन्त वल्ल्यो
　　भावानां भवति कुतः प्रकर्षनिष्ठा ॥१०४॥

1410　आकृष्यांशुकममलं नवोढवध्वा-
　　स्तदृष्टिप्रकटकुतूहलस्य भर्तुः ।
　विस्पष्टं व्रततिरदर्शयन्मुखेन्दुं
　　भव्यानां भवति यतस्ततोऽर्थसिद्धिः ॥१०५॥

1411　पात्रत्वं मनसिजलासकस्य याता
　　नर्तित्वा कुसुमविहारनाटकान्ते ।
　विष्कम्भस्थितिविशदप्रवेशमार्गा-
　　न्निर्जग्मुः कमलदृशोऽथ काननाङ्कात् ॥१०६॥

1412　[1]स्पष्टेहामृगडिमवीथिकं सदङ्क-
　　व्यायोगं तदनु विहृत्य निःसहाङ्ग्यः ।
　अत्याक्षुः स्फुटदशरूपकव्यवस्थं
　　मन्थाद्रेर्मणितटकाननं रमण्यः[2] ॥१०७॥

1413　विभ्राणं दिशि दिशि [3]रासकाङ्कलीलां
　　नानान्वानुगतविशालतालशोभम् ।
　सुन्दर्यः कथमपि तद्वनं जहुस्ता-
　　रम्याः स्युः क इव हि सुत्यजाः पदार्थाः ॥१०८॥

1414　प्रेयोभिः सममवगाह्य काननोर्वी
　　देहार्धस्थितिरिव शूलिशैलपुत्र्योः[4] ।
　रामाभिर्न रुचिरसैकताभिरामा
　　नालोकि त्रिदशतरङ्गिणी विदूरात् ॥१०९॥

---

१. B शोभनेऽङ्के उत्सङ्गे वीनां पक्षिणां आयोगः संबन्धो यत्र तत् ईहामृगाणां शूकराणां डिमो युद्धं यत्र तादृशी वीथिकाः पन्थानो यत्रेति ।

२. B नलिन्यः ।　　३. B मृगविशेषचिह्नशोभां ।　　४. C शैलपुत्र्याः ।

1415 कूजन्तीं मधुकरमण्डलीं पुरस्ता-
दालोक्य स्तबकितकोविदारलीनाम् ।
प्रौढत्वाद्दयिततमेन कापि सार्धं
प्रस्तावं व्यतनुत कोविदा रतीनाम् ॥११०॥

1416 भाति स्म वल्लभकरग्रथितं नितम्ब-
बिम्बावलम्बि रशनागुणदाम पौष्पम् ।
चारुभ्रुवः प्रचुरसौरभलोभलीन-
शिञ्जानहारिमधुपावलिकिङ्किणीकम् ॥१११॥

1417 उत्तंसभागकुचबन्धुरकन्धराग्र-
काञ्चीगुणास्पदविचित्रविनिद्रपुष्पाः ।
रेजुः कुशेशयदृशः कुसुमायुधस्य
सुग्रीष्मकेण रचिता इव हेतिशालाः ॥११२॥

1418 अथ विपिनविहारक्लान्तिजन्माननेन्दु-
ग्रहगणपरिवारस्वेदबिन्दूद्रुमानाम् ।
श्रियमिव परिमाष्टुं श्वाससौगन्ध्यलुभ्य-
न्मधुकरकुलपक्षैर्वीज्यमानाः सलीलम् ॥११३॥

1419 कल्लोलानिल-लोल-दोलन-[1]ललच्चामीकराम्भोरुहां
रत्नक्षोदपरागसैकतभुवं मंक्तुं सुरस्यन्दिनीम् ।
प्रेयोभिः सममुच्छ्वसत्कुचभरक्लाम्यन्नितम्बस्थली-
लीलामन्थरचारचारुचरणन्यासा नताङ्ग्यो ययुः ॥११४॥
युगलकम्

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवे राजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
महाकाव्ये कुसुमावचयवर्णनम् नाम सप्तदशः सर्गः ।

---

१. B विकसत् (footnotes) ।

## अष्टादशः सर्गः

1420 कुर्वन्नङ्गक्लान्तिमर्कप्रकाशो
गच्छन्तीभिर्मन्युनेवाङ्गनाभिः ।
फुल्लन्नीलाम्भोजसंवादि-
नेत्रच्छायापातैः खण्डशोऽथ व्यधायि ॥१॥

1421 आशाप्लाविस्वच्छलावण्यकान्ति-
ज्योत्स्नापूरापह्नुतान्यप्यशेषम् ।
छत्राण्युच्चैर्धार्यमाणानि तासां
हैमैः पाण्डून्यन्वमीयन्त दण्डैः ॥२॥

1422 तिर्यग्ज्योत्स्नापाण्डुभासा घृतेन[1]
च्छत्रेणान्या राजति स्म व्रजन्ती ।
वक्त्रेन्दोः स्विन्मण्डलाग्रेण चञ्च-
न्मुक्तादामोद्दामतारागणेन ॥३॥

1423 रम्याभोगैर्गौरतामुद्वहद्भिः
प्रौढस्येन्दोर्बिम्बशोभामवाप्तैः ।
छत्रैश्छायातानि सीमन्तिनीनां
वक्त्रैश्चाराच्चारुनेत्राभिरामैः ॥४॥

1424 [2]वंहीगस्त्वं नाकनारीजनस्य
छत्रच्छायामण्डलैरीयवद्भिः ।
तद्वक्त्रेन्दुग्रासगर्धावतीर्णै-
राकीर्णोर्वी सैंहिकेयैरिवासीत् ॥५॥

---

१. B पाण्डुभासावृतेन for पाण्डुभासा घृतेन ।
२. B वंहीयस्त्वं for वंहीगस्त्वं ।

1425 मार्गोद्धूता धूलयो धूसरत्वं
मासां काषुः स्वच्छलावण्यकान्तेः ।
वल्योऽधुन्वन्वातनुन्नानितीव-
स्त्रीणामारात्[1]वल्लकीचामरौघान् ॥६॥

1426 काञ्चीनद्धैः स्थूलबिम्बैर्नितम्बैः
सम्बाधत्वं वर्त्मनः कुर्वतीभिः ।
मन्दं जग्मेऽथाङ्गलेखानिषण्ण-
स्फूर्जत्कन्दर्पातिभारादिवाभिः ॥७॥

1427 प्रत्युप्तानां हेमपादङ्गदेषु
स्त्रीणां भागे पद्मरागोपलानाम् ।
[2]अभ्रष्टोऽपि छायया निह्नुतः स-
न्नाप व्यक्तिं यावकीयो रसौघः ॥८॥

1428 अग्रे यान्तं काननालोकनेच्छा
व्यग्रत्वात्वं वीक्षितो नो मयेति ।
व्याजादाख्यद्वल्लभं पीवराभ्या-
माहत्यारात्कापि पृष्ठे स्तनाभ्याम् ॥९॥

1429 गच्छन्तीनां नूपुरक्वाणकृष्टा-
हंसश्रेण्यो धृष्टमग्रे सरन्त्यः ।
गण्डाभोगैरप्यहासयन्त भास्व-
त्पाण्डुच्छायाह्रासभावेन[3] तासाम् ॥१०॥

1430 स्पष्टागस्कं जीवितेशं विधूय
प्रत्यासन्नं मन्युनाग्रे व्रजन्तीम् ।
आलीवाराद्बन्धशैथिल्यहेतोः
काञ्चीं काचित्पादपातिन्यरौत्सीत् ॥११॥

---

१. B मञ्जरी (footnotes) । २. C प्रभ्रष्टोऽपि for अभ्रष्टोऽपि ।
३. A, B ह्रासभासेन तासाम् for ह्रासभावेन तासाम् ।

1431 सीमन्तिन्याः संसरन्त्याः [1]सलीलं
घर्मन्यारात्पीनतुङ्गस्तनाग्रात् ।
प्रालम्बेन छिन्नसूत्रेण पेते
योग्यः पातः सर्वथा निर्गुणानाम् ॥१२॥

1432 या पादानामुज्ज्वला श्रीरमीषा-
मम्भोजानां सा कुतोऽभ्येति मुग्धाः ।
मञ्जीरौघो मञ्जुना शिञ्जितेन
प्रीत्येतीव व्याजहाराथ हंसान् ॥१३॥

1433 लक्ष्म्याधारैर्भङ्गुरापाङ्गभृङ्ग-
श्रेणिच्छायाशारिताशावकाशैः ।
अम्लायद्भिर्विभ्रमाम्भोजखण्डै-
रम्भोरूढैरापि मार्गे विकासः ॥१४॥

1434 उल्लङ्घ्याथ स्पष्टताम्बूलवल्ली-
जालाश्लिष्यत्केसरान् सानुमार्गान् ।
हंसव्रातासेवितस्वर्णपद्म-
च्छायामापुः स्यन्दिनीमिन्दुवक्त्राः ॥१५॥

1435 शान्तेः शश्वत्सज्जलाभां निषद्यां
पुण्यां लोके वीचिभङ्गप्रगल्भाम् ।
प्रत्यासीदत्पुष्करावर्तकौघां
प्राप्तां कल्पापायवेलाविलासम् ॥१६॥

1436 निद्रामुद्रारेचित-[2]स्वर्णपद्मां
पद्मच्छायाशीतलस्वच्छतोयाम् ।
तोयोद्गच्छद्वीचिविक्षिप्तहंसां
हंसश्रेणीशारितोच्चान[3]तीराम् ॥१७॥

---

१. B, C सहेलं for सलीलम् । २. B त्यक्त (footnotes) ।
३. C शारितोद्भानुनीराम् for शारितोच्चाननीराम् ।

1437 संसर्पन्त्याः मंक्तुमेत्याधिरोधः
सीमन्तिन्याः निर्जितान्वीक्ष्य गत्या ।
[1]वल्गद्वीचिक्षोभभिन्नं तदाम्भो
मुक्तास्थत्वेनैव हंसान्निरास्थत् ॥१८॥

1438 आयान्तीनां निर्मलाम्भः कणौघ-
व्याजालक्ष्यस्वच्छमुक्ताफलार्घम् ।
सत्कारायैवाब्जिनीपत्रपात्रं
मन्दाकिन्या सन्दधे सुन्दरीणाम् ॥१९॥

1439 काचित्तीरोत्सङ्गसंस्था मिमंक्षुः
सर्वाङ्गीणस्वच्छलावण्यकान्तिः ।
अत्यौत्सुक्यप्रेरितेनानुरागा-
दभ्युत्थायालिङ्गितेवाम्भसासीत् ॥२०॥

1440 स्पर्शेनाङ्गान्यासु निर्वापयन्त्यः
स्वच्छच्छायालोकनेत्राभिरामाः ।
रामास्तस्मिन् स्निग्धवैदूर्यनीले
व्योम्नीवान्नुष्णांशुभासो निपेतुः ॥२१॥

1441 तीरोत्सङ्गात्तुङ्गतामादधाना-
दुभ्रश्यन्तीनामाशु सीमन्तिनीनाम् ।
अम्भोभागे निर्झरिण्या गुरुत्वा-
त्तासां पेते पीवरैः प्राङ्नितम्बैः ॥२२॥

1442 भ्रश्यन्माल्या विश्लथत्केशहस्ता
त्रुट्यत्तारस्फारहारावलीका ।
प्रावर्तिष्टाकृष्टसंभोगलक्ष्मी-
रम्भोरूणां मज्जनारम्भलीला ॥२३॥

---

१. A, B वीचिक्षोभिभिन्नं for वीचिक्षोभभिन्नम् ।

1443 आयान्तीनां तीरहंसीनिनादा-
[1]स्तासां जिग्ये मेखलाभिर्यकाभिः[2]।
आक्रम्यान्तर्मत्सरेणेव सिन्धो-
र्मूकावस्थास्ता व्यधात्क्षुभ्यदम्भः ॥२४॥

1444 बद्धत्रासा रत्नसोपानपट्ट-
क्षोभोद्गच्छल्लोलकल्लोलमम्भः।
आलम्ब्यैकावातरत् कान्तहस्तं
पीडागाढं तत्सपत्न्याश्च चेतः ॥२५॥

1445 शीतालुत्वादप्यनिच्छुर्निमंक्तुं
काचित्तोयं चित्तनाथानुरोधात्।
रोधः सीम्नो निम्नगाया जगाहे
किं तत्प्रेम्णा कार्यते यन्न लोकः ॥२६॥

1446 सासूयान्तः काचिदङ्गेऽन्यनारी-
गात्राल्लग्नं वल्लभस्यांगरागम्।
क्रीडाव्याजाच्छृङ्गकाम्भः प्रहारै-
रुन्मार्ष्टि स्म स्मेरवक्त्राम्बुजश्रीः ॥२७॥

1447 मार्दङ्गीभिस्ताललीलाभिरामं
हस्ताम्भोजैराहतेऽम्भस्यमन्दम्।
भ्रूनर्तक्यो [3]वेल्लितव्याजनृत्त-
[4]व्याक्षेपेण प्रेयसो जह्रुरारात् ॥२८॥

---

१. A, C तेषां जिग्ये for तासां जिग्ये।
२. B मेखलाभिश्च याभिः for मेखलाभिर्यकाभिः।
C मेखलाकिङ्किणीभिः for मेखलाभिर्यकाभिः।
३. B वलिगत for वेल्लित।
४. B, C व्यापारेण for व्याक्षेपेण।

1448 [1]सप्रासङ्गा सिन्दुवारप्रसून-
स्रग्वैदग्ध्यीं बिभ्रती सुन्दरीणाम् ।
वल्गद्वीचि व्यालविश्लिष्टवेल्ल-
न्निर्मोकश्रीर्व्यद्युतत्फेनपंक्तिः ॥२९॥

1449 आमग्नानां वीचिपारिप्लवोर्मि-
भ्राम्यन्मीनोन्मेषिचक्षुस्तदम्भः ।
विभ्रद्वृत्तिं कौतुकेनेव तासा-
माङ्गीं शोभामङ्गनानामपश्यत् ॥३०॥

1450 सिक्ताम्भोभिः कापि दूरात्सपत्नी-
नामग्राहं दाहसंवेगमापत् ।
शान्तिं भेजेऽनुक्षितापीतरा स्वां
संज्ञां श्रुत्वा कीर्तितां वल्लभेन ॥३१॥

1451 स्त्रीवक्षोजस्फालनोत्था नदन्तः
पातुं पद्मे घूर्मयः षट्पदानाम् ।
किञ्जल्कालीं नो ददुः किं विधत्ता
मुद्वृत्तैर्वा [2]सङ्गतोऽन्यज्जलौघः ॥३२॥

1452 मङ्क्त्वा प्रेयानीयिवानम्भसोऽन्त-
र्यत्पश्यन्त्यां रोषरूक्षं सपत्न्याम् ।
आशिश्लेष स्मेरवक्त्रां स्त्रियं तत्
साफल्यं सा तत्प्रसादस्य मेने ॥३३॥

1453 सादृश्यं यैः कल्प्यते स्त्रीमुखानां
फुल्लाम्भोजैस्तेऽसमीचीनबोधाः ।
इत्यालोच्येवान्तरं तच्छ्रियोऽभू-
द्वीचिव्रातः स्फीतफेनस्मितश्रीः ॥३४॥

---

१. B सदैर्घ्या for सप्रासङ्गा ।

२. B संगतोऽनुज्जलोघः for संगतोऽन्यज्जलोघः ।

1454　दूरादेव स्त्रीमुखौपम्यलक्ष्मीं
　　यत्संप्राप्ता यूयमेतावदस्तु ।
ह्रीहेतुर्वोऽभ्यर्णतेऽतीव भृङ्गै-
　　राशिक्षानैरभ्यधीयन्त पद्माः ॥३५॥

1455　वीक्ष्य भ्रष्टं कर्णपूरीकृतं सत्-
　　लीलावत्याः [1]फुल्लनीलारविन्दम् ।
मन्दाकिन्यां कीर्णमर्णः कणौघैः
　　सोदर्यत्वेनेव पद्मं व्यरोदीत् ॥३६॥

1456　उत्तंसादावुत्पलान्यङ्गनानां
　　यान्यासंस्तान्यूर्मिजालानि [2]जह्नुः ।
तस्थावम्भोरूढमब्जं तथैव
　　[3]स्यात्साध्यः को बद्धमूलो जलानाम् ॥३७॥

1457　आरोप्य त्वामङ्गनैषाधिकर्णं
　　नूनं नेत्रच्छाययाधः करोति ।
इत्यम्भोजं वीचिहस्तैस्तनूज-
　　स्नेहेनेवापाहरत् क्षुभ्यदम्भः ॥३८॥

1458　संसर्गेणावाप्तमम्भोऽतिभूमिं[4]
　　कर्णारूढान्युत्पलान्यङ्गनानाम् ।
उद्गच्छद्भिर्नर्मणेवोर्मिहस्तै-
　　र्हृत्वा दूरं फेनहासं व्यतानीत् ॥३९॥

1459　रोमाञ्चालीमञ्चितां कम्पमूर्वोः
　　शीतव्याजात् सीत्कृतं चाधितोयम् ।
काचित्प्रेयः कामरोगोत्थमग्रे
　　प्रत्यग्रोढा स्पष्टमह्नोष्ट सख्याः ॥४०॥

---

१. B, C फुल्लसीलारविन्दम् for फुल्लनीलारविन्दम् ।　२. C omits जह्नुः ।
३. B विजेयः (foootnotes) ।　४. B स्नेहं for भूमिम् ।

1460 वीचिक्षोभाविर्भवत् संभ्रमत्वा-
त्कान्तं काचित् सस्वजे जातसौख्या ।
प्रायेणेत्थं श्रेयसे विक्रियापि
प्रादुर्भूता कल्पते कोमलानाम्[1] ॥४१॥

1461 रोधोहंसस्वानलक्ष्मीं व्यजेष्ट
स्पष्टं यस्त्रीमेखलानां निनादः ।
विच्छिन्नोऽसौ सज्जलौघैरितीव
स्रोतस्विन्या फेनहासो वितेने ॥४२॥

1462 कल्लोलौघैर्घट्टितस्येन्दुगौरी-
हंसव्रातस्येव देहच्छविश्रीः ।
भ्रष्टा रेजे कामिनीनां कुचाग्र-
क्षोभोद्भूता फेनफालिः[2] स्फुरन्ती ॥४३॥

1463 लोलेनोच्चैः पाटलावृन्तभासा
दीर्घेणोर्मिव्रातसंपिण्डितेन ।
वेणीदण्डेनाप्यते स्माङ्गनायाः
पातालोत्थव्यालभोगानुकारः ॥४४॥

1464 रोमाञ्चौघं बिभ्रती शीततोय-
स्पर्शेनेव प्रेयसाभ्येत्य दूरात् ।
व्यात्युक्षीभिर्निर्जितान्यात्तहासं
पर्यष्वञ्जिव्यञ्जितप्रेम सुभ्रूः ॥४५॥

1465 आदायैका पद्मनालाग्रसूत्रं
रुग्णैरम्भः क्रीडयाग्रे विकीर्णैः ।
मुक्ताजालैः कर्तुमैहिष्ट हारं
कस्य स्याद्वा मौग्ध्यभाजो विवेकः ॥४६॥

---

१. B, C कज्जलानां for कोमलानाम् । २. B खण्डिका (footnotes) ।

1466　क्रीडामर्दात्सुभ्रुवो रत्नकम्बो-
　　भंग्नस्याच्छा कोटिरक्लिष्टकान्तिः ।
प्रभ्रश्यन्ती तोयराशेरधस्ता-
　　त्तारामार्गादिन्दुलेखेव रेजे ॥४७॥

1467　पक्ष्मश्रेणीपत्त्रशोभाभिराम-
　　प्रेङ्खल्लीला[1]लुङ्ख्तिापाङ्गपुङ्खाः ।
ताभिर्मुक्ता दृष्टिबाणास्तदानीं
　　[2]निःसारङ्गां चक्रिरे काननोर्वीम् ॥४८॥

1468　सार्धं स्त्रीणां वल्लभैर्मज्जतीनां
　　उद्वृत्तत्वाद्भज्यमानाः स्तनाग्रैः ।
रोधोहंसव्रातमासुस्तरङ्गाः
　　निःसामर्थ्यै शक्तताहो जडानाम् ॥४९॥

1469　श्च्योतल्लावण्यामृतं निर्भरत्वा-
　　दूर्मिव्रातैर्गाढमापीय भूयः ।
अभ्युद्वेमे घूर्णमानैरिवासाम्
　　संक्षोभाविर्भावफेनच्छलेन ॥५०॥

1470　स्वच्छच्छाये बिम्बितं गण्डभागे
　　बिम्बोकिन्याः फुल्लनीलारविन्दम् ।
सेवार्थीवालक्ष्यतोपान्तवर्ति-
　　प्रत्याहर्तुं कान्तिसर्वस्वमक्ष्णः ॥५१॥

1471　लब्ध्वा नाभीमण्डलान्तः प्रवेशं
　　कुर्वल्लीलास्फालनं स्त्रीस्तनेषु ।
कल्लोलौघोऽ[3]मानिवात्मन्ययासी-
　　[4]त्तोषावेशादुद्धुरीभूय रोधः ॥५२॥

---

१. B स्पष्ट (footnotes) ।　　२. B लज्जयानिर्गतमृगां (footnotes) ।
३. C omits the letter मा ।　　४. C रोमावेशा for तोषावेशा ।

1472 धौतेऽप्यक्ष्णोरञ्जने वीचिभङ्गै-
नैसर्गिक्या हानिरासीन्न लक्ष्म्याः ।
येनारब्धं यन्न तत्र व्यपेते
तस्या भावाज्जायतेऽतिप्रसङ्गः ॥५३॥

1473 प्रत्यासन्ने वीचिभङ्गे मुहूर्तं
बिम्बायाता काप्यकाशिष्ट धृष्टम् ।
उत्कीर्णोच्चैः स्फाटिकस्तम्भभित्तौ
स्पष्टाकारा पुत्रिकेव स्फुरन्ती ॥५४॥

1474 लेखाः सीता बिभ्रती मध्यभाजः
सुभ्रूरन्या कामकेदारभूमिः ।
आप्यायिष्ट प्रेयसो हस्तपद्म-
क्षिप्तैरम्भःशीकरैः सिक्तमूर्तिः ॥५५॥

1475 श्च्योतत्पादालक्तकाम्भस्तरङ्ग-
व्यासङ्गेनाबद्धरागाङ्घ्रिवक्त्राः ।
रोधोलेखावर्तिनो धार्तराष्ट्रा-
स्तासामग्रे राजहंसा इवासन् ॥५६॥

1476 कल्लोलौघाभ्याहतेभ्यस्तदानीं
तद्गात्रेभ्यश्च्योतता चन्दनेन ।
नीतं लावण्यामृतनेव गौरीं
छायामासीदम्बु सन्दिग्धफेनम् ॥५७॥

1477 विस्रस्तः सन् कौतुकेनाग्रभाञ्जि
व्यालोलाग्रः कामिनीकेशहस्तः ।
विस्तारत्वं वीचिजालेन नीतः
पद्मानीवाजीगणन्निर्झरिण्याः ॥५८॥

1478　व्यात्युक्षीच्छाप्रेरितेनाम्भसारा-
त्सिक्ता काचित्प्रेयसा न प्रतीपम् ।
प्रागल्भिष्टाहन्तुमेनं[1] नवोढा-
ह्रीर्वैयात्यं[2] हन्ति लज्जाघनानाम्[3] ॥५९॥

1479　स्थूलोच्छ्वासा निर्भरं वादयन्ती-
गाढोत्कम्पोच्चैस्तरां दन्तवीणाम्[4] ।
शीतार्ता नु प्राप्तकामज्वरा नु
भ्रेजे रोमाञ्चाश्चिताङ्गी नतभ्रूः ॥६०॥

1480　स्पष्टप्रेङ्खत्पक्ष्मशोभाभिरामैः
नेत्रैः स्त्रीणां दिक्षु कान्तिं किरद्भिः ।
फुल्लन्नीलाम्भोरुहैश्च स्रवन्त्याः-
संघर्षेण व्यावहासीव[5] तेने ॥६१॥

1481　अस्पर्धिष्टाम्भोरुहं यत्तरुण्या
वक्त्रेणाराच्छायया जीयमानम् ।
तत्संवव्रे निर्झरिण्या तदानीं
फेनव्रातैर्व्रीडयेवोन्मिषद्भिः ॥६२॥

1482　अभ्राजिष्ट प्रेरितो मूर्ध्नि भर्तुः
सीमन्तिन्या मज्जनारम्भनाट्ये ।
कम्पोद्रेकान्निर्गलत्तोयशेषः
फेनव्रातः पाण्डुपुष्पाञ्जलिश्रीः ॥६३॥

---

१. C हर्तुमन्या नवोढा ।　　२. B धृष्टतां ।　　३. C दधानाम् ।
४. B सशब्ददन्तवेपथुः दन्तनिर्मिता च वीणा ।
५. A, B, C व्यावहारीव तेने for व्यावहासीव तेने ।

1483　विच्छिन्नानां तारहारावलीनां
　　लग्नैरम्भः शीकरैरुन्मिषद्भिः[1] ।
प्रत्याजह्रे श्रीः पुरन्ध्रिस्तनेषु
　　स्वच्छैर्योगः संपदे कस्य न स्यात् ॥६४॥

1484　मा द्राक्षुर्मां भ्रष्टमन्यानि भीरोः
　　कर्णोत्सङ्गादुत्पलान्यम्भसीति ।
ह्रीतेनेव क्वापि संचिन्त्य वीचि-
　　क्षोभाज्जग्मे कर्णपूरोत्पलेन ॥६५॥

1485　छायां बिभ्रद्वासरेण्यक्षतश्री-
　　[2]श्छातोदर्या गम्यरूपो न राहोः ।
निद्रातङ्कं पङ्कजानामकुर्वन्
　　व्यद्योतिष्टापूर्व एवाननेन्दुः ॥६६॥

1486　वक्त्रच्छायानिर्जिताम्भोजशोभं
　　रोषेणेव स्त्रीजनस्येक्षणानि ।
अम्भश्चक्रे वीचिधौताञ्जनानि
　　स्वल्पः प्रीत्यै विप्रकारोऽप्यरातौ ॥६७॥

1487　हारप्रेङ्खत्तारमुक्ताफलौघ-
　　ज्योत्स्नाजालव्याजतो निर्भरत्वात् ।
अस्यन्दिष्टेवाच्छलावण्यवृष्टिं
　　पीनोत्तुङ्गः सुन्दरीणां स्तनौघः ॥६८॥

1488　अन्यस्त्रीदृग्दाहि धौताङ्गराग-
　　स्पष्टप्रेङ्खत्पाणिजार्द्रक्षताङ्कम् ।
छातोदर्याश्छादयन्ती कुचाग्रं
　　सासूयत्वं फेनपाली चकार ॥६९॥

---

१.　B परस्परोपहासः (footnotes) ।
　　B, C शीकरैरुत्पतद्भिः for शीकरैरुन्मिषद्भिः ।　　२.　कृश (footnotes) ।

1489　निःश्वासानां सौरभादापतिष्णून्-
रोलम्बौघान्वारयन्तीः कराग्रैः ।
[1]व्यालोलाक्षी काचिदारिप्सितेव
क्रीडालोला कन्दुकक्षेपवृत्तिम् ॥७०॥

1490　प्रत्यासन्नां काञ्चिदम्भोजनालै-
रालोक्यैव प्रेयसा हन्यमानाम् ।
बिभ्रत्यन्या [2]वक्त्रमाबद्धकोपा-
ताम्रच्छायं विव्यथेऽनाहतापि ॥७१॥

1491　संग्रथ्यादात्काञ्चनाम्भोजमालां
यामुद्वोढा रागभाजो रमण्याः ।
प्लोषं चक्रे सा निकारानलस्य
ज्वालेवान्यस्त्रीदृशोर्विस्फुरन्ती ॥७२॥

1492　किं पद्मोऽसौ लीनभृङ्गोऽङ्गनायाः
किं वा हस्तः सेन्द्रनीलोर्मिकाङ्कः ।
मत्वा तोये कान्तयोत्क्षिप्तमित्थं
संशिश्येऽन्यः पाणिमालोक्य दूरात् ॥७३॥

1493　प्रेङ्खन्नारादुत्थितो वीचिभङ्गै-
रध्यारूढः शीकरौघः स्तनाग्रम् ।
गण्डाभोगं चुम्बतिस्माङ्गनायाः
कः स्यान्नोच्चैः स्थानलाभो गुणाय ॥७४॥

1494　[3]भूतार्थैव श्रेयसी[4] नन्वभिख्याः
कोऽर्थोमीभिश्चिन्तयेऽतीव तासाम् ।
ओष्ठादक्ष्णोर्यावकं कज्जलौघं
तोयं निन्ये चन्दनं च स्तनाग्रात् ॥७५॥

---

१. C व्यालोलाक्ष्यः for व्यालोलाक्षी । २. B वक्तुमारब्धकोपा for वक्त्रमाबद्धकोपा ।
३. B सहजा (footnotes) । ४. C श्रेयसे for श्रेयसी ।

1495 वीक्ष्य भ्रष्टं कर्णपूरीकृतं सत्
लीलावत्याः फुल्लनीलारविन्दम् ।
चित्रं यन्मे नापदेषेति तोषा-
न्नृत्तारम्भीवाब्जभूमौ चकम्पे ॥७६॥

1496 सीमन्तिन्या निष्पतन्ती मुखेन्दोः
पातुं लावण्यामृतस्येव दृष्टिम् ।
निर्भिन्नं सत्कैरवं वीचिभङ्गै-
र्व्यादादारादादरादाननाग्रम् ॥७७॥

1497 रुग्णोन्निद्राम्भोजखण्डस्तदानीं
मन्दाकिन्याः क्षोभमापादयन्तीः ।
सानुस्वारैर्निस्वनैर्भृङ्गचक्रं
संभ्रम्येव भ्राम्यदग्रे न्यषेधीत् ॥७८॥

1498 वीचिव्राताभ्याहतः कुण्डलाग्र-
स्पष्टाघातक्वाणरम्य रमण्याः ।
अस्रंसिष्ट स्वाश्रयात् कर्णपूरः
पात्यन्ते नो के जलौघैः सुवृत्ताः ॥७९॥

1499 [1]या पर्यासे योषितां चन्दनाम्भः
प्रालेयौघेनाभिपत्य स्रवन्त्याम् ।
नेत्राण्यारात् सैव रक्तारविन्द-
च्छायासाम्यात् पाटलान्याललम्बे ॥८०॥

1500 प्रभ्रष्टः सन् कर्णपूरस्तदानीं
धामात्मीयं सिन्धुतोयाविलश्रीः ।
भूयो नाध्यारोप्यते स्माङ्गनाभिः
प्रत्यापत्तिर्भ्रंशभाजां दुरापा ॥८१॥

---

१. A, B पर्यासि या ।

1501　लीलाम्भोजातपक्ष्मधूलिः पिशङ्गी
　　नो तन्वङ्ग्या मन्मथं नादिदीपत् ।
चन्द्रोत्तंसस्येव नेत्रात्तृतीया
　　दृग्निज्वालाभ्युत्थिता विस्फुरन्ती ॥८२।

1502　वीचिक्षोभादुज्जिहानं मुहूर्तं
　　बिम्बौष्ठीनां बौद्बुदं चक्रवालम् ।
पेक्षिष्टारात् वक्त्रचन्द्रानुसारि
　　ज्योतिश्चक्रच्छायमच्छं युवौघः ॥८३॥

1503　हारैः प्राप्ताः स्पष्टमुक्ताफलस्रक्
　　छायैः शोभां कुङ्कमाम्भः पिशङ्गैः ।
ताः पद्मिन्याः पत्त्रपालीं वसाना
　　लीलामूहुः शाबरीणां वधूनाम् ॥८४॥

1504　निर्जित्यापि च्छायया लोचनाना-
　　मम्भोजौघं तस्थुषीस्तास्तदानीम् ।
मूढो लोकः पङ्कजाक्षीरवोचत्
　　दुर्लङ्घ्याहो रूढरूपा प्रतीतिः ॥८५॥

1505　व्यक्तं नेत्रच्छायया जीयमानं
　　लज्जावेशात् दृष्टिमार्गं जिहासत् ।
मन्दाकिन्यामाहतं वीचिभङ्गै-
　　रस्पन्दिष्टेन्दीवरं सुन्दरीणाम् ॥८६॥

1506　वीचिक्षोभादुत्थितः फेनपुञ्जो
　　विष्वग्व्याप्तव्यायतश्रोणिबिम्बः ।
सीमन्तिन्या न्यस्यमानो मुहूर्तं
　　शोभां भेजे पाण्डुचण्डातकस्य ॥८७॥

1507 प्रभ्रष्टानामंशुकानां तदानीं
फेनव्रातैर्वीचिभङ्गच्छटोत्थैः ।
लग्नैराराात् स्त्रीजनस्य स्तनेषु
प्रापि स्थान्यादेशसंबन्धिलक्ष्मीः ॥८८॥

1508 प्राप्ताभिख्या मुक्तशैथिल्यभाग्भि-
र्वेणीदण्डैर्द्राघिमाणं दधानैः ।
क्षेपोत्क्षेपायस्तपादारविन्द-
व्राताघातप्रेङ्खदूर्मिप्रतानम् ॥८९॥

1509 स्थूलाभोगैः कृष्यमाणा नितम्बै-
स्तोयस्यान्तस्ताः स्तनैश्चातितुङ्गैः ।
कृच्छ्रात् क्लाम्यत् मध्यदोःकन्दलीकाः
संप्लुत्याारात् वल्लभानालिलिङ्गुः ॥९०॥ युगलकम्

1510 बिम्बोष्ठीनां विभ्रमा हारिणोऽथ
द्रागन्योन्यासक्तहस्तारविन्दाः ।
निर्यान्तीनां जाह्नवीरङ्गभूमेः
पिण्डीबन्धा नर्तकीनामिवासन् ॥९१॥

1511 भाति स्म कान्तमिव कापि रसाद्दिदृक्षु-
राविष्कृतेक्षणचतुष्टयमाननेन्दुम् ।
निर्धौतपत्त्ररचनाच्छकपोलभाग-
भित्तिद्वयप्रतिमितोत्पलमुद्वहन्ती ॥९२॥

1512 कल्लोलदोलनदलत्कनकारविन्द-
पक्ष्मावलीलुलितसान्द्रपरागपिङ्गम् ।
स्त्रीणां पयः प्रियकरैरभिनुद्यमान-
मन्त्रः कृतास्थमपि रञ्जयति स्म चेतः ॥९३॥

1513 तासां कुचस्थलविमर्दविजर्जराम्बु-
वीचिच्छटाशिशिरशीकरविन्दुकीर्णे ।
स्पर्शादलक्ष्यत कुशेशयिनीपलाश-
गर्भे विशीर्णनवमौक्तिकहारपङ्क्तिः ॥९४॥

1514 प्रत्यग्रमज्जनरसार्द्रतया गुरूणि
लालाटभित्तिलुठितान्यलकानि तासाम् ।
आघ्रातुमुत्पलमिवामलगण्डभित्ति-
विस्रागतं विकचकोमलपत्त्रमीषुः ॥९५॥

1515 अन्तः प्रविश्य मकरन्दरसं पिपासु-
र्नारीकुचस्य नवगौररुचोऽङ्घ्रिपातैः ।
निद्रालुकाञ्चनकुशेशयशङ्कितचेताः
श्लिष्यन्मुहुर्मधुकरी मुखमुल्लिलेख ॥९६॥

1516 लावण्यकान्तिसलिलप्लुतमाप लक्ष्मी-
मालक्ष्यकान्तकरजक्षतराजि नार्याः ।
वप्तुं वपुर्ललितविभ्रमबीजमुष्टि-
माकृष्टसीरमिव कामकृषीवलेन ॥९७॥

1517 सिन्धोरथोभयकराग्रनिपीडितोद-
भारार्द्रकुन्तलकलापमनोहराभिः ।
निर्धौतकज्जलजलौघकदर्थिताच्छ-
लावण्यकान्तिपरिपाण्डुरगण्डभाभिः ॥९८॥

1518 प्रेङ्खन्नखांशु निकुरम्बविडम्ब्यमान-
तोयोत्करस्त्रु तिकरस्थगितस्तनीभिः ।
गाढोच्छ्वसज्जघनलग्नजलच्छटार्द्र-
तन्वंशुकाहितगुरूद्धरणक्रमाभिः ॥९९॥

1519 वीचिच्छटापटलपङ्किलरत्नपट्ट-
सोपानपद्धतिपरिस्खलनाकुलाभिः ।
तत्कालसंभ्रमनिलीनमनोज्ञदत्त-
हस्तावलम्बमुदतारि नितम्बिनीभिः ॥१००॥ तिलकम्

1520 जघनफलकास्फालक्षुभ्यत् तरङ्गततेः क्रमात्
त्रिदशसरितो रत्नक्षोदस्थलींपुलिनाश्रयाः ।
न्यवसत सितान्युत्तीर्याथ स्त्रियो वसनानि ता
जलधरकुलानीव स्वच्छाः शरद्दिवसश्रियः ॥१०१॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो महाकवे राजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये जलक्रीडावर्णनम् नामाष्टादशः सर्गः ।

---

## एकोनविंशः सर्गः

1521 [1]स्पष्टोच्छ्वसत्किरणकेसरसूर्यबिम्ब-
विस्तीर्णकर्णिकमथो दिवसारविन्दम् ।
श्लिष्टाष्टदिग्दलकलाप[2]मुखावतार-
बद्धान्धकार मधुपावलि सञ्चुकोच ॥१॥

1522 अस्ताद्रिगोचरचरं रुरुचे चिराय
गोरोचनारुचिमरीचिविरोचनस्य ।
बिम्बं दिनान्तपवनाहतपुण्डरीक-
पर्यस्तपक्ष्मरजसेव विलङ्घ्यमानम् ॥२॥

1523 सिन्धौ कुसुम्भकुसुमस्तवकाभिताम्र[3]-
माजिह्मकान्ति तपनः प्रतिबिम्बितं सत् ।
संपश्यति स्म निजमण्डलमस्तकूट-
संघट्टभग्नरथकाञ्चनचक्रशङ्की[4] ॥३॥

1524 [5]प्राप्ते क्रमाद्दलनपुञ्जितदिग्विभाग-
विक्षिप्त दीप्तिकुसुमक्षपितायितत्वम्[6] ।
अस्ताद्रिमूर्धनि बबन्ध सरोजबन्धु-
बन्धूकशेखरमथो दिवसावधिश्रीः ॥४॥

1525 अस्तावलम्बिरविबिम्बतयोदयाद्रि-
चूडोन्मिषत्सकलचन्द्रतया च सायम् ।
संध्याप्रनृत्तहरवाद्यगृहीत कांस्य-
तालद्वयेव समलक्ष्यत नाकलक्ष्मीः ॥५॥

---

१. A, B start with ओं । २. B प्रदोष (footnotes) ।
३. B, C स्तबकाभिराम । ४. C चक्रशङ्के ।
५. C प्राप्तं क्रमात् । ६. B क्षपितापतित्वं for क्षपितायितत्वम् ।

1526 प्रत्यग्ररागघटनेन्दुकलाकिरीट-
शैलाधिराजसुतयोरिव गाढसंपत् ।
संध्याहिताथ दिवसक्षपयोः शरीर-
भागद्वयाविरलवृत्तिरजृम्भत श्रीः ॥६॥

1527 संध्याप्रवृत्तिरुधिरारुणसान्द्रधातु-
धूलिच्छटा[1]कपिशिताम्बरदिग्विभागा ।
अध्यम्बुराशि गिरिपंक्तिरिव न्यपप्त-
दभ्यापतत्कुलिशताकुलिता दिनश्रीः ॥७॥

1528 प्रेङ्खत्कुलायकलनोन्मुखपत्त्रिचक्र-
कोलाहलाकुल-विशङ्कटदिग्लताग्रः ।
तिग्मांशुपातविशदाकृतिदूरदृश्य-
च्छायापयोधिनिशमम्बरपादपोऽभूत् ॥८॥

1529 प्राप्तेऽस्तशैलशिखरस्थितिमुष्णभासि
लोकानुसारसरलत्वजुषो नलिन्यः ।
संध्यां ससंभ्रममवन्दिषतेव साय-
माताम्रकोरककराञ्जलिजालबन्धाः ॥९॥

1530 संध्यातपारुणितपार्श्वतटावलम्बि-
बिम्बैकदेशजलदः क्षणमस्तशैलः ।
[2]वज्रव्रणाननगलत्क्षतजोक्षितार्ध-
विच्छिन्नविश्लथपतत्त्र इवाबभासे ॥१०॥

1531 अभ्येयुषः परिणतिं समयक्रमेण
सायं नभःशिरसि वासरपङ्कजस्य ।
त्रस्तांशुपक्ष्मरविमण्डलबीजकोष-
चक्रं बभार परिधूसरपीवरत्वम् ॥११॥

---

१. B कपिशिताखिल for कपिशिताम्बर ।
२. A वज्रव्रणातनुगलत् for वज्रव्रणाननगलत् ।

1532 तुङ्गावकाशरचितस्थितिमातपस्य
शेषं समुत्सुकतयेव दिदृक्षमाणाः।
उत्कन्धरा इव सरोजभुवो बभूवु-
रुन्नम्रकोरककरालितपुण्डरीकाः ॥१२॥

1533 आकृष्यमाणमिव पश्चिमदिग्विभाग-
बद्धास्पदद्विरददीर्घकरार्गलेन।
ताराच्छबुद्बुदकरालनभस्तटाक-
रक्ताम्बुजं तपनबिम्बमलम्बतारात् ॥१३॥

1534 पर्यस्तमस्तगिरि सानुनि सान्द्रसांध्य-
रागारुणच्छवि सहस्रमरीचिबिम्बम्।
[1]कन्दर्पकोपित हरस्फुरितानलार्चि-
रूर्ध्वाक्षितारकतिरोहितभेदमासीत् ॥१४॥

1535 आविर्भवत्तिमिरसंवलानानुविद्ध-
संध्यांशुधूसरविपाटलमुष्णधाम्नः।
भाति स्म निःश्वसितधूमशिखावकीर्ण-
विस्तीर्णशेषफणरत्नविडम्बि बिम्बम् ॥१५॥

1536 मुक्ताम्बरस्तिमिरतस्करलुप्यमान-
लक्ष्मीमलीमसरुचिः प्रकटोपघातः।
अह्नाय वासरहितस्फुटलोहितश्री-
रुष्णांशुरस्तगिरिकाननमभ्यविक्षत् ॥१६॥

1537 सिन्दूरराजिषु घनं स्फुरदश्ववर्ण-
भेदेष्वलक्ष्यमधिमन्दिरभित्तिचित्रम्।
भाति स्म निर्जितजरच्छुकघोणशोण-
रागोल्बणच्छवि रवेः करचक्रवालम् ॥१७॥

---

१. A, C कन्द्रर्पकोपित।

1538 आभासताम्बरतलं दिवसावसान-
रागारुणच्छवि विडम्बयदम्बुसिन्धोः ।
भङ्गाभियुक्तमधुकैटभहस्ति[1] धूत-
वैकुण्ठनाभिनलिनोदरधूलिपिङ्गम् ॥१८॥

1539 अध्यूषुषः सपदि चन्द्रकिणो निवास-
यष्टिं [2]शनैर्निजभरानमिताग्रभागाम् ।
संध्यातपो नयति कर्बुरतां स्वकण्ठ-
मुल्लासितस्फुरितचन्द्रकचक्रवालः[3] ॥१९॥

1540 उत्तानकूर्मकरणिस्फुरदुष्णरश्मि-
बिम्बा शनैः सरिदिव स्फुटपत्त्रिनादा ।
अस्तावनीध्रशिखरान्निपपात धातु-
पङ्कारुणातपजला जलधौ दिनश्रीः ॥२०॥

1541 विच्छायतामभजत क्षणदावतार-
सान्द्रीभवत्तिमिरधूसरितारुणश्रीः ।
धूमच्छटाभिहतविद्रुमदण्डखण्ड-
संवादितां दिनकरस्य दधत्करौघः ॥२१॥

1542 तुङ्गात्मतासदृशमध्यवजद् घोऽत्र-
शैलस्य तस्य निधनं व्रजतु प्रतिष्ठा ।
आलम्बितोऽम्बरतलात्पतता करौघैः
सिन्धौ न यः सह सहस्ररुचा न्यपप्तत् ॥२२॥

1543 तेजः प्रकर्षपरिहानिमुपेयिवांस-
मारात्प्रदोषतमसाभिबुभूष्यमाणम् ।
अम्भोनिधौ तपनमन्वपतद्दिनश्री-
रेकात्मतां विदधतामिदमेव युक्तम् ॥२३॥

---

१. C हस्त for हस्ति । २. C तनूरुह भर ।
३. C....चक्रवालैः for चक्रवालः ।

1544 आरूढमार्दवमुपाम्बुधिलम्बमान-
विम्बः क्रमेण निपतन् रविरन्तरिक्षात् ।
उल्लासिततत्सलिलतुङ्गतरङ्गभङ्ग-
[1]संसर्गजातजडिमेव बभार तेजः ॥२४॥

1545 विस्रंसमानकपिलांशुशिखासहस्र-
[2]विष्पन्दिसान्द्ररुधिरस्नुति सूर्यबिम्बम् ।
छिन्नं जवाज्जलनिधौ निपपात काल-
खड्गेन विस्फुरितमह्न इवोत्तमाङ्गम् ॥२५॥

1546 गौरीव [3]गौरकरशेखरकण्ठपीठ-
बद्धास्पदातनुविषच्छविलङ्घितश्रीः ।
श्यामीबभूव जलधौ कलधौतकाष-
पिङ्गच्छविस्तिमिरसंवलिताथ सन्ध्या ॥२६॥

1547 अन्तर्विविक्षुरिव भानुमतो रथाश्व-
पङ्क्तिः स्फुरत्सलिलसैरिभरोषदृष्टा ।
श्वासानिलैः सपदि जर्जरयाञ्चकार
सिन्धोर्जलं विधुतफेनिलवीचिचक्रम् ॥२७॥

1548 उच्चिक्षिपेऽवतरतामधिसिन्धु पद्म-
बन्धोरवाङ्मुखतया स्थगितेक्षणश्रीः ।
सेवारसादिव तरङ्गसमीरणेन
कर्णप्रकीर्णकशिखानिकरो हरीणाम् ॥२८॥

1549 प्रेयांसमर्कमिव दृष्टिपथव्यतीत-
मन्तर्विकल्परचिताकृतिमीहमानाः ।
प्रेम्णा विलोकयितुमस्खलितेन चक्रु-
रम्भोजनेत्रविनिर्मीलनमम्बुजिन्यः ॥२९॥

---

१. C समङ्गजातजडिमेव । २. C विष्यन्दि । ३. B चन्द्र (footnotes) ।

1550 श्यामावतारसमयेन मलीमसत्व-
मासेदुषा स्थगिततिग्ममरीचिरोचिः ।
सल्लोहकान्तमणिनेव तदान्धकार-
कालायसं प्रसभमाचकृषे पुरस्तात् ॥३०॥

1551 तावत्क्रमेण दयितार्कवियोगजन्म-
दाहज्वरव्यथितदिग्वनिताकरास्तैः ।
[1]क्ष्मामण्डलं विगलिताञ्जनबाष्पतोय-
लेशोत्करैरिव तमःशकलैः पुपूरे ॥३१॥

1552 क्लान्तं दिवाकरकरालकराभिषङ्गा-
च्छायामशिश्रियदथो तिमिरं तरूणाम् ।
लीलानिषण्णविनिमीलितलोचनार्ध-
रोमन्थमन्थरसमूरचमूरचक्रम् ॥३२॥

1553 छायापथैस्तिमिरसंवलनानुबन्ध-
[2]निर्व्यामदीर्घविकटैः क्षितिपीठपृष्ठम् ।
[3]शारीबभूव पतिते तरणौ कलिन्द-
कन्याविवेष्टनविभिन्नजलौघकल्पैः[4] ॥३३॥

1554 मन्दानिलाहति तरङ्गितकेसराग्र-
रक्तारविन्दमकरन्दसपीतलग्नाः ।
भग्नेऽहनि भ्रमरसंहतयः प्रसस्रु-
रेष्यन्निशातिमिरपत्तिचमूयमानाः ॥३४॥

1555 अस्ताद्रिपार्श्वमुपजग्मुषि तिग्मभासि-
जानीत शीतकिरणोऽभ्युदितो न वेति ।
चारा इवाथ रजनी-तिमिर-प्रयुक्ता-
श्चेरुश्चिरं चरणभूमिषु चञ्चरीकाः ॥३५॥

---

१. B, C क्ष्मामण्डलीविगलिताञ्जन । २. B निर्व्यासदीर्घविकटैः ।
३. A, B श्यामीबभूव for शारीबभूव । ४. C जलौघकल्पम् ।

1556 प्राप्तेऽस्तशैलशिखरं तरणावबद्ध-
सान्द्रानुबन्धतमसोऽप्यभवन् वनान्ताः ।
सञ्चारिषट्चरणचक्रगृहीतदान-
[1]गण्डूषगण्डगुरुगन्धगजान्धकाराः ॥३६॥

1557 भास्वच्छविर्भुवनवेश्मगतः शशाम
यावत्पतङ्गपतनाद्दिवस-प्रदीपः ।
तावत्कुतोऽप्युदभवन्नयनोपघात-
दक्षं मषीमलमलीमसमन्धकारम् ॥३७॥

1558 नक्तं निपेतुषि तुषारविपक्षभासि[2]
शूरैरिवासमसमीकरणप्रगल्भैः ।
[3]द्यौर्लोहजालमलिनैस्तरसा तमोभि-
रातस्तरे दिशि दिशि स्तिमितानुबन्धैः[4] ॥३८॥

1559 देशान्तर-प्रवसन-प्रवणोष्णरश्मि-
चिन्तानुबन्धवश-जैह्मयजुषो नलिन्याः ।
आसीन्निकोचभरजिह्मितपक्ष्ममाल-
मामीलितभ्रमरतारकमब्जनेत्रम् ॥३९॥

1560 आलम्बनैशजलबिन्दुघनान्धकार-
जालेन कज्जलरुचा जनलोचनानाम् ।
रूपावलोकनसुखं प्रसभादहारि
किं वा शुभं प्रभवतो मलिनात्मनः स्यात् ॥४०॥

1561 आक्रान्ततारक-निरर्गलजृम्भमाण-
तारावतीतिमिरविप्लवधूसरान्धाः ।
अक्लीबिषुभुवनरूपनिरूपणेऽथ
संमीलिता इव दृशः सकला जनानाम् ॥४१॥

---

१. A, B गण्डूषगन्ध for गण्डूषगण्ड । २. B सूर्ये (footnotes) ।
३. B लोहजालः कबन्धोऽपि । ४. C स्तिमितानुबन्धः ।

1562 छायां क्रमेण सकलामथ काननानाम्
सूर्यांशुशेषशबलां समतां नयद्भिः ।
संहारमेघमलिनैरतिमेदुरत्व-
मासाद्य संपपृचिरे ककुभस्तमोभिः ॥४२॥

1563 [2]व्यक्तोपकारमधुना स्थगितासु दिक्षु
प्रेयोगृहं [3]मुखमलक्षितमेव यामः ।
धम्मिल्लबन्धरुचिरैरभिसारिकाभिः
प्रेम्णा तमश्चिरमतीव शिरोभिरूहे ॥४३॥

1564 दंष्ट्राकरालपृथुपोत्रतलावलग्न[4]-
कासारपङ्ककलुषाः सलिलादुदस्थुः ।
ग्रस्तार्धचन्द्रशकला बहलान्धकार-
कूटा इवाथ [5]वनसूकरयूथनाथाः ॥४४॥

1565 आबद्धपद्ममुकुलाञ्जलि याचितो मा-
मुत्सृज्य संप्रति ततः कथमंशुमाली ।
अन्तर्निरुद्धमधुप-क्वणितैरितीव
स्वप्नायते स्म नलिनी निशि लब्धनिद्रा ॥४५॥

1566 विस्रस्तकेसरविभावितबीजकोष-
मूलश्लथप्रविरलान्तरपाण्डुपत्त्रम् ।
कृच्छ्रेण बद्धमुकुलं सरलोरुदीर्घ-
नालं करालमभवज्जरठारविन्दम् ॥४६॥

---

१. C आक्लान्त (a wrong reading)। २. B व्यक्तोपकारममुना।
३. B सुखमलक्षितमेव। ४. B पोत्रमुखावलग्न।
५. C वरसूकर for वनसूकर।

1567　श्लिष्यद्दलाग्रघटितक्षणदोदबिन्दु-
　　विष्यन्दकर्दमितकेसरधूलिजालम् ।
गम्भीरकुक्षिकुहरक्रमपुञ्ज्यमान-
　　सौगन्ध्यबन्धमरविन्दवनं निदद्रौ ॥४७॥

1568　श्यामामुखे शशिकरैर्दलितं[1] न ताव-
　　दीषत्प्रसारितपलाशपुटं द्विरेफैः ।
[2]इत्यञ्जसा न विचकास न सञ्चुकोच
　　पर्याकुलं कुमुदकाननचक्रवालम् ॥४८॥

1569　[3]सङ्कोचसंहृतदलस्फुटलक्ष्यमाण-
　　दूरान्तरालनवकुड्मलचक्रवालम् ।
शीतांशुपादपरिमर्शघृणामिवाप्य
　　लक्ष्मीर्मुमोच शनकैः कमलाकराङ्कम् ॥४९॥

1570　प्रेङ्खत्करालपरिपाण्डुपलाशपङ्क्ति-
　　सन्धानराजिशबलीकृतपृष्ठभागम् ।
भाति स्म दृश्यमुकुलाननरन्ध्रपीत-
　　ज्योत्स्नाविनिर्गमनमार्गमिवारविन्दम् ॥५०॥

1571　कृच्छ्रेण मीलनमवाप विशीर्णजीर्ण-
　　पर्णोत्करश्लथविलम्बितपक्ष्ममालम् ।
विस्तारिधूसरहरच्छविबीजकोष-
　　चक्रं पुराणकमलं कमलाकराङ्के ॥५१॥

1572　[4]प्रातः समागमसुखानुभवं विधाय
　　चेतस्यनीयत निशा रभसेन कोकैः ।
कृच्छ्राद्वियोगचकितैस्तु दिनं व्यलङ्घि
　　दुःखे सुखं भवति साधु सुखे न दुःखम् ॥५२॥

---

१. C शशिकरैश्चलितं ।　२. B स्पष्टं (footnotes) ।
३. C omits first half of the 49th श्लोक ।　४. B प्रातः समागमसुखानुभवे ।

1573 अभ्युन्मिषद्विकटकुड्मलपुण्डरीक-
गर्भोपरुद्धमधुपक्वणितानुबन्धैः ।
अन्तर्मुखस्खलित-घोषमिवेन्दुपाद-
भग्नातपक्लममशेरत पङ्कजिन्यः ॥५३॥

1574 तावन्निरर्गल[1]मुदैदमलात्ममूर्ति-
कल्माषिताम्बरतलं[2] ग्रहचक्रवालम् ।
सूर्येन्दुमण्डलसमुद्गकवाटकोष-
विश्लेषकीर्ण-नव-रत्नकणानुकारि ॥५४॥

1575 भास्वन्निशीथवनपुष्पकदम्बकेन
नाकाम्बुराशिजलबुद्बुदजालकेन ।
ब्रह्माण्डशुक्तिपुटमौक्तिकमण्डलेन
भूषां निशोडुनिकरेण [3]परामधासीत् ॥५५॥

1576 नीहारगौरशिशिरांशुमरीचिराशि-
निर्भिन्ननैश[4]निबिरीसतमःप्रबन्धम् ।
आलक्ष्यत स्फुरिततारकचक्रवाल-
शारीकृतं विततविभ्रममन्तरिक्षम् ॥५६॥

1577 लक्ष्मीं दधन्ति शबलीकृतदिग्विभाग-
रश्मिच्छटापटलभिन्नतमांस्यमन्दम् ।
ज्योतींषि [5]रात्रिरतिमांसलभांस्यसूत
रत्नानि कल्पतरुवल्लिरिवोल्लसन्ती ॥५७॥

---

१. B उदितः (footnotes) । २. C''''तताग्रहचक्रवालम् ।
३. B, C परामयासीत् । ४. B निबिडीस for निबिरीस ।
५. B रात्रिरतिमांसल ।

1578 [1]निष्पिष्टशैलविनिघृष्टयुगादिघृष्टि-
दंष्ट्राग्रकोटिपरिमण्डलसंनिवेशम् ।
क्षीरोदशीकरकणच्छवि शारिताभ्रं
व्यभ्राजताथ नभसि ग्रहचक्रवालम् ॥५८॥

1579 उत्सृज्य हर्म्यशिखराणि निवासयष्टि-
कोटिप्रतिष्ठचरणैर्गृहकेकिसार्थैः ।
उद्धूतचन्द्रकवितानवितन्यमान-
छायाच्छलेन ववृषे घनमन्धकारम् ॥५९॥

1580 कालागुरुप्रकरक्लृप्तविचित्रपत्र-
भङ्गे पयोधरतटे कवरीषु लीनम् ।
[2]व्युत्थानमुत्पलदृशां शितिरत्नशार-
भूषास्पदेषु तिमिरं विदधाविवेन्दोः ॥६०॥

1581 क्षोणीनिरोकजठरेषु विशङ्कटेषु
नैशं तमः स्तिमिततामभितस्तथापत् ।
विस्पष्टमैहिषत पल्वलपङ्कमोह-
मुग्धा यथा महिषसंहतयोऽवगाढुम् ॥६१॥

1582 संध्यातपच्छुरणपिङ्गमरुद्विधूत-
विस्तारिकेसरशिखैर्वनमध्यभाग्भिः ।
सुप्तोत्थितैर्विगलितेऽहनि पुण्डरीकै-
रेकैरजृम्भि रभसादपरैर्निदद्रे ॥६२॥

1583 विस्तीर्णदन्तपरिघस्फुरदंशुराशि-
सीमन्त्यमानतिमिरेषु मदाम्बु पातुम् ।
लीनं कटेषु कृतदृष्टिविघातहृष्टि-
धृष्टं शिलीमुखगणैर्वनकुञ्जराणाम् ॥६३॥

---

१. C omits 58th श्लोक । २. B निजपदान्निष्कासनं (footnotes) ।

1584 निष्ठ्यूतकज्जलकरालशिखण्डखण्डै-
रुत्सङ्गवृत्तिमधिगम्य निकेतनानाम् ।
स्नेहानुबन्धिभिरदीपि दिनावसान-
सन्ध्यार्भकैरिव सरागकरैः प्रदीपैः ॥६४॥

1585 नेत्रैरिवाञ्जनपरागकणावकीर्ण-
तूलीविनिर्गमनमार्गनिबद्धरेखैः ।
वातायनैरगुरुधूपज-धूमलेखा-
निर्याणलिप्तशिखरैर्विबभुर्गृहाणि ॥६५॥

1586 निर्भिद्यमानमपि जालगवाक्षमार्ग-
निर्यत्प्रदीपरुचिराजिभिरन्धकारम् ।
सान्द्रीबभूव भवनोदरदह्यमान-
कालागुरूत्थघनधूमशिखावलीभिः ॥६६॥

1587 शिखिविशिखचिते पुरान्तलग्ने
स्मररिपुचाप इवार्करश्मिचक्रे ।
असुरकुलमिवाथ चक्रनाम्नां
हृदयमदह्यत विप्रयोगदीनम् ॥६७॥

1588 प्रथममधिधरित्रि छिन्ननिःशेषमूलं
तदनु शिखरिशृङ्गव्यङ्ग्यरागानुबन्धम् ।
प्लुतमथ घनवीथ्यां रत्नराशिं विवक्षु-
स्तरणिरपचितश्रीरातपं सञ्जहार ॥६८॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवे राजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
महाकाव्ये दिवसावसानवर्णनम् नाम एकोनविंशः सर्गः ।

---

## विंशः सर्गः

1589 लक्ष्मीं दधावुदयशैलतिरोहितेन्दु-
द्राघिष्ठदीधितिशिखाभुजमञ्जरीका ।
गौरच्छविः सुरपतेरथ दिक्क्रमेण
नीलप्रभं तिमिरकञ्चुकमुत्क्षिपन्ती ॥१॥

1590 उत्पित्सति स्म दिवमब्धिसरोवगाह-
ग्रस्तोच्छ्वसत्तिमिरशेवलवल्लरीका ।
बेलाविकीर्ण-मणिशुक्तिशतच्छलेन
पोतैरिव व्यनुसृता शशिमूर्तिहंसी ॥२॥

1591 गर्भीकृतौर्वविषमानलतापदाह-
मूर्च्छानुबन्धशमनोपकृतेन तेन ।
तत्कालतालतरुतुङ्गतरोर्मिणेन्दु-
[1]रन्वायि दूरमिव सस्पृहमब्धिनारात् ॥३॥

1592 बिभ्रत्स लक्ष्म जलधेस्तलभागलग्न-
पङ्कच्छटाङ्कमिव बिम्बमनुष्णरश्मिः ।
श्यामा कलिन्दतनयाजलबुद्बुदाच्छ-
तारागणस्तबकितं वियदारुरुक्षत् ॥४॥

1593 विच्छायतामकृत यो मम भर्तुरिन्दो-
रंशुच्छटाभिरुदयन्नवधूय बिम्बम् ।
पश्यामि भानुमुदधौ पतितं तमद्रि-
शृङ्गेष्वितीव नवचन्द्रिकयाध्यरोहि ॥५॥

---

१. अनुगत (footnotes) ।

1594 तावत्तिरस्कृतकुशेशयखण्डकान्ति-
निःस्पन्दतारकनिशामुखवर्तिनीन्दोः ।
विस्पष्टपाटलिम[1] शैलशिखाश्रिचुम्बि
संध्या सुधाविसरवर्षि लिलेह[2] बिम्बम् ॥६॥

1595 आक्षिप्ततामरसकाननचक्रवाल-
भाभिः क्रमादुदयशैलतिरोहितश्रीः ।
इन्दुर्निशातिमिरमण्डलबाध्यमान-
माशिश्वसज्जगदिवोर्ध्वमुखैर्मयूखैः ॥७॥

1596 भाति स्म [3]पक्ष्मकुटिलोदयशैलशृङ्ग-
भागास्पदाभिनवकुङ्कुमपङ्कगौरी ।
अभ्यापतन्मदनकूबरिचक्रशीर्ण-
माणिक्यनेमिशकलाकृतिरिन्दुलेखा ॥८॥

1597 रेजेतरामुदयशैल[4]शिखाश्रिमूल-
लग्नाथ भग्नतिमिरा कुटिला कलेन्दोः ।
रक्तारुणा नमुचिकण्ठविवर्तमान-
फेनच्छटावलयविभ्रममावहन्ती ॥९॥

1598 विस्पष्टलक्ष्म शबलीकृतमध्यभाग-
बिम्बार्धतामधिपतिर्दधदोषधीनाम् ।
विष्यन्दिदानजलशीकरशारिताम्र-
मातङ्ककर्णशिखराकृतिराविरासीत् ॥१०॥

1599 अप्सर्गविभ्रमभृति स्तिमितेन्धकार-
राशौ दिशः स्थगयति स्फुटपङ्कपीने ।
उत्तिष्ठदुच्छ्वसितकुङ्कुमकोषगौर-
मालक्ष्यते स्म कनककाण्डमिवेन्दुबिम्बम् ॥११॥

---

१. A, B, C विस्पष्टपाटलित २. B चुम्बितवती (footnotes) ।
३. B नेत्ररोमवत् वक्त्रा (footnotes) । ४. A, C शिखाग्रमूल for शिखाश्रिमूल ।

1600　व्यक्तावचूलकलुषोदरमिन्दुबिम्ब-
　　मावद्धरागमुदयाद्रिगतं व्यराजत् ।
संवादिनिर्गतविरिञ्चिविभिन्नमध्य-
　　वैकुण्ठनाभिनलिनोत्थितबीजकोषम् ॥१२॥

1601　[1]आबद्धरागमुदगादुदयाद्रिमूर्ध्नि
　　नैसर्गिकीं धवलतामपहाय बिम्बम् ।
निर्धूतकेसरपरागविलङ्घ्यमान-
　　निद्राविमुक्तकुमुदच्छदगौरमिन्दोः ॥१३॥

1602　चेतोहरस्फुरितकेसरदन्तहास-
　　मुद्वीक्षिताः कुमुदिनीभिरधिप्रदोषम् ।
रेजुः कदर्थनभयादरविन्दवृन्द-
　　कान्त्याश्रिता इव नवोदितचन्द्रपादाः ॥१४॥

1603　विस्पष्टचिह्नमुदयाद्रिविटङ्ककूट[2]-
　　संघट्टजर्जरतयेव सरन्ध्रमिन्दोः ।
बिम्बं क्रमेण विगलन्नवसान्ध्यराग-
　　रक्तच्छटं नभसि पाण्डुरतामयासीत् ॥१५॥

1604　निद्राविमुक्तनवतिन्दुकपाण्डुभासि-
　　बिम्बे प्रसुप्तमृषि नाकनदी [3]हिमांशोः ।
छाया श्रियं हरिणलक्ष्ममयी बभार
　　निर्यत्कलिन्दतनयाजलवेणिकाश्रीः ॥१६॥

1605　प्रत्यग्रपक्ष्ममलिनोदरकान्ति बिम्ब-
　　मिन्दुर्बभार नवकुन्ददलावदातम् ।
वक्षो हलीव दृढधेनुकपश्चिमार्ध-
　　पेङ्खत्खुराग्रशिखरोल्लिखितव्रणाङ्कम् ॥१७॥

---

१. A, B, C आवद्धरागमचकादुदयाद्रि for आवद्धरागमुदगादुदयाद्रि ।
२. B उन्नतप्रदेश (footnotes) ।　३. A, C हिमांशुः ।

1606 लक्ष्मच्छलोपहितपीवरपङ्कपिण्ड-
कल्माषमध्यमतनुं प्रतिबिम्बमिन्दोः ।
लक्ष्मीं दधावधिजलं घटमानहारि-
रूपं [1]भ्रमत्सरसि कालकुलालचक्रम् ॥१८॥

1607 कल्माषितं [2]शशिकलङ्कलवेन मध्य-
भागे बभार परिपाण्डुरमिन्दुबिम्बम् ।
विन्यस्तमेचकगजाजिनपल्लवाग्र-
चन्द्रावतंसशुचिभस्मसितांसलीलाम् ॥१९॥

1608 भाति स्म मध्यघटितास्पदकालकूट-
सच्छायलाञ्छनरुचिः परिणाहिबिम्बः ।
क्षीराम्बुराशिरिव मन्दरशैलमूल-
लीलाविवृत्तिपरिमण्डलितः शशाङ्कः ॥२०॥

1609 विस्पष्टचिह्नमचकादुदयाद्रिलग्न-
मालेख्यभित्तिफलकं स्मरदेवतायाः ।
तद्विभ्रमाहितमषीमलपङ्कवर्ति-
विन्यस्तपत्रमकराङ्कमिवेन्दुबिम्बम् ॥२१॥

1610 अभ्राजतानिलविलोलितसांध्यराग-
पिङ्गीकृताभ्रशिखरक्षणलब्धसंस्थम् ।
शीतांशुबिम्बमुरगाशननीयमान-
माणिक्यभासुरसुधाकलशाभिरामम् ॥२२॥

1611 प्रत्यग्रपक्षघटनेन निशावतार-
रामेषुणा सपदि वासरक्रौञ्चकुञ्जे ।
निर्दारिते स्फुटमयुक्छदनच्छदाच्छा-
निर्गच्छति स्म शशिदीधितिहंसपङ्क्तिः ॥२३॥

---

१. A, C क्रमात्सरसि । २. B शशकलङ्कलवेन for शशिकलङ्कलवेन ।

1612 और्वाग्निहेतिपरिमर्शविलीनमध्य-
भागो नु सिन्धुजठरादुदितः सलक्ष्मा ।
[1]कर्पूरचूर्णरुचिचारुमरीचिकुर्च-
निर्धौतदिक्कमरुचत् कठिनेतरार्चिः ॥२४॥

1613 उन्निद्रकुन्दधवलग्रहचक्रवाल-
पुष्पोत्करा भुवनकाननसीम्नि रेजे ।
श्यामालता हरिणलक्ष्मभिषेण चन्द्र-
बिम्बालवालवलयादिव निष्पतन्ती ॥२५॥

1614 संवादमेष्यति ममागुरुपङ्कदिग्ध-
पत्रावलीशबलगण्डपुरन्ध्रिवक्त्रैः ।
कल्माषितं किममुनापि न विभ्रमेत-
दुत्प्रेक्ष्य लाञ्छनमितीव बभार चन्द्रः ॥२६॥

1615 आश्रित्य शीतरुचिना सकलेन जाति-
सामान्यमुत्थितवता नयनान्महर्षेः ।
आनन्दभारभरमन्थरता व्यधायि
तत्पक्षपातरभसादिव लोचनानाम् ॥२७॥

1616 शिञ्जारवं सपदि मन्त्रमुदीरयन् स्वं
[2]नक्तंमुखे विघटमानपलाशयन्त्रम् ।
[3]संरंभ्य साधक इवात्तरसोपभोग-
मभ्याविशत् [4]कुमुदगर्भगृहं द्विरेफः ॥२८॥

1617 आपाण्डुदीधितिशिखानिकरावकीर्ण-
विस्तीर्णबिम्बपरिणाहतया हिमांशुः ।
उन्मूलिताम्बरसरिज्जललग्नपद्म-
नालावकीर्णसुरकुञ्जरविभ्रमोऽभूत् ॥२९॥

---

१. C कर्पूरचूर्णरुचिरोरमरीचिकुर्च…। २. B निशामुखे (footnotes) ।
३. C संरभ्य । ४. C कुसुमगर्भगृहं for कुमुदगर्भगृहं ।

1618 क्षीरोदवीचिधवलैर्निजबिम्बभाग्भि[1]-
रभ्राजताभ्रशरणैः किरणैः शशाङ्कः ।
सङ्कोचनाभयमिवार्थयितुं सरोज-
खण्डस्य कोमलमृणालशतैर्विलग्नैः ॥३०॥

1619 लावण्यकान्तिपरिमृष्टकलङ्कलेख-
मप्राप्तपत्त्ररचनासु विलासिनीनाम् ।
छायागतं नवमधूकविपाण्डुरासु
गण्डस्थलीष्वधिकमश्वितदिन्दुबिम्बम् ॥३१॥

1620 ज्योत्स्नातुषारनिकरस्थगितान्तरिक्ष-
दिङ्मण्डलः शिशिरकाल इवामृतांशुः ।
आलिङ्गनान्यशिथिलानि दिशन् प्रियाणा-
मक्लेशयन्नवकुशेशयखण्डकान्तिम् ॥३२॥

1621 भित्त्वा विपाञ्जनमिवाशु दृशां[2] विघात-
हेतुं निशातिमिरवृन्दमनिन्द्यरूपैः ।
सन्दानितच्छदपुटानि करैरमन्द-
मिन्दोरखिन्दत[3] कुलान्यरविन्दिनीनाम् ॥३३॥

1622 [4]सैरेयकस्तबकनीलमथान्धकार-
मुत्सृज्य भोगमलिनाम्बरनिर्विशेषम् ।
संविव्युराशु ककुभः कलधौतगौर-
मिन्दुप्रभापटलकल्पलतादुकूलम् ॥३४॥

---

१. C ...... निजबिम्बभाभि for निजबिम्बभाग्भि ।

२. A, B, C दृशोविघात for दृशोर्विघात । ३. B खेदितानि (footnotes) ।

४. C मैरीयक for सैरेयक ।

1623　अभ्युद्गते शशिनि शङ्खदलावदात-
　　प्रेङ्खन्मयूखखचिताम्बरदिग्विभागे ।
　तापिञ्छनीलमभवद्विवरानुसारि-
　　वैभावरं विगलदम्भ इवान्धकारम् ॥३५॥

1624　भानोरसंनिधिवशात्तिमिरेण सार्ध-
　　मह्नाय सङ्गतिमवाप्य कुमुद्वतीभिः ।
　चन्द्रोदये कुमुदकुक्षिगतास्तदीय-
　　गर्भद्विषः सुखमसाविषत द्विरेफाः ॥३६॥

1625　शिश्रीषुभिस्तनुविकासदलत्पलाश-
　　कोषाः शनैः कुमुदिनीर्नभसि भ्रमद्भिः ।
　चन्द्रांशुजर्जरितशेषघनानुबन्ध-
　　नैशान्धकारसदृशैरतमि द्विरेफैः ॥३७॥

1626　लोकान्तराश्रयिणि घर्मघृणौ क्रमेण
　　यैरुत्थितैर्भुवनमूर्णुनुवे तमोभिः ।
　तानीन्दुरेव विचकार करोत्करेण
　　साधारणत्वरहिता महतां हि शक्तिः ॥३८॥

1627　हित्वा शनैः शितिमिव त्वचमन्धकार-
　　च्छायां निशोडुपटलस्फटिकाक्षसूत्रा ।
　गौरी बभूव रुचिरागुरुपङ्कपत्त्र-
　　सच्छायलक्ष्म शशिमण्डलगण्डभित्तिः ॥३९॥

1628　स्पर्शोत्सवं विदधतीभिरमन्दराग-
　　मङ्गानि मन्मथवतामिव सुन्दरीभिः ।
　जह्लादिरे कुमुदिनीविपिनानि गाढ-
　　मालिङ्गितानि [1]शशिदीधितिमण्डलीभिः ॥४०॥

---

१. A, B, C read शशिमण्डलदीधितीभिः for शशिदीधितिमण्डलीभिः । (either way the sense is same) ।

1629 उत्सारितस्य तरणेः किरणच्छटाभि-
रिन्दोः करैश्च तमशोऽभिहतस्य नक्तम् ।
विस्पष्टचारुरचनाः सुरसुन्दरीणा-
मालम्बनत्वमगमन्निव केशहस्ताः ॥४१॥

1630 भिन्दन् सुधानिवहवाहिभिरन्धकार-
मंशूत्करैरुदजिहीति च शीतिरश्मिः ।
सङ्कोचदुःखमहरच्च कुमुद्वतीनां
सन्तः परार्थघटने न हि विघ्ननिघ्नाः ॥४२॥

1631 [1]आलुङ्खिता दलितशङ्खविपाण्डुराभि-
रिन्दोः प्रभाभिरथ कैरवपद्मखण्डाः ।
उन्निद्रबद्धदलकुड्मलनीडलीन[2]
दीनद्विरेफपटलाः परितो बभूवुः ॥४३॥

1632 सौधेषु शीतकिरणस्य करच्छटाभि-
रापाण्डुराभिरभितः प्रतिफेलुषीभिः ।
पर्यस्तसान्द्रभुजतार्यतमःप्रबन्ध-
मन्धं जगत्पुनरयुज्यत चक्षुषारात् ॥४४॥

1633 आदाय दग्धबहलागुरुधूपधूम-
पङ्कं कपोलफलकेषु सुराङ्गनानाम् ।
पत्राङ्गुलीरिव रसार्द्रतया विधित्सो-
रिन्दोर्गवाक्षविवरेषु करा निपेतुः ॥४५॥

1634 लक्ष्मीं दधुः शिशिररश्मिरुचो गवाक्ष-
[3]निर्यूहनिर्यदसितागुरुधूमशाराः ।
पर्यस्तमन्दरविघूर्णितदुग्धसिन्धु-
वीचिच्छटा इव परिप्लुतकालकूटाः ॥४६॥

---

१. C आलञ्जिता for आलुङ्खिता, B स्पष्टाः (footnotes) ।

२. C नीडनील for नीडलीन । ३. B निर्यूहो निर्गतो दाहविशेषः (footnotes) ।

1635　स्रस्तान्धकारवसनां रजनीपुरन्ध्रि-
मालिङ्गति प्रियासुधास्रुति[1] दिक्सखीभिः ।
दूरं मृणालशकलामलतन्मयूख-
हासच्छटाञ्चितमुखीभिरिवापसस्रे ॥४७॥

1636　सङ्कोचजिह्मितकुशेशयकोशधौत-
कौशेयकोमलशशाङ्करुचोऽवकाशाः ।
रेजुर्दिशामधिनिशं विशदप्रकाशाः
काशा इवोपशरदं शमितान्धकाराः ॥४८॥

1637　सार्धं क्रमेण ककुभोऽथ कुमुद्वतीभि-
रुच्छ्वासलाभविशदस्थितिदूरदृश्याः ।
प्राप्ता विकासमचकासिषुरैन्दवीभि-
रंशुच्छटाभिरवधूतनिशान्धकाराः ॥४९॥

1638　लीलानिपीतभरमूर्च्छितकैरवीय-
खण्डच्छदच्छविरिव च्छुरिताम्बरश्रीः ।
इन्दोरुदधाव धवलः कलकण्ठकण्ठ-
कालान्धकारकलुषाः ककुभः करौघः ॥५०॥

1639　प्रत्यग्रपीतनवकैरवखण्डलक्ष्मी-
लावण्यकान्तिभिरिवातनुपाण्डिमाभिः ।
कीर्णा दिशो दलितसंतमसानुबन्ध-
मिन्दोरदीपिषत दीधितिदीपिकाभिः ॥५१॥

1640　दिक्सुन्दरीघनपयोधरभारतार-
हाराः सुधास्रुति करालमणिप्रवालाः ।
भित्त्वा शनैस्तिमिरमञ्जनपुञ्जनील-
मानञ्जुरिन्दुकिरणा जगदञ्जसारात् ॥५२॥

---

१. B चन्द्रे (footnotes) ।

1641 पौरन्दरीं दिशमपोज्झ्य विलुप्तराग-
संपत्क्षणाज्जिगमिषत्यधुना प्रतीचीम् ।
अन्या प्रसादयति निर्जितपुण्डरीक-
शोभाग्रपादपतनैः ककुभः सलीलम् ॥५३॥

1642 नैशानिलाहतिपरस्परघट्यमान-
संफुल्लकैरवतयालिकुलप्रणादैः ।
उक्त्वेति हस्ततलताडनयेव नक्तं
नक्तञ्चरश्चिरमहासि कुमुद्वतीभिः ॥५४॥ युगलकम्

1643 इन्दीवरनीरकणकण्टकिता विकीर्ण-
पर्णा ववुर्दलितपङ्कजकुड्मलाग्राः ।
शीता निशीथमरुतो निभृतद्विरेफ-
शेफालिकाकुसुमनिर्भरगन्धवाहाः ॥५५॥

1644 भाति स्म मारुतविधूतपलाशरन्ध्र-
लब्धप्रवेश-शिशिरांशुमरीचि-शाराम् ।
छायां विनेशुषि रवौ दधती तरूणां
संवीतचित्रमृगचर्मपटेव भूमिः ॥५६॥

1645 प्रत्यग्रफेनधवला नभसि प्रसस्रु-
रुल्लङ्घितोडुनिकराः शिशिरांशुभासः ।
उद्रश्मिरत्नसिकताकणचक्रवाल-
मन्दाकिनीजलतरङ्गघटायमानाः ॥५७॥

1646 प्रेङ्खत्कठोरशतपत्रपलाशमूल-
पाण्डुक्षपाकरमरीचिविलङ्घिता द्यौः ।
उत्तम्भनाकुलजगत्क्षयकालकोल-
दंष्ट्राप्रकाशधवलक्षिति विभ्रमा भूत् ॥५८॥

1647　भाति स्म संवलिततारकचक्रवाल-
चन्द्रातपच्छुरणपाण्डुरमन्तरिक्षम् ।
विभ्रज्जराजरठजिह्मगदीर्घभोग-
मुक्तस्फुरद्विकटकञ्चुकपट्टलीलाम् ॥५९॥

1648　निर्धौततारतरुणच्छवितारकौघ-
कल्माषितेन नभसा बिभरांबभूवे ।
निःशेषशोषितजलप्लवपङ्कगर्भ-
दृश्यावरुग्णबिसकन्दजलाशयश्रीः ॥६०॥

1649　जिह्मीकृताब्जनयनं श्वसनानुबन्ध-
कम्पाकुलस्थिति विपाण्डुरतां दधत्या ।
सङ्कोचमाप जरयेव कृतावमर्श-
मिन्दुत्विषा कमलकाननचक्रवालम् ॥६१॥

1650　चन्द्रप्रभामुकुलितं सलिलातिरिक्त-
नालं ससर्प कमलं निशि चक्रवाकी ।
आबिभ्रती द्दृषितपक्ष्मतनूरुहैक-
पादस्थितोन्मुखविदूरगकान्तशङ्काम् ॥६२॥

1651　आप्लाविताविनितले नवचन्द्रिकाम्बु-
पूरे निमग्नमथ [1]कैरवचक्रवालम् ।
उत्तारलग्नमिव मन्दसमीरपात-
पारिप्लवीकृतपलाशभुजं व्यराजत् ॥६३॥

1652　वैकुण्ठशङ्ख-धवलाब्जविभेदकुण्ठ-
सोत्कण्ठकैरवकरालकरोत्करेन्दुः ।
श्यामेति रात्रिरगमत् स्फुटमर्थशून्य-
पर्यायतां क्षततमः परिपाण्डुरश्रीः ॥६४॥

---

१. B, C कैरवचक्रनालम् for कैरचक्रवालम् ।

1653　पर्याप्तजृम्भणभरस्फुटनानुवन्धि-
　　पत्राङ्गुलीनिकरकैरवचारुहस्ता ।
उत्क्षिप्तषट्पदघटा[1]मुखरोमराजि-
　　रिन्दुं विलोक्य सहसा कुमुदिन्यथासीत् ॥६५॥

1654　इन्दोः करैरतनुकौसुमसौकुमार्य-
　　भाग्भिर्मनोभुव इवेषुभिराहताभिः ।
उद्गीर्णगन्धकुमुदाननमूढनैश-
　　घर्मोदबिन्दुभिरजृम्भि कुमुद्वतीभिः ॥६६॥

1655　श्च्योतत्सुधाशिशिरनिर्झरशीकरार्द्र-
　　चन्द्रांशुराशिपरिमृष्टकरालकोषाः ।
पद्माकराः सपदि सञ्चुकुचुर्निशीथ-
　　शीतार्दिता इव दलाम्बरसंवृताङ्गाः ॥६७॥

1656　प्रेयः[2]समागमसुखार्द्रपुरन्ध्रिनिर्य-
　　दानन्दबाष्पकणिकाशिशिरो नभस्वान् ।
बन्धक्रमाधिगततानवतारतम्य-
　　सौगन्धिकोत्थघनसौरभसंपदासीत् ॥६८॥

1657　निःशेषमेव सुरभिं मम कोषगन्ध-
　　मावान् दिनक्षयमरुन्मम मैषमोषीत् ।
इत्थं भियेव कमलं कलयाञ्चकार
　　सङ्कोचसङ्कटविशङ्कटकुड्मलत्वम् ॥६९॥

1658　स्पष्टा न या दिनकरांशुभिरह्नि वह्नि-
　　गर्भैरपि क्वचन चक्रलमुरम्बुजिन्यः ।
मम्लुस्तरां शशिकरैरपि ताः सुधार्द्रै-
　　रक्षुण्णवामचरिता बत पद्मनेत्राः ॥७०॥

---

१. B भ्रूलता ।　　२. A समागमसुखात्सपुरन्ध्रि for समागमसुखार्द्रपुरन्ध्रि ।

1659 पातुं मधून्यधिकुमुद्वति बद्धराग-
मुड्डूतपक्षति मधुव्रतमुत्पतन्तम् ।
श्लिष्यत्सरोजदलसंपुटपीडिताङ्घ्रि-
मीर्ष्यावशादिव कुशेशयिनी बबन्ध ॥७१॥

1660 साध्यं न तज्जगति यन्न कलावतोऽस्ति
चन्द्रः करैः सकलदिङ्मुखकर्णपूरैः ।
विष्यण्णवारिविसराः परितो निनाय
यच्चन्द्रकान्तदृषदोऽपि तदार्द्रभावम् ॥७२॥

1661 सङ्कोचधूसरमकारि सरोजखण्ड-
मग्रे यदस्य शशिना परिपीड्य पादैः ।
तेन स्फुरद्विकटकेसरदन्तपङ्क्ति-
तोषादिवातिविशदं कुमुदं जहास ॥७३॥

1662 संघुक्षितासमशरेण करैरवाप्त-
निद्रा सती कुमुदिनी शशिनावमृष्टा ।
हुङ्कारिणीव बुबुधे कुमुदोदरस्थ-
कूजन्मधुव्रतकुलक्वणितानुबन्धैः ॥७४॥

1663 प्रेयोंशुमालिविरहव्यसनानुबन्ध-
मूर्छानिमीलितसरोजदृशो नलिन्याः ।
न्यस्ताः सलीलमभवन्नुपरीन्दुनापि
खेदाय कोमलमरीचिमृणालदण्डाः ॥७५॥

1664 कल्लोलपीवरपयोधरपृष्ठभाग-
माकृष्य वीचिवलिभङ्गभुवं च चन्द्रः ।
आवर्तनाभिनिहिताग्रकरश्चकार
रक्ताब्जिनीं मुखनिमीलितपद्मनेत्राम् ॥७६॥

1665 पर्युच्छ्वसत्सरलकेसरकाञ्चनोत्थ-
नाराचचक्रपरिपूरितकुक्षिरन्ध्रम् ।
ईषद्विभिन्नमुकुलाननमिन्दुभाभि-
रादत्त कैरवमनङ्गनिषङ्गलीलाम् ॥७७॥

1666 ज्योत्स्नामयं यदमृतप्रभमेघमुक्त-
मम्भः पपात कुमुदच्छदशुक्तिकोषे ।
तत्स्थूललग्नरजनीजलबिन्दुजाल-
व्याजेन मौक्तिककणत्वमभिप्रपेदे ॥७८॥

1667 उद्भिन्नकण्टकभरात्पुलकानुबन्ध-
पर्याकुला कुमुदिनी मुदिता प्रदोषे ।
धूतारविन्दरुचिचन्द्रकरप्रणोद-
चक्रीभवत्कुमुदचारुकुचा चकाशे ॥७९॥

1668 पर्याप्तनिर्मलकरेण करैः सुधार्द्रैः
संभावितानि न हिमद्युतिनापि नेतुम् ।
निन्ये जलानि निशि निर्विषतामगस्त्यः
कार्ये क्वचिद्भवति कस्यचिदेव शक्तिः ॥८०॥

1669 आस्कन्द दूरमुदयं मदयस्व मन्द-
मानन्दयेन्दुवदना मदनाविदूनाः ।
क्रूरं तमः किर करैः कुरु कोरकाग्र-
भङ्गं च कैरवकुलस्य करालकान्तैः ॥८१॥

1670 चञ्च्वग्रचुम्बनविकुञ्चितकेसरासु
सञ्चारयाञ्चितदलासु च चञ्चरीकान् ।
कुन्दावदातविदलद्दलदीर्घदण्ड-
दूरोदितासु मुदितासु कुमुद्वतीषु ॥८२॥

1671 संधेहि पत्त्रपटलं पटुपुण्डरीक-
खण्डस्य मण्डय दिशः स्फुटमण्डलश्रीः ।
संक्षोभयोद्दलनदोहदलीलदोल-
कल्लोलकाण्डकलिलं सलिलञ्च सिन्धोः ॥८३॥

1672 संधुक्षय स्मरमवन्ध्यशरप्रवन्ध-
संधानबन्धुरसमाधि धनुर्धुनानम् ।
धैर्यं विधूनय वधूषु विवर्धमान-
मानोद्धुरं विधुरबन्धुविरोधिनीषु ॥८४॥

1673 पादैः प्रसादय च पानपरम्परासु
कर्पूरपांसुपटलीभिरिव प्रभाभिः ।
इत्याचरन् रुचिररोचिररोचतेन्दु-
रचैकचर्चजनलोचनचक्रवालः ॥८५॥ पञ्चभिः कुलकम्

1674 पातालान्तश्छविमिव घनां शेषभोगप्रकाशः
कण्ठच्छायामिव पशुपतेरट्टहासोऽभिनीलाम् ।
विक्षिप्याराम्भसि तमसां मण्डलीं रत्नराशे-
र्दत्तोल्लासः शशभृदमलश्रीश्च कासाञ्चकार ॥८६॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवे राजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
महाकाव्ये चन्द्रोदयवर्णनम् नाम विंशः सर्गः ।

---

## एकविंशः सर्गः

1675 [1]स्थितोऽथ [2]सौधोन्नतचन्द्रिशालिका-
तले विभुः क्लृप्तमहार्धसंस्तरे ।
इति प्रियामङ्कगतामभाषत
क्षपाकरस्य श्रियमीक्ष्य हारिणीम् ॥१॥

1676 इतोऽधुनाविष्कृतलक्ष्म लक्ष्यतां
निशाकरस्योत्थितमत्त्रिलोचनात् ।
विभाति तन्वङ्गि ! तदीयतारक-
त्विषावलीढोदरवर्त्म मण्डलम् ॥२॥

1677 विधित्सुना केलिमिवोदयश्रिता
निजप्रभाकुङ्कुमवासमुष्टिभिः ।
पराहतं पक्ष्मलमेणलक्ष्मणा
निमीलयत्यम्बुजनेत्रमब्जिनी ॥३॥

1678 स्फुटं परासेकपराङ्मुखात्मनः
[3]स्थिरा विभूतिर्विमलस्य जायते ।
स्थितं जगद्व्याप्य तथाहि तामसं
नताङ्गि ! निःशेषितमेतदिन्दुना ॥४॥

1679 असौ शशाङ्कः कुरुते समुन्नताः
कुमुद्वतीनां कुमुदस्तनावलीः ।
निजप्रभाहारलताविभूषणाः
षडङ्घ्रिकालागुरुपत्त्रभङ्गिनीः ॥५॥

---

१. A starts with ओं ।

२. A, कु सौधोन्नतचन्द्रशालिका for सोधोन्नतचन्द्रिशालिका ।

३. A, B स्थिता विभूतिः for स्थिरा विभूतिः ।

1680 [1]विगाहतोयः प्रतिमाछलादसौ
नवोऽरुणत्वं गमितोऽनु चन्द्रमाः ।
मधुच्छटाशीकरवारिवर्षिभिः
कुमुद्वतीकैरवहस्तसम्पुटैः ॥६॥

1681 दधत्यमूर्मीलितपङ्कजेक्षणाः
क्षणादवश्यायकणैः करालिताः ।
कुशेशयिन्यो दयितार्कभावना-
समुच्छलत्स्वेदजला इव श्रियम् ॥७॥

1682 निशाकृता बिम्बमुखेन पाटल-
प्रभासवं प्रत्तमसौ कुमुद्वती ।
अपावृतोत्तानितकैरवानना
चिरं नतभ्रूः पिबतीव सस्पृहम् ॥८॥

1683 विदार्य दंष्ट्राङ्कुरकोमलत्विषा
निशान्धकाराद्रिकुलं स्वलेखया ।
बिभर्त्यसावादिवराहविभ्रमं
सदा तु लक्ष्मोद्वहनेन चन्द्रमाः ॥९॥

1684 अनेन ते पूर्णकपोलभित्तिना
क एव वक्त्रेण कृशोदरि ! स्मयः ।
बिभर्ति लक्ष्मीं प्रतिमासमुत्थितं
निशाकरस्येदृशमेव मण्डलम् ॥१०॥

1685 मृणालिनीन्दोः स्पृशतः करैः क्रुधा
विवर्तयन्तीव कुशेशयाननम् ।
बिभर्ति पृष्ठागतया कृतश्रियं
द्विरेफवेणीलतयाम्बुज[2]स्तनम् ॥११॥

१. B विगाढतोयः for विगाहतोयः । २. B कुमुद (footnotes) ।

1686 स्फुटं पतन्तीं शशिचन्द्रिकाम्बुधौ
निशागमेऽपीयत शुक्तिसंपुटैः ।
कुतो नु ताभ्योम्बुदमुक्तवारिणो
विपाण्डुमुक्ताफलसंभवोऽन्यथा ॥१२॥

1687 निशाकरे केसरधूलिकुङ्कुम-
च्छटापिशङ्गाग्रकरे विशेषकम् ।
विधित्सतीव श्लथभृङ्गमण्डली-
भ्रुवा स्थितं कैरवकाननश्रिया ॥१३॥

1688 कुमुद्वती कैरवहस्तमुच्छ्वस-
द्दलाङ्गुलीकं श्रियमेति बिभ्रती ।
अवाप्तपार्श्वस्थितभृङ्गमण्डली-
कृतावनद्धासितकम्बुविभ्रमम् ॥१४॥

1689 अधिक्षपं लक्षितकामिनीमनो
मनोभवस्य [1]क्षिपतः शिलीमुखान् ।
तदीयपक्षावलिसंभृता इव
क्रमेण शीताः प्रसरन्ति मारुताः ॥१५॥

1690 शिलीमुखैः शेखरसौरभाहृतै-
र्भ्रमद्भिरेत्योपरि बद्धमण्डलम् ।
श्रियं चिकीर्षद्भिरिवाभिसारिकाः
स्वकान्तवेश्म स्थगिताः प्रयान्त्यमूः ॥१६॥

1691 व्यधायि सङ्कोच-[2]विधूसरेन्दुना
किमित्यसौ स्वादुरसापि पद्मिनी ।
[3]इतीव तां निन्दति षट्पदः स्वनैः
सदानुकूले हि जनोऽनुरज्यते ॥१७॥

---

१. A क्षपतः for क्षिपतः । २. B दूषिते (footnotes) ।
३. C इतीव तं for इतीव तां ।

1692　कुमुद्वतीनां प्रतिबिम्बितां जले
　　विजिह्मवीचिश्रुतिपाशमध्यगाम् ।
　अदः स्फुरन्मण्डलशङ्खपत्रतां
　　बिभर्ति सुश्रोणि ! मृगाङ्कमण्डलम् ॥१८॥

1693　मृणालिनीनां निबिडीकृतारुण-
　　च्छदाङ्गुलीदन्तुरचारुकोटिभिः ।
　पिनह्यतेऽम्भोरुहपादमण्डलै-
　　र्द्विरेफमालामणिनूपुरावलिः ॥१९॥

1694　कुमुद्वतीभिर्मकरन्दकुङ्कुम-
　　च्छटापिशङ्गाम्बु विपूरितोदरः ।
　सविभ्रमं कैरवशङ्खकोत्करः
　　क्षपाकरं हन्तुमिव व्युदस्यते ॥२०॥

1695　नभः समुद्रोदरफेनसंहति-
　　र्नगेन्द्रनागाधिपभूतिचर्चिका ।
　निशीथिनी कल्पलतांशुकावलि-
　　र्निशाकरस्य श्रियमेति चन्द्रिका ॥२१॥

1696　इति स्मरोद्दीपिनि चन्द्रशेखरे
　　विभुर्विवृत्ते समये स्वसंनिभे ।
　हिमाद्रिकन्यामभिधाय सादरं
　　स सांध्यवेलाविधितत्परोऽभवत् ॥२२॥

1697　अवन्दतानन्दितमानसस्तत-
　　स्तनुं स सन्ध्यामरविन्दजन्मनः ।
　मुरारिनाभीह्रदपद्मविष्टर-
　　प्रकीर्णरेणुच्छुरणादिवारुणाम् ॥२३॥

1698 अपावृतौष्ठान्तरलब्धनिर्गमै-
जर्पक्रियायां दशनांशुमण्डलैः ।
बभौ शिरश्छिद्रपथप्रवेशिभिः
सुरस्रवन्त्या इव धूर्जटिर्जलैः ॥२४॥

1699 [1]उदग्रनासाविनिविष्टचक्षुषः
पिशङ्गपक्ष्मावलिमेलनक्रमात् ।
सरोचनारेखमिवास्य वह्निम-
ल्ललाटपट्टे विदधे विलोचनम् ॥२५॥

1700 निबद्धपद्मासनपादपङ्कज-
स्फुटारुणोत्तानतलप्रवर्तितैः ।
विलुप्यमानातनुकण्ठमण्डल-
प्रभान्धकारच्छविरंशुराशिभिः ॥२६॥

1701 अवाप्तनाभिव्यतिषङ्गविस्फुर-
त्प्रभारुणोत्तानकराम्बुजद्वयः ।
स्थिरांसपीठः स समाधिगोचरं
चिराय दध्यौ किमपीन्दुशेखरः ॥२७॥ युगलकम्

1702 व्यतीतसंख्यातिगपङ्कजासन-
व्यपाश्रयाम्भोरुहबीजनिर्मितम् ।
निजाक्षसूत्रं निजमुद्रया जपन्
करान्तरेणाब्जरुचं व्यवर्तयत् ॥२८॥

1703 विलोकयन्ती गिरिराजकन्यका
तथा च तं ध्याननिमीलितेक्षणम् ।
बभार संध्यातपरागपाटला-
मिवोन्मिषत्कोपकषायितां दृशम् ॥२९॥

---

१. A तदग्र for उदग्र ।
B, C तदग्रनासाग्रनिविष्टचक्षुषः ।

1704　समन्युनिःश्वाससमीरणोष्मभिः
　　कदर्थ्यमानारुणधूसराधरा ।
द्विरेफमालाङ्कितमुग्धपल्लवां
　　वसन्तलक्ष्मीमथ सा व्यडम्बयत् ॥३०॥

1705　समाप्तसंध्याविधिरीश्वरोऽपि तां
　　विलोक्य कोपात्परिवृत्य तस्थुषीम् ।
रसार्द्रगर्भैर्बहुसान्त्वनक्रमैः
　　प्रसादयामास चिरेण सस्मितः ॥३१॥

1706　मधूपनीतं जयया निशाकर-
　　प्रभावतंसं समयज्ञया ततः ।
विनिद्रकल्पद्रुम[1]सूनसम्भवं
　　क्रमादमुं पाययते स्म सस्मितः ॥३२॥

1707　कपोलभागेन सदारुणत्विषा
　　जहार चेतः[2] शशिशेखरस्य सा ।
विपाकपिङ्गेन फलेन बिभ्रती
　　लतेव रक्ताधरपल्लवा श्रियम् ॥३३॥

1708　तया वियुक्तां किल कोककामिनीं
　　विलोकयन्त्या भवनाब्जिनीगताम् ।
अयाचयताशङ्कितविप्रयोगया
　　शरीरभागस्थितिमिन्दुशेखरः ॥३४॥

1709　तया समं सोऽपि वियोगभीतिमान्
　　न्यवेशयत्तां तनुसामसीमनि ।
प्रकर्षतः प्रेमगुणस्य नास्ति त-
　　न्न वल्लभस्य क्रियते यदीप्सितम् ॥३५॥

---

१. A द्रुमपुष्पसंभवम् ।　　२. A चेता for चेतः ।

1710 कथं नु संध्यानतिषु प्रयोक्ष्यते
करेण मे मत्सरखिन्नमञ्जलिः ।
शिरस्थगङ्गाजलशीकरच्छटा-
तुषारशीतापि न मां न धक्ष्यति ॥३६॥

1711 इति प्रियस्यार्धशरीरसंस्थितौ
क्षणं विकल्पाकुलमानसा सती ।
बभूव तत्संश्रयकातरा पुन-
र्न गण्यते प्रेमणि दोषदूषणम् ॥३७॥

1712 विमुक्तपार्श्वस्य भुजङ्गशेखर-
स्फुरत्फणाफूत्कृतकातरैरिव ।
किरीटचन्द्रस्य मरीचिमण्डलैः
पिशङ्गजूटान्तरपुञ्जितैः स्थितम् ॥३८॥

1713 विधुन्तुदोपप्लुतभागविस्फुर-
न्नवार्कबिम्बोपममग्निपिङ्गलम् ।
निलीनभागान्तरमिश्रमूर्ध्वगं
विभाति चक्षुर्ददर्धतारकम् ॥३९॥

1714 निवेशितस्यान्तरसीम्नि चक्षुषो
निमीलितारालकरालपक्ष्मणः ।
विधीयते भावनयैव तत्क्षणं
प्रियाननाम्भोरुहदर्शनोत्सवः ॥४०॥

1715 ललाटलेखावलिभङ्गभुच्चकैः
समासजन्त्यान्तरवर्त्मनि भ्रुवा ।
मनोरथारूढहरेक्षणक्रिया
सविभ्रमोत्क्षेपदशा निवेद्यते ॥४१॥

1716　अपाङ्गभागं रभसादपाश्रितः
　　सलीलमभ्यासवशेन तारकः ।
　अदृष्टकान्ताननखेदमन्थरं
　　कथञ्चिदेवोत्कतयापि वर्तते ॥४२॥

1717　प्रसक्तताम्बूलकलङ्कधूसरां
　　श्रियं दधत्याधरमध्यलेखया ।
　स्फुटेव मूर्तिद्वितयस्य पेशला
　　विभागसीमा सरला विरच्यते ॥४३॥

1718　स्तनस्य रोमाञ्चभरावलम्बिनः
　　शरीरभागं विशतोऽनुमीयते ।
　विलोचने मीलितपक्ष्मसंपुटे
　　मनोरमस्पर्शसुखोदयोत्सवः ॥४४॥

1719　निषिद्धदेहार्धनिवेशविभ्रमं
　　कृशत्वयोगं प्रति बद्धकोपया ।
　स भङ्गुरभ्रूलतयेव केवलं
　　वलिच्छलान्मध्यभुवा व्यवस्थितम् ॥४५॥

1720　मनोरमान्तर्विनिवेशनिर्वृते-
　　रवाप्तविस्तारगुणोदयेऽधिकम् ।
　नितम्बभागे मणिमेखलागुणो
　　भरेण विच्छिन्नगुणः पतत्यधः ॥४६॥

1721　इति प्रियस्याचलराजकन्यया
　　शरीरभागे कृतसन्निवेशया ।
　जगत्सु सौभाग्यगुणैरनन्यगै-
　　र्व्यजीयताशेषनितम्बिनीजनः ॥४७॥

1722 एकत्र पन्नगमयी सजलाभ्रनील-
च्छाया कटीरकतटे कृतसंनिवेशा ।
व्यावर्तिकण्ठकुहरास्पदकालकूट-
तोयाशयस्रुतिविलासमधत्त काञ्ची ॥४८॥

1723 शोभां बभार [1]जघने ग्लपितान्धकार-
मन्यत्र रत्नरशना मधुरं रणन्ती ।
लावण्यकान्तिसरसीपुलिनायमान-
विस्तारशालिजघनस्थलहंसपङ्क्तिः ॥४९॥

1724 अध्यूरु शीतकिरणाभरणस्य कान्ति-
कल्माषमाप मृगचर्म विषज्यमानम् ।
बिभ्रत्किरीटशशिदर्शनबद्धराग-
ताराधूतागतसितेतरपक्ष्मलक्ष्मीम् ॥५०॥

1725 निसर्गसूक्ष्मच्छविशारमम्बरं
विचित्रकाञ्चीगुणरत्नरश्मिभिः ।
विलग्नमन्यत्र स पद्मरागता-
मिवोद्वहच्चारु तरङ्गितं बभौ ॥५१॥

1726 परस्परप्रेमविजृम्भितोऽनयो-
श्चिराय योगोऽस्तु शरीरभागयोः ।
दधौ तुलाकोटिकशिञ्जितच्छला-
दितीव गौरीचरणस्तदाशिषम् ॥५२॥

1727 नृत्यत्परिक्रमभरानतभूमिपीठ-
निष्पिष्टरत्नशिरसं खलु मा कृथा माम् ।
भस्मावदात इति शेष इवेन्दुमौले-
र्भोगी बभौ कटकितश्चरणाग्रलग्नः ॥५३॥

---

१. B विमला सहसा for जघने ग्लपित ।
C omits जघने ।

1728　सेवागतामृतकरप्रतिबिम्बगर्भं
वक्षः स्थलार्धममृतोन्नतमिन्दुमौलिः ।
अन्तः प्रवेशपरिमण्डललक्ष्यमाण-
गौरीपयोधरमिवाच्छतया परीतम् ॥५४॥

1729　सन्ध्याहितोत्सवविकासमहीनकाञ्ची-
दामाभिराममनिशं विकटाक्षवक्त्रम् ।
लक्ष्मीमनुत्तमहिमांशुकलाञ्छितं स-
दाविश्चकार शिवयोर्वपुरित्यभिन्नम् ॥५५॥

1730　अन्योन्यमन्मथसुखानुभवानुबन्ध-
निस्पन्दमीलितविलोचनयोस्तदानीम् ।
चेष्टास्तयोरुदभवन्नविभिन्नचित्त-
सन्तानपर्यवसिता विनिबद्धवाचः ॥५६॥

1731　इति रसपोषयुक्तिमदनुज्झितवृत्ति गुणव्यपाश्रयं
प्रथितशुभाङ्गलक्षणमपूर्वकृतिप्रवणात्मतां दधत् ।
कविरिव नाटकं घटितसंधि विधाय शशाङ्कशेखरः
शिखरिसुतार्धमर्धवपुषि प्रमदान्वितमानसोऽभवत् ॥५७॥

1732　इत्थं भूयो वियोगज्वरविसरदशोपप्लवच्छेदहेतोः
स्पष्टप्रेमानुबन्धं स्थितवति दयितादेहरत्नेन मिश्रे ।
हर्षोत्कर्षान्निपेतुर्वपुषि पुररिपोरेकलक्ष्यास्तदानी-
माश्चर्योद्वृत्तताराः प्रविकसितपुटा दृष्टयः पार्षदानाम् ॥५८॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवे राजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये
गौरीश्वरदेहार्धवर्णनम् नाम एकविंशः सर्गः ।

---

## द्वाविंशः सर्गः

1733 [1]इत्यर्धदेहरचितस्थितिमुत्तमाङ्ग-
गङ्गाभ्यसूयनपरां गिरिशस्य गौरीम् ।
[2]नाथोधिगम्य सरितामथ चन्द्रधाम-
संमूर्च्छितः क्रुध इव क्षुभितस्तदासीत् ॥१॥

1734 उत्प्लुत्य दूरमनुवव्रजुषा[3] मृगाङ्क-
मङ्कादिवाम्रपदवीमवगाहमानम् ।
स्वस्थान एव परिवृत्तिजुषा मुहूर्त-
मम्भोधिना स्तिमितशान्तजलेन तस्थे ॥२॥

1735 तावद्विधाय जलधिः स्तिमितामवस्था-
मुन्मीलितानुकृतलोचनरत्नशुक्तिः ।
श्च्योतत्सुधार्द्रशिशिरांशुकरावमर्श-
विश्लिष्टशेषविषमूर्च्छ इवोदतिष्ठत् ॥३॥

1736 तारापथं सपदि शिश्रयिषः सलील-
मर्धेन योजयितुमिच्छुरिवामृतांशोः ।
उल्लासिवीचिफलकप्रतिबिम्बितं स-
दभ्युत्ससर्ज पयसां पतिरङ्गसार्धम् ॥४॥

1737 उन्नम्रमीनमकरप्रकरावचूल-
कल्लोलकेतुगजवाजिसमाकुलं सत् ।
अत्यौर्ववह्निमगमज्जलधेरमन्द-
मास्कन्ददानरभसादिव तोयसैन्यम् ॥५॥

---

१. A, B start with ओं । २. B, C नाथो निशम्य ।
३. B अनुगतेन (footnotes) ।

1738　अन्तर्गतौर्वविषवह्निशिखाभितप्ता
　　रत्नोज्ज्वलाः शितिरुचो ववलुः पयोधौ ।
कल्लोलभोगिपतयः परिरब्धशीत-
　　सच्छायचन्द्रकरचन्दनशाखिवृन्दाः ॥६॥

1739　अभ्युत्थितेन रभसोर्ध्वतरङ्गबाहु-
　　संछादिताम्बरतलं [1]क्षितिपृष्ठपीठे ।
अम्भांसि रत्ननिधिनानधिजग्मुषात्र
　　सिन्धूपगूहनसुखं सशुचेव दूरात् ॥७॥

1740　अन्तः स्फुरद्विकटविद्रुमदण्डनिर्य-
　　च्छायानुविद्धमुदधेः शरदभ्रभासः ।
आवर्तमण्डलमराजत मुक्तनिद्र-
　　रक्ताम्बुजं मधुरिपोरिव नाभिचक्रम् ॥८॥

1741　[2]मध्याधिरूढसकलप्रतिमागतेन्दु-
　　बिम्बस्फुरद्विकटरत्नविटङ्कपीठा[3] ।
अध्यम्बुराशि रचिता जलदेवताभि-
　　र्दोलेव राजतितरां स्म तरङ्गलेखा ॥९॥

1742　नीहारगौररुचिभिर्मकराकरस्य
　　तारागणैरधिजलं प्रतिमानिषण्णैः ।
दध्रे तरङ्गभुजदण्डदृढोपगूढ-
　　ज्योत्स्नानिदाघजलशीकरबिन्दुलक्ष्मीः ॥१०॥

1743　छायागताविकलनूतनचन्द्रबिम्ब-
　　विस्पष्टचक्रघटनं क्षुभितस्य सिन्धोः ।
मुक्ताम्बरं निपतति स्म [4]विलीनकान्ति-
　　दैत्याधिपस्य भुजवृन्दमिवोर्मिजालम् ॥११॥

---

१. B, C क्षितिपीठपृष्ठे for क्षितिपृष्ठपीठे ।　　२ C पश्याधिरूढ ।
३. A, C ....विटङ्कपीठः for विटङ्कपीठा । ४. B, C विनीलकान्ति for विलीनकान्ति ।

1744 चक्रेऽङ्गनामरनदीशुचिहारगौर-
कल्लोलपीवरपयोधरपृष्ठभाजः ।
वीचीकरैर्जलनिधिः फणिफूत्कृताग्नि-
धूमच्छटासितनवागुरुपत्त्रवल्लीः ॥१२॥

1745 पारिप्लवोर्ध्ववलितातनुरत्नकम्बु-
[1]सावर्तचक्रकरवर्तनवीचिबाहुः ।
वेलाङ्गना विलुलिताञ्जननीलनाग-
वेणीलताश्चिरमनर्तयतेव सिन्धुः ॥१३॥

1746 व्यक्तं रसातलमुखं क्षणमुद्वहन्ती
निःशेषनेत्रकुमुदोत्सवहेतुमिन्दुम् ।
द्रष्टुं कुतूहलवशादिव नागलोक-
लक्ष्मीर्व्युदास[2] जलराशिजलोत्तरीयम् ॥१४॥

1747 वेलानिलाहतिविजर्जरितस्य सिन्धोः
प्रत्यग्ररत्नकुसुमस्तबकान्यमन्दम् ।
कल्लोलकम्प्रतनुकाननमण्डलानि
भस्मीचकार बडवामुखसञ्ज्ञयाग्निः ॥१५॥

1748 प्रेङ्खत्प्रवालवलयारुणमिन्दुमौलि-
पर्यस्तलग्नविशिखाग्निशिखासहस्रम् ।
सिन्धोः पुरत्रयमिव स्फुरदैन्द्रनील-
स्तम्भायतोर्मि नभसः सलिलं न्यपप्तत् ॥१६॥

1749 वैमानिकामरवधूर्गगने तरङ्गैः
क्षिप्ताः सरागमवलोक्य पयोमनुष्याः ।
अध्यौर्ववह्नि तदलाभविजृम्भमाण-
शोका इवाशु जलधौ ददति स्म [3]झम्पाम् ॥१७॥

---

१. B ....मावर्तचक्र for सावर्तचक्र । २. B उत्क्षिप्तवती (footnotes) ।
३. B उच्चैः प्रदेशादधः पतनम् (footnotes) ।

1750　क्षिप्तास्तथोर्ध्वमुदधेस्तरलैस्तरङ्ग-
भङ्गैः प्लवाः सह विमानगणैर्विचेरुः ।
आलोक्य सस्पृहममीषु यथा सुरस्त्रीः
सांयान्त्रिकाश्च्युतिममंस्त नाकधाम्नः ॥१८॥

1751　गर्भीकृतस्फुरितविद्रुमताम्रतोय-
तालूनि रेजुरुदधेर्विवृतानि पातुम् ।
तालूरमण्डलमुखान्यसमौर्वताप-
तृष्णावशादिव निशाकरचन्द्रिकाम्भः ॥१९॥

1752　अभ्रङ्कषैः स्फुटमलैर्जलधिस्तरङ्ग-
भङ्गेषु शीतकिरणस्य बभार बिम्बैः ।
श्यामाङ्गनाजनकृतास्पदचारुरत्न
वातायनासितशिलाचलहर्म्यलीलाम् ॥२०॥

1753　प्राप्ते विवृद्धिमुदधौ स्फुटफेनहास-
सिन्धुप्रभाधवलकञ्चुकपूर्णपात्रम्[1] ।
वेलाङ्गनाः फणभृतां तरसापजह्रु-
जिह्मप्रवाल[2]निकराङ्गुलिकोटिकृष्टम् ॥२१॥

1754　आलोक्यतोद्धतपरस्परसंप्रहार-
कण्डूयनाकुलभुजैर्मुखरागलक्ष्मीः ।
संसक्तशङ्खशकलत्सरुवीचिभङ्ग-
सङ्गोदरेष्वधिपयोधि पयोमनुष्यैः ॥२२॥

1755　अभ्युद्धतप्रचुररत्ननिधानकुम्भ-
गम्भीररत्ननिकरैरिव सिन्धुराभात् ।
आवर्तमण्डलशतैः प्रसभापविद्ध-
पर्यन्तवर्ति भुजगायसशृङ्खलौघैः ॥२३॥

---

१. B आवेदयद्भिरुदयं पृष्ठाद्यदपनीयते ।
विभूषणं वा वस्त्रं वा पूर्णपात्रं तदुच्यते ॥ इति (footnotes)

२. C विकराङ्गुलिकोटि । for निकराङ्गुलिकोटि ।

1756 काश्मीरकेसरपरागरुचिर्व्यलोकि
लोकेन शीतकिरणस्य निशामुखे यत् ।
तद्भाव्यमानमिव नीरनिधेरुदग्र-
वीचिच्छटाभिरभवत्परिपाण्डु बिम्बम् ॥२४॥

1757 अभ्रङ्कषक्षुभितसिन्धुतरङ्गभङ्ग-[1]
धौतान्मृगाङ्कवपुषोऽविरलं गलद्भिः ।
फुल्लानि कैरवकुलानि कलङ्कबिन्दु-
वृन्दैरिवालिवलयैः शबलीबभूवुः ॥२५॥

1758 कल्लोलचक्रमुदधेस्तटशैलसानु-
निर्धौतधातुरसरञ्जितमाबभासे ।
प्रातः समुन्मिषदनूरुकरातपाङ्क-
मभ्रङ्कषं शिखर[2]जालमिवाश्मधाम्नः ॥२६॥

1759 हेलाविदारिततटाचलदैत्यवप्र-
वक्षःस्थलप्रकटशुक्तिनखोर्मिहस्तः ।
सिन्धुर्नृसिंह इव तारविरावबृत्ति-
रुद्भूतबाडवकृशानुशिखासटोऽभूत् ॥२७॥

1760 भाति स्म गर्भगिरिकाञ्चनकूटकोटि-
निर्यन्मयूखनिकुरम्बकरम्ब्यमाणम् ।
मायाशयालुमधुसूदननाभिपद्म-
पर्यस्तकेसरसहस्रमिवाम्बुसिन्धोः ॥२८॥

1761 विभ्राजिरे जलनिधेर्भुजगोत्तमाङ्ग-
माणिक्यखण्डकिरणच्छुरितास्तदानीम् ।
तीरेषु लग्नबडवाग्निशिखास्तरङ्ग-
भङ्गाः पलायनपरायणतामिवाप्ताः ॥२९॥

---

१. C धौताकरात् for भङ्गधौतात् ।
२. C जालमिव सुधाम्नः for जालमिवाश्मधाम्नः ।

1762　सिन्धोरुदीयुषि हिमत्विषि चन्द्रकान्त-
विष्यन्दिवारिभिरिवाहितवृद्धियोगाः ।
आस्फालनेन तटशैलशिलातलेषु-
[1]पस्फायिरे स्फुरितरत्नरुचस्तरङ्गाः ॥३०॥

1763　भोगीन्द्रभोगविनिषण्णतनोस्तदानीम्
प्रत्यक्षमेव भुजगासनकेतनस्य ।
भस्मीचकार मकराकरमौर्ववह्निः
शक्तो न रक्षितुमिहापदि कोऽपि कश्चित् ॥३१॥

1764　लक्ष्मच्छलभ्रमणमण्डलशारतार-
भासा शशिप्रतिमयोत्थिततया चकाशे ।
पर्यन्तघूर्णिततरङ्गपलाशजाल-
तालूरतामरसकर्णिकयार्णवश्रीः ॥३२॥

1765　ज्वालाजटालवडवामुखवह्निसान्द्र-
धूमाभिघातघटनव्यथितैरिवा[2]च्छाम् ।
मुक्ताफलाश्रुकण[3]सन्ततिमुत्ससर्ज
विस्तारिभिर्जलनिधिर्मणिशुक्तिनेत्रैः ॥३३॥

1766　प्रत्यग्रशोणमणिदीधितिचक्रवाला-
गण्डूषशीधुविसराः पुलिनानि सस्रुः ।
अप्रौढतीरवनकेसरशाखिखण्ड-
सेकक्रियार्थमिव सिन्धुतरङ्गलेखाः ॥३४॥

1767　ऊहुः प्रवालविटपाङ्कुरकोटिभाग-
लग्ना विलोलवडवानलधूमदिग्धाः ।
शङ्खाः करालजलवीचिषु ताम्रनाल-
नीलारविन्दमुकुलश्रियमम्बु धाम्नः ॥३५॥

---

१. B ववृधिरे (footnotes) ।　२. A व्यथितैरिवेच्छाम् for व्यथितैरिवाच्छाम् ।
३. C कणसंहति for कणसन्तति ।

1768 चक्रुः स्थिता नभसि कूर्मकुटीरकस्य
किर्मीरिताः फणिफणामणिरश्मिरागैः ।
सौदामिनीशबलिताम्बुदवृन्दमोह-
विद्राण[1]हंसबिसरं तटमूर्मिभङ्गाः ॥३६॥

1769 स्थूलस्फुलिङ्गनिकरारुणरागपुष्प-
शारीकृताः पवनवेगवितन्यमानाः ।
लक्ष्मीं दधुर्जलनिधेर्वडवाग्निधूम-
लेखास्तदङ्कसरितामिव दीर्घवेण्यः ॥३७॥

1770 [2]काकोलकण्ठरुचिभिर्विकसत्कराल-
रत्नाङ्कशीकरकणैः सदृशीभवद्भिः ।
प्रेङ्खोलितैर्दिवि निजुह्नुविरे तरङ्ग-
भङ्गैर्भुजङ्गपतयः क्षुभितस्य सिन्धोः ॥३८॥

1771 विस्तारिभिः स्फुरितरत्नमरीचिराग-
धातुच्छटाशबलितैस्तरसा तरङ्गैः ।
प्रेङ्खद्भिरम्बरमतस्तरदम्बुराशि-
रुच्छ्रायमाप्य शिखरैरिव विन्ध्यशैलाः ॥३९॥

1772 वीचीविघट्टनविकीर्णविलोलशुक्ति-
मुक्तांशुभिर्मकरकेतुरवाप लक्ष्मीम् ।
सञ्चारवर्त्मभिरिवाभिनवोत्थितस्य
शीतत्विषः प्रमथनाथकिरीटधाम्नः ॥४०॥

1773 अभ्याहतानिव विचूर्णितमन्दराद्रि-
सानुच्युतैर्निशितकोटिभिरश्मकूटैः ।
उच्छ्वासलक्ष्यरुधिरश्रुति ताम्रराग-
[3]च्छेदाज्झषा जलनिधौ दधति स्म कण्ठान् ॥४१॥

---

१. C विद्राणहेसबिसरं for विद्राणहंसबिसरं । २. B जरठवायव: (foootnotes) ।
३. B च्छेदाङ्क्षपा for च्छेदाज्झषा ।

1774 व्यातेनुषोभिरभितः स्फुटफेनहास-
लक्ष्मीं रराज जलधिः सरिदङ्गनाभिः ।
पश्चादुपेत्य परिहासविधित्सयेव
कल्लोलपाणिपिहितातनुशुक्तिनेत्रः ॥४२॥

1775 [1]बन्दीकृतस्य शिखिनो जठरास्पदस्य
तोयातिपानवशतः पृथुवीचिहस्तैः ।
उत्तेजनार्थमिव तीरवनान्तराल-
ताली सचूर्णनिकरं विचकर्ष सिन्धुः ॥४३॥

1776 उज्जृम्भिताविरलयेव पयोधिजग्मु-
रासज्यमानविकटोत्कलिकानुबन्धाः ।
अभ्युल्लसन्मकरकेतु[2]शराभिघात-
क्रोडीकृतास्तटभुवो भृशमाकुलत्वम् ॥४४॥

1777 यस्योदयाधिगम एव कुलाद्रितुङ्ग-
भङ्गीशतैः श्रियमवाप विशेषगुर्वीम् ।
तस्य प्रमाष्टुमिव बिम्बकलङ्कमिन्दो-
रम्भोदवर्त्म जलधिस्तरसा जगाहे[3] ॥४५॥

1778 चन्द्रावदातरुचयो जलधेर्विरेजु-
रुज्जृम्भिता दिशि दिशि स्फुटफेनपाल्यः ।
प्रेङ्खत्तरङ्गभुजगाधिपदीर्घभोग-
निर्मुक्तकञ्चुककलापपुलाकशोभाः ॥४६॥

1779 संक्षोभमादधतमुद्धतवीचिचाप-
मौर्वीनिरर्गलशरस्थितिमौर्ववह्नेः ।
गौरीपतेरिव विलोचनमूर्ध्वसंस्थ-
[4]मोषाञ्चकार मकरध्वजमिद्धमर्चिः ॥४७॥

---

१. A, C मन्दीकृतस्य ।    २. B जलाभिघात for शराभिघात ।
३. A, C जगाह for जगाहे ।    ४. B ददाह (footnotes) ।

1780 उद्दामबाडवकृशानुशिखासहस्र-
तापानुबन्धशमनार्थमिवोर्मिहस्तैः ।
नीता नदीभिरुचज्झषकेतनस्य
फेनच्छटारुचिरचन्दनपङ्कचर्चा ॥४८॥

1781 अभ्युत्पतत्सरभसं सुरचक्रपीत-
शेषोदरस्थमदिराव्यतिषङ्गहेतोः ।
मुक्ताम्बरं निपतति स्म तरङ्गजाल-
मुज्जृम्भमाणमदमोहमिवाम्बुधाम्नः ॥४९॥

1782 निःशेषलोकनयनोत्सवहेतुमेक-
मालोक्य चन्द्रमिव संभृतगाढतोषः ।
अम्भोनिधिर्गलितमौक्तिकबाष्पबिन्दु-
सन्दोहशारशुचिशुक्तिविलोचनोऽभूत् ॥५०॥

1783 सिन्धोश्चकासतितरां स्म मणिप्रकाण्ड-
रश्मिच्छटाविसरविच्छुरितास्तदानीम् ।
हतुं रसातलमनांसि गृहीतदीप्र-
दीपा इव प्रतिदिशं पृथुवीचिहस्ताः ॥५१॥

1784 तारापथं चतुरपातसमीरवेग-
धूता तथोदपतदम्बुधिवीचिपङ्क्तिः ।
तन्मध्यवर्तिभिरलाभि यथा मुहूर्त-
मारादुग्रहैस्तरलबुद्बुदवृन्दलक्ष्मीः ॥५२॥

1785 कल्लोलपङ्क्तिभिरथोरगफूत्कृताग्नि-
धूमच्छटाशबलिताभिरपाति नाकात् ।
बिम्बं तुषारकिरणस्य दधावुषीभि-
रालग्नतद्गतमलाभिरिवाम्बुराशेः ॥५३॥

1786　औवाग्निदाहमनपेक्ष्य रसानुबन्ध-
भाजो जवाद्विविशुषीः ककुभां मुखेभ्यः ।
सिन्धुश्चकार तरसा सरितः पराचीः
स्निग्धेऽपि जातु न जडस्य भवत्यपेक्षा ॥५४॥

1787　अन्तस्थशेषफणमण्डलफूत्कृतोत्थ-
निःश्वासवातवशतो नु सरत्नरागाः ।
सिन्धोरवर्धिषत धौतदिशः शशाङ्क-
धामावमर्शजनितास्तरसा तरङ्गाः ॥५५॥

1788　संक्षोभमागतवतः प्रसरत्तरङ्ग-
भङ्गोत्थितं क्रमविशङ्कटमम्बुराशेः ।
तालूरमण्डलमधत्त कुलालचक्र-
निर्वर्त्यमान परिणाहि शरावलीलाम् ॥५६॥

1789　वेलापर्यस्तकुक्षिप्रकरविगलितस्थूलमुक्ताफलाच्छ-
ज्योत्स्नालोकोपलिप्तग्रहमणिशबलव्योमवीथीविलग्नाः ।
तस्थुः सिन्धोस्तरङ्गा [1]क्षणमतनुशिखाशेखरौर्वानलार्चि-
स्तापप्लोषप्रशान्त्यै शिशिरशशधरस्पर्शतर्षादिवोर्ध्वम् ॥५७॥

1790　वितन्वन्तो लक्ष्मीमविरलदरीदत्तघटनां
स्फुरद्रत्नच्छायारुचिरतटवल्लीवनभुवः ।
विरेजुः कल्लोलाः क्षितिभृत इव व्यालवसतिं
विहायोत्तिष्ठन्तः क्षुभितजलजालस्य जलधेः ॥५८॥

1791　सन्ध्यानृत्तानुबन्धद्रुतरयशिथिलग्रन्थिनिर्मुक्तमध्यं
स्थाणोर्वैयाघ्रमारादजिनमिव भुवि स्रंसमानं विरेजे ।
वज्रत्रासाकुलान्तः श्रितशिखरिकचत्काञ्चनाधित्यकोर्वी-
निष्ठ्यूताभीषुवंशव्यतिकरशबलच्छायमम्भोऽम्बुराशेः ॥५९॥

---

१. A, C कणमतनु for क्षणमतनु ।

1792　धुततटगिरिधातुव्रातधूलिच्छटाभिः
　　च्छुरितपृथुमुखानां सिन्धुरम्भोगजानाम् ।
द्रुतमकृत शिरःसु स्वच्छनक्षत्रमाला-
　　श्रियमतनुतरङ्गक्षिप्तरत्नावलीभिः ॥९०॥

1793　क्षिप्त्वा तीरेष्वनर्घान्ग्लपितशशिरुचः सञ्चयान्स्तान्मणीनाम्
　　तच्चोन्मूल्यानुकूलं सरसफलभृतां मण्डलं पादपानाम् ।
दूरारूढा निपेतुर्जलधिजलरयास्तत्क्षणं वाडवाग्नौ
　　के वा न प्राप्नुवन्ति व्यसनमुपगता विक्रिया जाड्यहेतोः ॥९१॥

1794　आदायौर्वानलकवलितं शङ्खचूर्णं तदानी-
　　माकर्षन्तस्तटवनभुवो नागवल्लीदलौघान् ।
भग्नानेकक्रमुकशकलग्रन्थयो वीचिभङ्गा-
　　स्ताम्बूलस्य स्थितिमविकलां चक्रुरब्धेरिवेत्थम् ॥९२॥

1795　प्राप्तः कामप्यभिख्यां यदुदयसमयारब्धवेलाविजृम्भा
　　सम्भारोद्दामिताम्भः कुलगिरिशिखरश्रेणिशृङ्गैस्तरङ्गैः ।
तस्याशक्तः प्रमाष्टुं मलममृतरुचो नक्तमङ्कोत्थितस्य
　　स्थाने धूमायमानं हृदयमिव दधौ सिन्धुरौर्वानलार्चिः ॥९३॥

1796　सम्भोगोद्दामलीलारसरभसहसत् वक्त्रचन्द्राः पुरन्ध्रीः
　　कुर्वाणस्यापराधस्मृतिविमुखधियो वल्लभेष्वस्तमानाः ।
कन्दर्पस्येव केतुं समकरमुदधिर्वीचिदण्डं जलौघ-
　　क्षोभाविर्भावघोषस्फुटजयपटहारावरम्यं व्युदासे ॥९४॥

1797　प्रतिककुभं गवाक्षघटिता विकासिकुमुदश्रियं विदधतः
　　स्फुटतरमैन्दवानरहिता गृहीतविकटद्रुमाद्रिशिखराः ।
पुनरपि सेतुरभसाद्वलीमुखगणा इवांशुकिरणाः
　　सकलमचुक्षुभन्पतिमपां विकीर्णनवरत्नशारपुलिनम् ॥९५॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवे राजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
महाकाव्ये समुद्रोल्लासवर्णनम् नाम द्वाविंशः सर्गः ।

---

## त्रयोविंशः सर्गः

1798 इत्यम्बुधौ शशधरोदयलब्धतोष-
मुल्लासिवीचि भुजसंभृतनृत्तशोभे।
आसन्नवल्लभजनागमनः पुरन्ध्रि-
लोकः प्रसाधनविधाववधानमाधात् ॥१॥

1799 प्रेङ्खन्नखस्खलितचन्द्रमरीचयोऽथ
लक्ष्मीं पुरन्ध्रिचरणा बिभरांबभूवुः।
[1]प्रेयःसु भाविविनतेष्वपराधवत्सु
मूर्तं प्रसादमिव संभृतमुद्वहन्तः ॥२॥

1800 आविष्कृतातिशयनिर्भररागसंप-
दासादितातिनिधिरीसनितम्बबिम्बः।
स्थाने बभार सुरकामवतीजनस्य
चण्डातकः [2]पुलकबन्धमनोहरत्वम् ॥३॥

1801 विन्यस्तयावकरसारुणसान्द्रराग-
भास्वन्नखैकचरणाङ्गुलिपङ्क्तिराभात्।
भीरोरशोकविटपिप्रसवप्रक्लृप्त-
शल्योरुमन्मथशिलीमुखपञ्चकश्रीः ॥४॥

1802 रामाजनेन निविडं कलधौतकाञ्ची-
बद्धा शिलातलविशालनितम्बबिम्बे।
उद्भिन्नकोमलमनोरमरोमवल्ली-
रत्नालवालवलयस्य विलासमापत् ॥५॥

---

१. A, B प्रेयः सुताविव नतेषु।

२. B पुलकः सितो बिन्दुनिचयो रोमाञ्चश्च (footnotes)।

1803　वद्धास्तु नाम भवती वनिता नितम्ब-
　　बिम्बे [1]पुरा भवति ते रत एव मोक्षः ।
　मा भून्मुधैव मुखरा विरुतैरितीव
　　[2]काञ्चीमुवाच चरणाभरणं रणन्तीम् ॥६॥

1804　मध्ये स्थिता शिथिलवन्धनभागपाद-
　　पद्माग्रपातिकलधौतकरालकाञ्च्याः ।
　शोभां बभार रचिताश्रितहेमवप्र-
　　चक्रा क्षणं कुसुमकेतुपुरीव काचित् ॥७॥

1805　काञ्चीगुणैर्विरचिता जघनेषु लक्ष्मी-
　　र्लब्धा स्थितिः स्तनतटेषु च रत्नहारैः ।
　नो भूषिता वयमितीव नितम्बिनीनाम्
　　कार्श्यं निरर्गलमधार्यत मध्यभागैः ॥८॥

1806　लावण्यकान्तिजलशैवलवल्लरीभि-
　　रक्षुण्णपुष्पशरकाननपङ्क्तिनीभिः ।
　शोभां पुरन्ध्रिजनता विभराञ्चकार
　　हाराश्मगर्भकशिखाकिरणच्छटाभिः ॥९॥

1807　तारावलीद्युतिरनभ्रकुचद्वयान्त-
　　रालम्बिनी भृशमशोभत हारयष्टिः ।
　अभ्युन्मिषन्नवकुशेशयकोशयुग्म-
　　भिन्नानना बिसलतेव विलासवत्याः ॥१०॥

1808　हारस्य मध्यगत इन्दुमणिर्मृगाङ्क-
　　पादावमर्शगलितैः सुदृशो जलौघैः ।
　मूकीचकार रशनागुणमार्द्र[3]तन्तुं
　　मध्यस्थतामपि दधत्तरलो न भूत्यै ॥११॥

---

१. B भविष्यति (footnote) ।

२. A, C काञ्चीमुवाच (this reading is adopted) ।
कालीमुवाच is also another reading ।　　३. A सान्द्र for आर्द्र ।

1809　चेतोऽहरत्कुचयुगं मणिहारयष्टि-
　　मध्यस्फुरन्मरकतांशुविलङ्घिताग्रम् ।
लीलागृहीतनवशैवलवल्लरीक-
　　चञ्चचक्रकोकयुगविभ्रममञ्चितोर्वाः ॥१२॥

1810　कृच्छ्रेण यन्निबिडसंवलिताङ्गुलीक-
　　हस्ताम्बुजेतरकरेरितमप्यनह्यत् ।
प्रेयस्यनीयुषि शुचा गलति स्म तत्र[1]-
　　[2]शून्ये क्षणेन वलयं तदरालकेश्याः ॥१३॥

1811　प्रत्येकमेव विनिवेशितदृश्यपुङ्ख-
　　भागाभिरामनखकोटिशिलीमुखाभिः ।
तूणीरयष्टिभिरिवाभिवभे स्मरस्य
　　लीलाप्रसारितपुरन्ध्रिकराङ्गुलीभिः ॥१४॥

1812　प्राप्तस्य सामिकृतमण्डनदेहयष्टि-
　　रर्चालताकिसलये [3]ललना सलीलम् ।
रागं निजोष्ठरुचके विनिवेशयन्ती
　　काचिद्व्यधत्त हृदये हृदयेश्वरस्य ॥१५॥

1813　श्लाघ्यात्मना दशनकोटिकृतक्षतेन
　　सम्प्राप्य [4]चुम्बनसुखानुभवं तदानीम् ।
रागः कुशेशयदृशामधरेषु नाग-
　　वल्लीदलेन यदभारि किमद्भुतं तत् ॥१६॥

1814　ताम्बूलरागरुचिराधरमध्यभाग-
　　रेखा जहार हृदयं हरिणेक्षणायाः ।
उत्कृष्टचापझषकेतुकृपाणयष्टि-
　　धारानिपातकृतसक्षतजव्रणश्रीः ॥१७॥

---

१. A यत्र for तत्र ।　　२. B, C शून्यं for शून्ये ।
३. B किसलयैर्ललना for किसलये ललना ।　　४. C, A मर्दनसुखा for चुम्बनसुख

1815 भाति स्म काचन तिरस्कृतविम्बकान्ति-
दन्तच्छदोन्मिषितदीधितिमण्डलश्रीः ।
अन्तः प्रविष्टभरसंभृतपुष्पबाण-
नाराचगर्भमकरन्दमिवोद्गिरन्ती ॥१८॥

1816 लावण्यकान्तिरमला मलिनात्र मा भू-
द्भीत्या सखीति विलिलेख न पत्रलेखाम् ।
[1]अक्लेशयत्पुनरमूं प्रतिमागतेन्दु-
विम्बप्रभाधिकतरं तरुणीकपोले ॥१९॥

1817 [2]गण्डस्थलं लकुचकुड्मलपाण्डुशोभा-
मभ्युच्छ्वसत्तिलकपत्रलताभिरामम् ।
छायानिषण्णहरिणाङ्कमधत्त पुष्प-
कोदण्डकाननमिवोन्नतमङ्गनायाः ॥२०॥

1818 लावण्यनिह्नुतविपाण्डुरमण्डलस्य
गण्डस्थलीभुवि तुषाररुचोऽपरस्याः ।
स्पष्टाभिलक्ष्यवपुषा मृगनाभिपत्र-
पत्त्रावलीरुचिरतन्यत लक्ष्मणैव ॥२१॥

1819 बिभ्रत्यराजदशितागुरुपङ्कदिग्ध-
पत्त्रावलीविरचनाशबलं कपोलम् ।
आलोलकुण्डलशिखरारुणरत्नदीप-
निष्ठ्यूतकज्जलविलिप्तमिवाश्रितभ्रूः ॥२२॥

1820 भाति स्म पर्युषितकेसरपुष्पपाण्डु-
गण्डस्थलीविरचितागुरुपत्त्रलेखा ।
वामभ्रुवो रजतभित्तिविलग्नकाल-
वल्लीविलासमसमानगुणं वहन्ती ॥२३॥

१. B मलिनीचकार (footnotes) । २. A, B गण्डस्थलेन for गण्डस्थलम् ।

1821　तिर्यक्कृताननहिमांशुकरालहस्त-
　　　शाखानखांशुभरसान्द्रतरप्रकाशम् ।
　　सुभ्रूरराजत विलम्बिनि कर्णपाशे[1]
　　　माणिक्यकुण्डलमुदंशु निवेशयन्ती ॥२४॥

1822　लावण्यकान्तिविसरामृतवाञ्छयेव
　　　बिभ्रत्सुधानिकरनिर्भरतामपीन्दुः ।
　　छायाछलेन निपपात वधूकपोले
　　　सन्तोषवान् भवति को गुणवान् गुणेषु ॥२५॥

1823　संशिक्षितुं ललितविभ्रमचेष्टितानि
　　　पारिप्लवक्षणगतानि [2]मृगोऽङ्गनायाः ।
　　इत्यादरादिव [3]शशी प्रतिमाछलेन
　　　स्वच्छे कपोलफलके वसतिं चकार[4] ॥२६॥

1824　लावण्यकान्तिसलिलस्रुति धौतलक्ष्म-
　　　लेखः कपोलफलके प्रतिमानिषण्णः ।
　　अक्षुण्णमेव विबभौ हरिणेन मुक्त-
　　　मध्यस्तनोः श्रवणपाशभयादिवेन्दुः ॥२७॥

1825　श्यामीकृते निपतता नवलोध्ररेणु-
　　　भस्मोत्करेण परिमार्जनवाञ्छयारात् ।
　　कन्दर्पदर्पण इवेन्दुकराः पुरन्ध्रि-
　　　गण्डस्थले कमलकान्तिमुषो निपेतुः ॥२८॥

---

१. A कठपाशे for कर्णपाशे ।
　C retains कर्णपाशे ।

२. A, B मृगांगनायाः, B, C retain मृगोऽङ्गनायाः ।　३. A शुचि for शशी ।

४. A प्रतिमानिषण्णः for वसतिं चकार ।

1826　आलोक्यतोन्नतपयोधरपृष्ठभाग-
　　　　बिम्बागतश्रवणकाञ्चनकुण्डलैका ।
　　सज्जीकृतप्रकटचक्रचतुष्टयाङ्क-
　　　　[1]सञ्चारिपुष्पशर-कम्बलिवाह्यकश्रीः ॥२९॥

1827　एकां पिनद्धनिरुपप्लवचन्द्रबिम्ब-
　　　　विस्तारशालिशुचिदीधितिशङ्खपत्राम् ।
　　बिभ्रत्यराजदपरा तरुणी विटङ्क-
　　　　[2]ताटङ्कमङ्कितलां श्रवणाग्रपालीम् ॥३०॥

1828　स्थूलेन्द्रनीलदरदन्तुरमध्यभाग-
　　　　मुक्ताफलग्रथितविभ्रमकर्णपूरा ।
　　शोभां बभार रमणी निभृतद्विरेफ-
　　　　कल्माषितस्तवककोमलकल्पवल्ल्याः ॥३१॥

1829　कान्तिप्रकर्षमनपेक्ष्य परात्मतत्त्वं
　　　　हर्तुं प्रगल्भत इदं जलसङ्गमेषु ।
　　इत्थं रुषेव रुरुधे निजसंनिवेश-
　　　　भूमिर्दृशायतदृशः श्रवणोत्पलस्य ॥३२॥

1830　पारिप्लवस्फुरिततारकचक्रवाल-
　　　　नीलोत्पलस्फुटतरत्विषि दीर्घिकायाम् ।
　　विस्पष्टमञ्जनरजश्छटया द्विरेफ-
　　　　पङ्क्त्येव पक्ष्मलदृशो दृशि सन्निपेते ॥३३॥

1831　भ्रूलेखया कुटिलपक्ष्मदृशः शलाका-
　　　　न्यस्ताञ्जनाधिकविलीनरुचा व्यरोचि ।
　　कर्णाश्रितोत्पलगलन्मकरन्दपान-
　　　　लोभादिवोपगतया मधुपायिपङ्क्त्या ॥३४॥

---

१. B रथविशेषः ।　　२. A, C ताटङ्कसंश्रितां for ताटङ्कमङ्कितलाम् ।

1832 चक्रे ललाटभुवमिन्दुमुखीजनस्य
कस्तूरिकातिलकबिन्दुरमन्दशोभाम् ।
सञ्चारिपुष्पशरकुञ्जरपादचक्र-
मुद्रानिवेश इव कर्दमधूसरश्रीः ॥३५॥

1833 दोलायमानचटुलातिलकं ललाट-
पट्टं ललामललितश्रियमुद्वहन्ती ।
एकीभवत्सुरशरासनशीतरश्मि-
खण्डाङ्कितामनुचकार दिवं नतभ्रूः ॥३६॥

1834 नैशान्धकारनिकरेण सहाविरुद्ध-
मेकत्र साधु यदि सन्निविशेत तेजः ।
बद्धास्पदा मृगदृशः शशिलेखया त-
दासादयेत्सदृशतां कचहस्तभूमिः ॥३७॥

1835 उद्धूतधूलिमकरन्दकणार्द्रमुक्त-
निद्रस्फुरद्भ्रलनपुञ्जितचारुपुष्पाः ।
उत्सृष्टदैर्घ्यघटनाः कबरीषु गाढ-
बन्धाः पुरन्ध्रिभिरवत्सत चारु शेषाः ॥३८॥

1836 गन्तुं प्रियान्तिकमथो रभसेन केश-
संस्कारधूमनिकरं करभोरवस्ताः ।
शीतांशुदीधितिशिखादलितं विरेजु-
रुत्पादयन्त्य इव शार्वरमन्धकारम् ॥३९॥

1837 लावण्यकान्तिकलुषीकरणाय तासा-
मालीजनेन रचितः परमङ्गरागः ।
स्थैर्यं जगाम दयितागमभावनोत्थ-
घर्माचितेषु न चिरादपि [1]विह्वलेषु ॥४०॥

१. B, C विग्रहेषु ।

1838 लक्ष्यीकृतं स्मृतिभुवा बिभराम्बभूव कार
शोभां वपुः सरसकुङ्कुमकर्दमाङ्कम् ।
निर्मुक्तपुष्पशरकेसरसान्द्रधूलि-
सन्तापपिङ्गितमिवाधिकमङ्गनायाः ॥४१॥

1839 विन्यस्य भूषणशतानि मुधैव देह-
कान्तिः कुशेशयदृशा कलुषीकृतेयम् ।
चारुभ्रुवः प्रतिमितोऽच्छकपोलभित्ति-
भागे गभस्तिभिरितीव जहास चन्द्रः ॥४२॥

1840 व्यक्ताङ्गरागघनसौरभबद्धवाञ्छ-
व्यावर्तनाकुलशिलीमुखचक्रवाला ।
दुर्वारमारशरपातभयेन लोह-
वर्मान्तरालघटितेव रराज काचित् ॥४३॥

1841 जह्रुर्मनांसि सरलोन्नतचारुनासा-
वंशाः पयोधरमृदङ्गभृतस्तरुण्यः ।
दोलायमानमणिकुण्डलकांस्यतालाः
सङ्गीतभूमय इव स्मरलासकस्य ॥४४॥

1842 शृङ्गारिणी धृतमदोज्ज्वलकालधौत-
कक्ष्या कलापकरपुष्करचारुशोभा ।
भाति स्म कामकरिणीव पिनद्धहार-
नक्षत्रमालकुचकुम्भतटा वरोरूः ॥४५॥

1843 आह्लादहेतुनिरवद्यशरीरयष्टि-
र्लावण्यकान्तिकलुषीकरणेन तासाम् ।
आसीत् कुशेशयदृशामयथार्थतैव
पर्यस्तभास्वररुचामपि भूषणानाम् ॥४६॥

1844 [1]प्रेयोगृहागमनभावनयान्यचेताः
स्वच्छे धृते [2]सवयसा [3]गृहचन्द्रबिम्बे ।
भूषाविशेषरचनासदसद्विवेक-
शून्यैव काचिदवलोकयति स्म वक्त्रम् ॥४७॥

1845 चित्रप्रसाधनपरिग्रहशोभिवक्त्र-
मालोक्य दर्पणतले मुहुरुच्छ्वसन्त्याः ।
मत्वाभिसंधि[4]मभिवल्लभधाम बद्ध-
रागा ययावनुदितापि विदग्धदूती ॥४८॥

1846 एषा गतैव निबिरीसनितम्बबिम्ब-
भारेण पक्ष्मलदृशः क्रियते तु विघ्नः ।
यान्त्या इतीव दयितान्तिकमेणदृष्टे-
रग्रे जगाम गदितुं लघु चित्तवृत्तिः ॥४९॥

1847 श्रोत्राभिराममुपकल्प्य रसार्द्रवृत्ते-
रभ्येयुषो दयितवारिधरस्य शब्दम् ।
रभ्याभ्यपद्यत [5]विदूरभुवेव नार्या
पर्युच्छ्वसत्पुलकरत्नशलाकया श्रीः ॥५०॥

1848 प्रेयांसमीक्षितुमथेक्षणतारकस्य
दूरादपाङ्गपदवीमभिधावतोऽस्याः ।
आनन्दबाष्पजलबिन्दुनिभेन सान्द्राः
स्वेदाम्बुशीकरकणा इव संनिपेतुः ॥५१॥

---

१. A, B: C प्रेयोजनागमन । २. B सख्या (footnotes) ।
३. B दर्पणे (footnotes) । ४. C'''मधिवल्लभधाम'''' ।
५. A विदूर भुवश्च for विदूरभुवेव ।

1849 काचिद्विकल्परचिताकृतिचित्तनाथ-
गाढोपगूहनरसस्रुतघर्मलेशैः ।
लावण्यकान्तिजलमज्जनलग्नबिन्दु-
वृन्दामिवाभृत तनुं स्फुटरोमहर्षाम् ॥५२॥

1850 भीता वधूरभिमुखं न शशाक भर्तु-
रुद्वीक्षितुं यदचिरोढतया कथञ्चित् ।
पृष्ठागतस्य वदनं श्वसिताहतेऽथ
पश्यन्त्यदूयत तदस्फुटमात्मदर्शे ॥५३॥

1851 काचिद्विधूसरितकान्तिमधत्त दत्त-
दुःखासिकाधरमणिं चिरयत्यभीष्टे ।
निःश्वासमारुतपरम्परयानुबन्धि-
शेषान्धकारकलुषीकृतयेव भिन्नम् ॥५४॥

1852 प्राप्तः सभीतिरसितागुरुपङ्कपत्त्र-
भङ्गामवैक्षत पुरन्ध्रिजनस्य कान्तः ।
अन्तर्व्यलीकचकितः स्फुरणानुबन्धि-
मानाग्निधूमकलुषामिव गण्डलेखाम् ॥५५॥

1853 क्षीणोऽपि मुग्धवदनेऽनुशयाप्तिहेतो-
र्वाच्यस्त्वया न खलु विप्रियमेष किञ्चित् ।
स्पष्टागसि प्रियतमे सुदृशो न बाष्प-
स्तम्भो [1]विरूक्षमभिधातुमदादितीव ॥५६॥

1854 कान्ते प्रणेमुषि कृतागसि तद्गतंस-
पुष्पाधिवाससुरभौ विबभौ त[illegible]ण्याः ।
भ्राम्यन्मधुव्रतगणश्चरणारविन्द-
पार्श्वे मुहूर्तमसितोपलनूपुरश्रीः ॥५७॥

---

१. B विरुद्धमभिधातु for विरूक्षमभिधातु ।

1855 संसक्तकज्जलकरेण विलोचनाम्बु-
पूरप्लवं प्रसभमुत्सृजता सरागम् ।
[1]हस्तीकृतः कृशतनोरभवत् प्रियेण
मानान्धकार इव रत्युपभोगविघ्नः ॥५८॥

1856 कृष्णायतानमितपार्श्वनितम्बचुम्बि-
वेणीलताननगतत्रिपताकपाणिः ।
साचीकृतभ्रू विनिमीलितलोचनाथ
काचित् पुरः स्मररसात्कमितुर्जजृम्भे ॥५९॥

1857 अन्या पुन· सरभसोर्ध्वविविक्तभास्व-
दुत्तानकर्कटकरस्थिति बाहुयष्टिः ।
उत्क्षिप्तमूलकुटिलीकृतकुञ्चितभ्रू-
लेखातरङ्गितकरालललाटपट्टा ॥६०॥

1858 प्रेङ्खन्नितम्बतटचुम्बिकरालकाल-
वेणीलतोन्नमितपीनपयोधरश्रीः ।
दीर्घीभवत्तनुतरोदरलुप्तपार्श्व-
भागा [2]विवर्तवलनं वपुषश्चकार ॥६१॥  युगलकम्

1859 तासामपाङ्गपदवीव्यतिरिक्तनील-
तारत्विषो ललितवीक्षितविभ्रमेषु ।
[3]आवृत्तिपीतभरनिर्गतकज्जलौघ-
धूलिच्छटा इव दृशो दधति स्म लक्ष्मीम् ॥६२॥

---

१. स्वीकृतः (footnotes) ।
C omits हस्तीकृतः ।

२. C विभर्ति for विवर्त ।  ३. B पुनः पुनः (footnotes) ।

1860 प्राप्ताः प्रदोषसमये स्फुरदिन्द्रनील-
[1]कोषाभिराममशितितारकमण्डलाभिः ।
दृग्भिः सविभ्रममपायिषतावधूत-
मानान्धकारमरविन्दद्दृशां युवानः ॥६३॥

1861 तासां दृशस्तरलतारकचक्रवाल-
पक्ष्मच्छटांशुशबलीकृतगण्डभागाः ।
आचिक्षिपुः प्रियमनांसि झषावचूल-
लीलावशीकरणविभ्रमवर्तयस्ताः ॥६४॥

1862 प्रियतममवलोक्यापाश्रयादुत्पतन्त्याः
सरभसमपरस्याः पादमूले सलीलम् ।
न्यपतदथ कराग्रादच्छरत्नात्मदर्शः[2]
शशधर इव वक्त्रच्छायया निर्जितश्रीः ॥६५॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो महाकवे राजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये प्रसाधनवर्णनम् नाम त्रयोविंशः सर्गः ।

---

१. B चषक (footnotes) ।
२. A अच्छरत्नः सदर्शः for अच्छरत्नात्मदर्शः ।

## चतुर्विंशः सर्गः

1863 इति रात्रिमुखे समं प्रियै-
घंटमानासु चकोरदृष्टिषु ।
अपराः प्रियविप्रयोगतो
भृशमासेदुरुपप्लुतां दशाम् ॥१॥

1864 स्मरकार्मुकयष्टिविभ्रमं
कुटिला चान्द्रमसी कलावहत् ।
दधति स्म तदीरिताः शरा
इव तन्व्यास्तदभीषवो व्यथाम् ॥२॥

1865 न तदा तमसोऽभवत् क्वचित्
शशिधाम्नश्च विशेषदर्शनम् ।
अकरोत्सुतनोर्यदन्धतां
चिरमस्या विरहे विजृम्भितम् ॥३॥

1866 कुसुमेषु पृषत्कपक्षजः
परिधुन्वन्विरहाशुशुक्षणिम् ।
अधृतद्रढिमाणि सुभ्रुवां
हृदयान्याशु ददाह मारुतः ॥४॥

1867 क इवैति विपद्धतीह नो
प्रतिकूलत्वमदोषवानपि ।
सुदृशो विरहेऽमृतस्रवाः[१]
शशिभासोपयदुद्धुरग्निताम् ॥५॥

१. A, C left blank ।

1868 प्रतिबिम्बितवल्लभाकृतौ
गुरुमूर्च्छातिमिरैः स्म दूयते ।
अपि चेतसि धूसरीकृते
श्वसितैर्दर्पणवत्तदापरा ॥६॥

1869 कुसुमं निजबन्धनादिव
प्रसभं दक्षिणमारुताहतम् ।
न्यपतन्निजसन्निवेशतः
सुकुमारं कुटिलभ्रुवो मनः ॥७॥

1870 मदनस्य शरासनाश्रया-
मपरां ज्यामिव कर्तुमिच्छता ।
बिसतन्तुततिस्तनौ स्थिता
मरुताधूयत वामचक्षुषः ॥८॥

1871 प्रतिपन्नसमागमं प्रिये
श्रमसंवेगवशादिवायतम् ।
हृदयं श्वसिति स्म निर्भरं
गुरुचिन्ताभरभारपीडितम् ॥९॥

1872 विजहीहि शुचं पुरा तव
व्यपयात्येष वियोगसंज्वरः ।
क्षणमाश्वसिहि व्यपोहितुं
व्यसनं धीरतया हि शक्यते ॥१०॥

1873 चिरकालवतंसितोत्पल-
स्पृहया मञ्जुरुतैः परिभ्रमन् ।
इति धीरयति स्म कामपि
श्रवणोपान्तमिवैत्य षट्पदः ॥११॥ युगलकम्

1874　इह वल्लभविप्रयोगतः
　　प्रविशन्त्युज्झितशङ्कमाधयः ।
　व्यधित व्रणितं शरैः स्मरो
　　विघृतद्वारमितीव तन्मनः ॥१२॥

1875　अविलुप्त[1]परस्परास्थितै-
　　र्दयितप्रेमविमर्षविस्तरैः ।
　कृततीर्थ इवाधृतिस्तनो-
　　रवतारं कुरुते स्म मानसे ॥१३॥

1876　असमाप्तविकल्पसङ्कुल-
　　स्मरसङ्कल्पनिबद्धमालया ।
　अतिदैर्घ्यभृतेव सुभ्रुवः
　　[2]ससृपे भावनयानुवल्लभम् ॥१४॥

1877　न च कार्श्यदशां नतभ्रुवं
　　मदनो ज्यां च शरासनाटनिम् ।
　सुमनःसुकुमारविग्रहां
　　विरराभापघृणोऽधिरोपयन् ॥१५॥

1878　कृतचन्दनपङ्कचर्चना-
　　मपरां [3]तापधृतो [4]व्यधुः क्षणात् ।
　गुरुशोषकृशां सरोजिनी-
　　मिव सुग्रीष्मकभङ्गवासराः ॥१६॥

---

१. B परम्परास्थितैः for परस्परास्थितैः ।　　२. B प्रसृतं for ससृपे ।

३. A, C तापहृतां ।

Here the reading तापधृत is retained because of its being an adjective to सुग्रीष्मकभङ्गवासराः ।

४. A, C व्युषुः for व्यधुः ।

1879 स्फुटसौरभसम्पदागता[1]
मधुपा निःश्वसितानिलास्तनोः[2] ।
पपुरेव तदूष्मविप्लुताः
सुखमेवाधिकदुःखसाधनम् ॥१७॥

1880 निशितैरशरीरमार्गणै-
र्हृदयस्य क्षतिमीयुषः क्षणात् ।
शशिचन्द्रिकयाश्रितभ्रुवः
परुषं क्षाररजश्छटायितम् ॥१८॥

1881 विरहानलतापविप्लव-
व्यथयेवाशु पलायनोन्मुखम् ।
अपरा हृदयं न पाणिना
गुरुचिन्तानिहितेन नारुधत् ॥१९॥

1882 अभिनन्मदनस्तथा शरैः
सुदृशश्चित्तशरव्यमुत्सुकम् ।
न पुनः प्रतिसन्दधौ[3] यथा
तदभिन्नांशविनाकृतेर्धनुः[4] ॥२०॥

1883 तटभूमिरिवापरा बभौ
मकराङ्केन विवृद्धिमीयुषा ।
निशि लोचनशुक्तिसम्पुट-
च्युतवाष्पोदकविन्दुमौक्तिका ॥२१॥

1884 अपनिद्रमधूकपाण्डुरा
सुदृशोऽदृश्यत गण्डमण्डली[5] ।
गमिताश्रुजलप्लवैरिव
कृशिमाकीर्णतयातिनिम्नताम् ॥२२॥

---

१. A स्फुटसौरभसंपदागताम् । २. A… निलास्तनौ for … निलास्तनोः ।
३. C प्रतिमदंधौ for प्रतिसंदधौ । ४. B अभावात् (footnotes) ।
५. A, C गण्डलीलया for गण्डमण्डली ।

1885 सुरभिश्वसितानिलागताः
[1]कृतमूर्च्छा मधुपायिनोऽपराम् ।
अनयन्भृशमाकुलात्मता-
मुरगाश्चन्दनकन्दलीमिव ॥२३॥

1886 भवनोन्नतचन्द्रशालिका-
शयने दीर्घवियोगभीतितः ।
प्रथमं प्रियकण्ठवर्तिनी
निशि निद्रामभजत् क्षणं न या ॥२४॥

1887 अपरेक्षितुमाहितस्पृहा
दयितं स्वप्नवितीर्णदर्शनाम् ।
वत [2]तामपि वह्वमंस्त य-
त्तदहो कार्यगतेर्विचित्रता ॥२५॥ युगलकम्

1888 अबलत्वमुपेयुषी तथा
विरहे काचिदतास्यदुत्सुका ।
विनिमीलितपक्ष्मपीडितं
कथमप्यश्रुजलं यथामुचत् ॥२६॥

1889 प्रतिमापतितां सखीव तां
गुरुतापोपशमाय सुभ्रुवम् ।
व्यधितान्तरुपागतार्द्रतां
शशिकान्तोपलसालभञ्जिका ॥२७॥

1890 शशिनो जलधेरुदीयुषो
गुरुतद्गर्भविषाग्निनेव ताम् ।
उपगूढशिखा मरीचयो
घनमूर्च्छाकुलितां निशि व्यधुः ॥२८॥

---

१. C कृतमूर्च्छामनपायनोऽपराम् । २. B निद्रामपि (footnotes) ।

1891 विबभौ घनसारसंहति-
निहिता स्निग्धसखीजनैस्तनौ ।
सुदृशोऽश्रुकदर्थनाभयात्
गलिता गण्डतलादिव च्छविः ॥२९॥

1892 स्मरतापभरेण विभ्रमा
न परिम्लानिमवापुरद्भुतम् ।
सुदृशस्तरुपल्लवा इव
स्मितपुष्पाभरणोज्ज्वलश्रियः ॥३०॥

1893 करमर्पितमानने दधौ
स्मरजृम्भासु पिधानलीलया ।
गलिताञ्जनधूसरं वधूः
श्वसितैः प्लुष्टमिवातनूष्मभिः ॥३१॥

1894 विनिमीलितलोचनाम्बुजा
दधती कण्टकितां तनुत्वचम् ।
नलिनीव शशाङ्करश्मिभि-
र्द्रुतमम्लायत काचिदुत्सुका ॥३२॥

1895 विरहानल[१]............तत्
तनुटांकर इवोपशुश्रुवे ।
शयनीकृतफुल्लपङ्कज-
स्फुटपक्ष्मास्पदषट्पदारवः ॥३३॥

1896 दयितागमनेऽपि भाविनीं
स्थितिमालोक्य विकल्पसंभृतैः ।
विदधे पुलकादिभिस्तनौ
सकृदभ्यास इवाश्रितभ्रुवः ॥३४॥

---

१. A, C left blank ।
B fills the blank "दह्यमानमे" ।

1897 व्यजिनीकृतपद्मिनीदल-
स्खलितैर्दूरमिवानिलैर्वपुः ।
[1]समुपोद्धलितो मृगीदृशः
सविशेषं मदनानलोऽदहत् ॥३५॥

1898 लुलितालकवल्लरीकृतां
दधता पाणितले निषेदुषा ।
अपराख्यदनालपन्त्यपि
स्मरसन्तापदशां मुखेन्दुना ॥३६॥

1899 शशभृन्मणिहारयष्टयो
न शमायोत्पलचक्षुषोऽभवन् ।
स्मरसंज्वरशोषितोच्छल-
च्छविविष्यन्दितवारिबिन्दवः ॥३७॥

1900 विरहे मृगशावकचक्षुषा-
मयुगान्तप्रलये विजृम्भिते ।
नवपङ्कजकोमलं यया-
वहिमापातविवर्णतां[2] वपुः ॥३८॥

1901 दयिते चिरयत्यनुक्रमा-
द्वियदास्कन्दति चन्द्रमण्डले ।
भृशमुत्कलिकाकुला मुहु-
[3]र्मुहुमूढमनोरथाः स्त्रियः ॥३९॥

1902 जग्राह नूनमतुषारमरीचिबिम्ब-
मध्यप्रवेशपुनरुक्तिवशोत्थमौष्ण्यम् ।
यद्विप्रयुक्ततरुणीजनदेहदाह-
मिन्दुः स्पृशन्करशिखावलिभिश्चकार ॥४०॥

---

१. B अतिवृद्धि नीतः (footnotes) । २. A, B वितर्कतांम् for विवर्णतां ।
३. A मुहुर्दूरमनोरथाः ।

1903 आश्चर्यमेतदसमं मकरन्दबिन्दु-
सन्दोहवर्षिभिरपि प्रसवात्मकैर्यत् ।
[1]बाष्पप्लवां विरहविप्लुतचेतनानां
संशोष्यते तनुरहो विशिखैः पतद्भिः ॥४१॥

1904 दिग्धा इवोदधिविलोडनविभ्रमोत्थ-
लक्ष्मच्छलोच्छलितहालहलच्छटाभिः ।
मूर्च्छां व्यधुः शशभृतः किरणाः सुधाम्बु-
विष्यन्दिनोऽपि विरहातुरसुन्दरीणाम् ॥४२॥

1905 वृष्टिं नवां रसमयीं विकिरत्यमन्द-
मातङ्कदायिनि शशाङ्कघने घनोर्वाः ।
स्थूलाश्रुबिन्दुकणमौक्तिकपङ्क्तिरावि-
रासीन्निरायत विलोचनशुक्तिगर्भात् ॥४३॥

1906 अन्यादृगप्यपरथैव जनस्य नूनं
भावस्थितिर्भवति विप्लुतचित्तवृत्तेः ।
नक्तङ्करस्य किरणाः सुधया [2]यदार्द्राः
प्रेयोवियोगविधुरास्तरुणीरधाक्षुः ।।४४।।

1907 विक्षिप्तवेल्ल[3]-हल-बाहुलताः कराब्ज-
रक्ताङ्गुलीदलमरीचिमधुच्छटाभिः ।
[4]ताः संविभागमिव पङ्कजसंस्तरस्य
सन्तापशुष्कमकरन्दकणस्य चक्रुः ॥४५॥

1908 निःश्वासमारुतपराहतपुण्डरीक-
[5]पर्यङ्कपिङ्गलपरागकणापदेशात् ।
रेजे वियोगशिखिभीतिपलायमान-
गौरात्मदेहपरमाणुगणेव काचित् ॥४६॥

---

१. A, B, C बाष्पप्लवा । २. A, C सुधया अचन्द्राः for सुधया यदार्द्राः ।
३. सुकुमार (footnotes) । ४. A, B नार्यो विभागमिव ।
५. B शय्या (footnotes) ।

1909　[1]स्रस्ता भुजाब्जशयनान्मणिकुट्टिमस्थ
रक्तारविन्दमुखलग्ननखांशुलेखा ।
उद्ग्रीवहंसशिशुचञ्चुविकृष्यमाण-
सूत्रा मृणालकलिकेव तनोरभासीत् ॥४७॥

1910　तन्व्याः शशाङ्कशकलं प्रतिबिम्बितं स-
दच्छे कपोलफलके विदधार लक्ष्मीम् ।
चेतोनिमग्ननिशितस्मरबाणशल्य-
निष्कर्षणानिहितकङ्कमुखायमानम् ॥४८॥

1911　शय्यीकृतैककरपङ्कजसन्निषण्ण-
मच्छं कपोलफलकं विदधार काचित् ।
संधुक्षितस्मरकृशानुशिखाशतस्य
रोद्धुं रुषेव शशिनः प्रतिमावकाशम् ॥४९॥

1912　इत्थं विसंस्थुलदशाः सुदृशो बभूवु-
रिन्दूदयोल्लसितरत्ननिधौ प्रदोषे ।
उज्जृम्भमाणरमणप्रथमानुराग-
मानप्रवासविधुरस्थितिविप्रलम्भाः ॥५०॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये विरहवर्णनम् नाम चतुर्विंशः सर्गः ।

---

१. A, C स्रस्ताभुजाब्जशयन ।

## पञ्चविंशः सर्गः

1912A इत्थं शशाङ्कातपदर्शनेन
विजृम्भमाणां सुरसुन्दरीणाम् ।
ससंभ्रमं [1]काञ्चन तामवस्था-
मभ्येत्य दूत्यः सुहृदां विवव्रुः ॥१॥

1914 धृतारविन्दच्छदसौकुमार्यै
हस्ते च पुष्पास्तरणे च तस्याः ।
विपाण्डुरत्वं दधती नितान्तं
कपोलभित्तिश्च तनुश्च तस्थौ ॥२॥

1915 सौगन्ध्यकृष्टैः श्वसितानिलानां
तदूष्मदाहाहितगाढखेदैः ।
पिपास्यमाना मधुपैर्भ्रमद्भिः
पतन्ति तस्या नयनाम्बुधाराः ॥३॥

1916 चन्द्रोदयारम्भविजृम्भितेन
व्यधायि तस्या मकरध्वजेन ।
वेलातटोर्व्या इव नेत्रशुक्ति-
मुक्ताश्रुबिन्दुस्फुटमौक्तिकत्वम् ॥४॥

1917 [2]दोःकन्दलीनिर्जितसौकुमार्यं
मृणालमस्या निहितं सखीभिः ।
करोति दाहं सविशेषमेव
तन्मत्सरेणेव शरीरयष्टेः ॥५॥

---

१. B, C काचन । २. C अकेर्दिली for दो कन्दली ।

1918 आविभ्रती चन्दनपङ्कलेखां
ललाटभित्तिः श्रियमेति तन्व्याः ।
आविर्भवच्चन्द्रकलेव दुग्ध-
सिन्धूर्मिलेखा विरहातिपाण्डोः ॥६॥

1919 कुचद्वयं सम्प्रति सा बिभर्ति
श्वासागतालिप्रतिबिम्बगर्भम् ।
उष्णोष्णबाष्पाम्बुकणप्रतान-
प्लोषेण शारत्वमिव प्रयातम् ॥७॥

1920 सम्प्रत्यसौ मुञ्चति बाणवर्ष-
[1]माबद्धकोपेव मनोभवेऽपि ।
प्रजागरेणारुणिते बिभर्ति
विलोचने पद्मपलाशदीर्घे ॥८॥

1921 अनेकसङ्कल्पविकल्पगाढां
दशां वहन्त्या [2]विरहे त्वमेव ।
स्वप्नेपि जाग्रच्चरिते च तस्याः
सुखस्य दुःखस्य च हेतुरेकः ॥९॥

1922 वियुज्यतासौ भवता च यस्मिन्
क्षणे सखेदं विवशा सखी मे ।
स दग्धबिम्बः स्मरबन्धुरेको
दिधक्षुरेनामुदियाय चन्द्रः ॥१०॥

1923 त्वया विलुप्तावसरो नताङ्ग्याः
शरैः शरीरं कृशतां नयद्भिः ।
भिनत्ति तस्या निशितैरनङ्गः
क्षतिस्तु मे चेतसि गाढगुर्वी ॥११॥

---

१. C आबद्धकोपावमनोभवेऽपि ।  २. A, C विरहत्वमेव ।

1924 विनिष्पतन्तः शलभाः प्रदीप-
शिखामिवाभ्युज्ज्वलचारुकान्तिम् ।
अकम्पयन् दग्धदशाश्रयां तां
स्मरेषवः संभृतपक्ष्मशोभाः ॥१२॥

1925 अन्तर्वियोगज्वलनोष्मताप-
परीयमाणैरिव जाततृष्णैः ।
निपीयते मुग्धदृशोऽधराग्र-
रसोऽधुना निःश्वसितप्रबन्धैः ॥१३॥

1926 निशासु विन्यस्तमरीचिदण्ड-
मृणालनालेन शरीरयष्टौ ।
तुषारभासापि निपीयमान-
लावण्यतोयेव विभाव्यतेऽसौ ॥१४॥

1927 लावण्यलक्ष्म्या मणिपारिहार्य[1]
रूपामृतांशोः परिवेषचक्रम् ।
न भाति [2]साकल्पकशल्यविद्धा-
मृणालवल्लीवलयं वहन्ती ॥१५॥

1928 कुतूहलेनेव कुचद्वयस्य
मध्येऽवकाशाधिगमाय तन्वी ।
सखीकरन्यस्तमृणालनाल-
सूत्रैः परीतं हृदयं बिभर्ति ॥१६॥

1929 रूपं वहन्ती हरति स्म यूनां
या चित्तवृत्तिं शुभलक्षणाढ्या ।
अवैमि तत्पादतलस्थमेव
झषाङ्कमाविष्कृतचारुशोभम् ॥१७॥

---

१. B कटक । २. B कामकृतास्वाथ्य ।

1930　न निष्ठुरत्वं हृदयं वियोगे
　　न सौकुमार्यं च बिभर्ति तस्याः ।
[1]विभिद्यमानं स्मरमार्गणैर्य-
　　न्न दार्ढ्यमाप्नोति न [2]दर्शिते वा ॥१८॥

1931　निशागमे मन्दिररत्नभित्ति-
　　च्छायागतेनार्द्रतया सखी मे ।
अनामयप्रश्नविधित्सयेव
　　निषेव्यतेऽसौ शिशिरत्विषारात् ॥१९॥

1932　उपोढरागैः प्रतिबद्धखेद-
　　मालोकमार्गं दयितां नयद्भिः ।
गृहीतचित्तैः क्रियते कृशाङ्ग्याः
　　सखीजनस्यानुकृतिर्विकल्पैः ॥२०॥

1933　स्थूलाश्रुधारापतनानुबन्ध-
　　प्रमृष्टिसञ्जातभियेव तन्व्याः ।
गण्डार्पिते सम्प्रति पाणिपद्मे
　　न भाति लग्नागुरुपत्रवल्ली ॥२१॥

1934　विधूयते सा निपतद्द्विरेफ-
　　कल्माषिताभिर्नवमञ्जरीभिः ।
स्मरेषुभिर्धूर्जटिलोचनाग्नि-
　　शिखावदग्धाभिरिवेक्षिताभिः ॥२२॥

1935　संधुक्षणायेव [3]झषायकूल-
　　नाडिन्धमेनोग्रवियोगवह्नेः ।
न्यस्ता शरीरे बिसदण्डखण्ड-
　　नाडीं नतभ्रूः सरलां बिभर्ति ॥२३॥

---

१. C विभिद्यमाने ।　　२. C शीर्यते वा ।
३. A, C झषावकूल for झषायकूल ।

1936 त्वद्विप्रयोगानलदाहतप्ते
म्लानीकृताम्भोरुहिणी पलाशे ।
अच्छिन्नपाताः कुचकुम्भपृष्ठे
तस्याश्छमित्यश्रुकणाः पतन्ति ॥२४॥

1937 क्रोडेन सा केतुशिखाग्रलग्न-
मिवानुरागान्मकरं स्मरस्य ।
निशासु लक्ष्मोद्वहता तुषार-
मरीचिना दग्धतुषारयष्टिः[1] ॥२५॥

1938 ललाटपट्टाम्बरचन्द्रलेखां
लावण्यरत्नाकरफेनराजिम् ।
ललाटिकां चन्दनपङ्कदिग्धां
कन्दर्पलीलाकदलीं बिभर्ति ॥२६॥ युगलकम्

1939 सचन्दनास्तद्धृदये सखीभि-
र्मुहुर्व्यधीयन्त शमाय हस्ताः ।
विनिर्गलत्स्वच्छनखांशुतोय-
धाराप्रणालीसरलाङ्गुलीकाः ॥२७॥

1940 निशासु तस्याः प्रतिबिम्बमिन्दो-
रलक्ष्यत क्षामकपोलभागे ।
लक्ष्मोद्वहत्तच्छयनीकृतैक-
[2]हस्ताङ्गुलिश्यामकिणायमानम् ॥२८॥

1941 सन्ताप्यमाना विरहानलेन
शशाङ्कलेखारुचिरा सखीनाम् ।
तस्यास्तनुः स्वेदजलच्छलेन
विलीयमानेव तनोति खेदम् ॥२९॥

---

१. C शरीरयष्टिः for तुषारयष्टिः ।  २. C हस्ताङ्गुलिन्यासकिणायमानम् ।

1942 विभाव्यते मौक्तिकहारयष्ट्या
वियोगवह्नेः प्रशमाय सुभ्रूः ।
निजप्रभाचन्दनवारिवर्षैः
सख्येव संसिक्तकृशाङ्गलेखा ॥३०॥

1943 विनिद्रनीलोत्पलपुण्डरीक-
मृणालवल्लीवलयान्विता सा ।
धत्ते दशामश्रुजलावकीर्णा-
मुद्यानवापीमिव मन्मथस्य ॥३१॥

1944 विकल्पजालाकुलितं तदीयं
चेतः परिभ्राम्यति निर्व्यवस्थम् ।
विनिष्पतन्मन्मथमार्गणौघ-
पतत्त्रवातैरिव नुद्यमानम् ॥३२॥

1945 धूतोष्मभिः श्वाससमीरपातै-
र्निर्दग्धमेवोष्ठदलं तयाद्य ।
न दह्यते यावदलं शरीर-
मुपैहि तां तावदपास्य मानम् ॥३३॥

1946 विडम्बितापूर्वविनिद्रपद्म-
विचुम्बनालग्नमृगाङ्कबिम्बम् ।
न भाति चिन्ताहितशून्यदृष्टि-
करारविन्दे वदनं तदीयम् ॥३४॥

1947 मृणालिनी चन्दनपङ्कदिग्ध-
ललाटिका केतकोर्मिवक्त्रा ।
प्रसन्नलावण्यजला [1]विपाण्डु-
पयोधरा श्रीरिव [2]शारदी सा ॥३५॥

---

१. B, C विपाण्डुं for विपाण्डु ।  २. C शारदीमाम् for शारदी सा ।

1948 बिम्बायमानाधररागलक्ष्मी-
कदर्थनाखेदभयादिवाच्छाम् ।
अश्रुश्रुतिं जर्जरतां नयद्भिः
श्वासानिलैर्दत्तकुचाग्रकम्पा ॥३६॥

1949 विगर्ह्यमाणातनुविप्रयोग-
कृशानुसन्तापदशेव दूरम् ।
रुतेन भृङ्गैः कृतशोषपुष्प-
शय्यामधुः स्यन्दविवृद्धखेदैः ॥३७॥

1950 बिभर्ति बिम्बागतचन्द्रबिम्ब-
संस्पर्शशीताततयेव नक्तम् ।
गण्डस्थलीमुत्पलकामनेक-
कन्दर्पसङ्कल्पवशान्नतभ्रूः ॥३८॥ चक्कलकम्

1951 मूर्च्छानुबन्धश्वसितप्रलाप-
प्रजागरोत्कम्पविजृम्भणानि ।
फलान्यवाप्तानि तया सुखार्थ-
मात्मार्पणं त्वय्यपि नाम कृत्वा ॥३९॥

1952 [1]व्यर्थो हारो मृणालैश्चितमपि, शयनं धिक्किमम्भोरुहैर्वा
कर्पूरं दूर एव क्षिपत, हिमशिलाशर्कराभिः किमाभिः ।
मिथ्या मैवातिखेदं भजति, गुरुतरः कोऽपि दाहज्वरोऽस्या
इत्यन्योन्यं तदाल्यः सुभग परिगदन्त्यश्रुपूरप्लुताक्ष्यः ॥४०॥

1953 तदेहि यावन्न भजत्यवाच्यां
दशां सखी मे तव विप्रयोगात् ।
सञ्चारिकाया वचसेति दूर-
मुत्साहितः सत्वरमेत्य कश्चित् ॥४१॥

---

१. This श्लोक appears to be an interpolation ।

1954　उपास्यमानां शिशिरोपचार-
व्यग्रात्मना तत्र सखीजनेन ।
निकेतनान्तः कदलीगृहस्य
गर्भे निषण्णां दयितामपश्यत् ॥४२॥

1955　शय्यीकृतं गण्डतलस्य बाष्प-
धाराञ्जनश्यामलितं कराग्रम् ।
जृम्भापिधाने वदनस्य दत्तं
श्वासैरिव प्लुष्टमुपादधानम् ॥४३॥

1956　कुचद्वयेनामलमौक्तिकांशु-
प्लुतां वहन्तीमधिकोन्नतेन ।
अन्तर्वियोगानलतीव्रताप-
विलीयमानामिव हारयष्टिम् ॥४४॥

1657　शरीकृतैरेभिरनन्यजन्मा
भिनत्ति चेतांसि वियोगिनीनाम् ।
इतीव पुष्पाण्युपकारभूमौ
[1]संशोधयन्तीं श्वसितोष्णवातैः ॥४५॥

1958　धौताञ्जनैरश्रुकणैः पतद्भि-
रालक्ष्यमाणाक्षरपङ्क्तिशोभैः ।
अनङ्गसंदेशविधित्सयेव
कल्माषयन्तीं श्वसितोष्णवातैः ॥४६॥

1959　चन्द्रोदयेनाहितवृद्धियोगां
विकीर्णमुक्ताफलचूर्णराशिम् ।
वेलामिवाक्रान्तनवप्रवालां
दशां वहन्तीं मकरध्वजस्य ॥४७॥

---

१. A संशोधयन्ती for संशोषयन्तीं ।

1960 अन्तः पतन्मन्मथपुष्पबाण-
पक्षानिलेनेव कृताभिवृद्धीन् ।
विकम्पितोत्तुङ्गपयोधराग्रा-
न्निःश्वासदण्डान्मुहुरुत्सृजन्तीम् ॥४८॥

1961 सुगन्धिनिःश्वासरसात्पतद्भि-
स्तदूष्मदाहाहितगाढखेदैः ।
न सेव्यमानं न च मुच्यमानं
शिलीमुखैराननमुद्वहन्तीम् ॥४९॥

1962 अत्युष्णबाष्पाम्बुकणप्रतान-
विदाहभीत्येव विकम्पमानम् ।
बिम्बाधरं निःश्वसितानुबन्ध-
नितान्तपारिप्लवमुद्वहन्तीम् ॥५०॥

1963 मुक्ताफलत्वं निजकर्णशुक्ति-
पातेन बाष्पाम्बुकणैरिवाप्तैः ।
सलीलमुत्तानितवक्त्रचन्द्रां
सितेऽब्जमालाशयने निषण्णाम् ॥५१॥

1964 सुगन्धिनिःश्वासरसेन लीनं
तदूष्मदाहेऽपि पुरो भ्रमन्तम् ।
विनिष्पतद्भिर्दशनांशुतोयै-
र्निर्वापयन्तीमिव भृङ्गयूथम् ॥५२॥

1965 सखीलतापङ्कजजालशय्या-
[1]विधूतधूलिष्कपिलैः सदेशे ।
निःश्वासवातैर्हृदयस्थगाढ[2]-
रागोपलिप्तैरिव धूनयन्तीम् ॥५३॥

---

१. A, C वितधूलीकपिलैः, B कपिलैः समीपे ।
२. A, B हृदयभ्यगाढ for हृदयस्थगाढ ।

1966　स्तनस्रजा सार्धमवाप्तशोषां[1]
　　साकं गलन्तीं नयनाम्बुपूरैः ।
दग्धां सहालीजनचित्तवृत्त्या
　　वियोगसन्तापदशानुबन्धैः ॥५४॥

1967　सभ्रूलताषट्पदमालयौष्ठ-
　　दलाभिरामां श्रियमुद्वहन्त्या ।
अवाप्तवक्त्राश्रययारविन्द-
　　कान्त्या [2]प्रतीपं [3]विजितेन्दुविम्बाम् ॥५५॥

1968　पयोधराग्रप्रतिफाललीला-
　　समुच्छ्वसच्चन्दनचूर्णदिग्धैः ।
अत्युष्णदीर्घैः श्वसितानुबन्धै-
　　रुत्क्षेपनिर्हास कदर्थितास्याम् ॥५६॥

1969　मा स्मोद्गमन्निःश्वसितेन सार्धं-
　　वियोगदुःखादसवोऽभितप्ताः ।
इतीव सञ्चिन्तयताशु बाष्प-
　　स्तम्भेन संरम्य निरुद्धकण्ठाम् ॥५७॥

1970　समुद्वहन्तीं कृशतातिनिम्न-
　　गण्डस्थलीघूर्णनमन्दवेगान् ।
आवेगसंफुल्लपुटाग्रनासा-
　　मार्गागतांल्लोचनवारिबिन्दून् ॥५८॥

1971　चिन्तानबद्धस्फुटशून्यदृष्टि-
　　करार्पितक्षामकपोलभागम् ।
मुखं दधानां विनिकुञ्चितभ्रू-
　　लेखापरिष्वक्तललाटलेखम् ॥५९॥

---

१. A....अवाप्तशोभाम् ।　२. A प्रदीपम् ।　३. A, C विजितेन्दुबिम्बम् ।

1972 नासापथेनोपगतां निरुग्ण-
मुक्ताफलक्षोदपरागशीताम् ।
अन्तर्वियोगानलतापतृष्णा-
वशादिवाश्रुस्रुतिमापिबन्तीम् ॥६०॥

1973 उपेक्षितां विभ्रमषट्पदौघैः
पर्यस्तदोर्दण्डमृणालदण्डाम् ।
स्मरद्विपस्याम्बुजिनीमिवाति-
निशातनाराचविषाणमग्नाम् ॥६१॥ कुलकम्

1974 सम्भ्रम्य कण्टकितगात्रलता सलील-
मावेद्यमानदयितागमना कथञ्चित् ।
आनन्दबाष्पजलबिन्दुगुरूकृताग्र-
पक्ष्मोदमीमिलदथो नयनद्वयं सा ॥६२॥

1975 श्वासानिलोष्मगुरुदाहविधूसरस्य
निर्वापणं सपदि कर्तुमिवाधरस्य ।
शीतान्मुमोच मुहुरश्रुकणान्विलम्बि-
पातानसौ कुटिलपक्ष्मशिखाग्रलग्नान् ॥६३॥

1976 तस्यास्तदा रुचिरचन्दनवारिपङ्क-
चर्चाकृतामिव विधूसरतां प्रमार्ष्टुम् ।
स्वेदाम्भसि प्लुतिसमुन्नमितप्रहर्ष-
रोमाञ्चराजनि ममज्ज शरीरयष्टिः ॥६४॥

1977 किं कार्यमत्र भवता दयितागमेऽपि
सन्तापशोषितरसेन शरीरयष्टौ ।
तन्व्या इतीव घनचन्दनपङ्कलेपो
रोमाञ्चराजिभिरनुद्यत निर्गताभिः ॥६५॥

1978 प्रेयस्युपेयुषि ससंभ्रममश्रुवारि
यच्चक्षुषोः परिममार्ज सुखोत्सुकासौ ।
विस्पष्टमेव पुनरञ्जनपङ्कदिग्ध-
पर्यन्तता रुदितमाह तयोः स्म तस्याः ॥६६॥

1979 रोमाञ्चभिन्ननवचन्दनपङ्कचर्चं
भ्रश्यन्मृणालशकलं विचलज्जलार्द्रम् ।
विस्रस्तहारमुपजग्मुषि सा प्रियेऽथ
सार्धं मुमोच दशयाम्बुजपत्त्रशय्याम् ॥६७॥

1980 विच्छिद्यमानविरहानलतापशुष्क-
सूत्रा तदा दयितगाढनिगूहनेन ।
मुक्ताफलान्यमलहारलता मुमोच
घर्मोदबिन्दुपटलानि तनुश्च तन्व्याः ॥६८॥

1981 मध्यस्य तानवभृतो दयितादलब्ध-
स्पर्शत्वमुन्नतिवशाद्वत मावयोर्भूत् ।
चक्रीकृतौ तदुपगूहवशादितीव
तन्व्यास्तनौ सपदि वामनतामधत्ताम् ॥६९॥

1982 रोमाञ्चपीनतनुतां दधतोः क्रमेण
संप्राप्तयोस्तरुणयोरथ कातरत्वम् ।
आलिङ्गनेन चिरसंभृतविप्रयोग-
तप्ताखिलाङ्गघटना सुदृढा बभूव ॥७०॥

1983 इत्थं दूतीमधुरवचनाकर्णनादागतानां
श्लाघ्यः कालो विपुलपुलकालङ्कृतिः कोऽप्यपूर्वः ।
यूनामासीदतनुविरहोपप्लवक्लान्तकान्ता-
गाढाश्लेषश्लथभरगलत्तारररत्नाङ्कहारः ॥७१॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवे राजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
*महाकाव्ये दूतीसङ्कल्पवर्णनम् नाम पञ्चविंशः सर्गः ।

---

## षड्विंशः सर्गः

1984 इत्यागताः कलितचन्द्रकलाप्रकाश-
कर्पूर-वास-सुरभीण्यनुकूलवृत्तीः ।
प्रेमामृतार्द्रमनसो दयिता मधूनि
नीलारविन्दशबलानि वधूरपीप्यन् ॥१॥

1985 उद्ग्रीवराजतवरावरवीसलील-
हंसी-सनाथ-शुचि-[१]शुक्तिशतैकदेशा ।
आपानभूमिरमराद्रितरङ्गिणीव
लक्ष्मीं तदातनुत काञ्चनवालुकाभिः[२] ॥२॥

1986 इन्दोः कला इव विकासवतीः पृथक्त्व-
मभ्यागता निपतिताः कथमप्यथोर्व्याम् ।
शुक्तिर्जना मणिमयीर्जगृहुर्विधूत-
रोषा पिपावयिषवोऽथ[३]मधूनि योषाः ॥३॥

1987 तासामदृष्टचर-पार्वण-चन्द्रमुक्त-
निद्रारविन्द-घटना-सदृशत्वमाप्ताः ।
लीला-गृहीत-मधुपूर-पिशङ्गरत्न-
[४]कोशाः कराः श्रियमथ प्रथयांबभूवुः ॥४॥

1988 प्रत्यग्रशोणमणिशुक्तितलेन शीधु-
धारां वधूः [५]करकतो मधुराभिरामाम् ।
जग्राह पाटलपलाशमुखेन बाल-
सूर्यांशुराजिमिव पङ्कजिनी पतन्तीम् ॥५॥

---

१. B पानपात्र (footnotes) । २. मद्यपानी (footnotes) ।
३. A, C वधूनि for मधूनि । ४. A, B कोशाः (चषकाः) ।
५. मधुकलशतः (footnotes) ।

1989　किं कार्यमत्र भवता विजहीहि चाप-
मित्यभ्यधादिव रुतैर्मदनं द्विरेफः ।
रङ्गत्तरङ्गतरलोत्पलगर्भरत्न[1]-
पारीविकीर्ण-सहकार-सहर्षचेताः ॥६॥

1990　उक्षिप्यमाण-[2]कनकावर्विवि कीर्ण-
मैरेयरेचकरयाकुलरत्नकोषैः ।
स्त्रीणां विकासिनवतामरसाभिराम-
[3]रूपैरतामि सुकुमारतया कराग्रैः ॥७॥

1991　सम्पाद्यते भृशमनेन [4]ममावतंस-
च्छायेति रत्नकरकान्निपतन् रमण्याः ।
व्यावृत्तिभिश्चषकमध्यजुषश्चकार
शीधुः प्रदक्षणमिव क्षणमुत्पलस्य ॥८॥

1992　अस्या जितोऽपि निरवद्यमुखेन्दुना त्वं
तिष्ठन् पुरो न किमपत्रपसे सदोषः ।
इत्युत्पले कलरवैरिव हुं चकार
भृङ्गः सशीधुचषकप्रतिविम्बचन्द्रम् ॥९॥

1993　पीतः [5]कलङ्ककलुषः सहशीधुनाय-
मिन्दुर्मनो मलिनयिष्यति मा तवाच्छम् ।
इत्थं प्रपञ्चचतुरस्तरुणः पिबन्तीं
मुग्धां करेण परिहासरसो न्यरौत्सीत् ॥१०॥

---

१. B पानपात्र (footnotes) ।　　२. A कानकार्घं for कनकाव ।

३. A, C कूपैरतामि for रूपैरतामि ।

४. C समावतेसच्छायेति for ममावतंसच्छायेति ।

५. कलङ्कवपुषः for कलङ्ककलुषः ।

1994 शोभां बभार मकरन्दरसायमान-
मैरेयगर्भमणिकांस्यकरालकोषम्[1] ।
वामभ्रुवां प्रकृतिताम्रलताभिराम-
दीर्घाङ्गुलीदलकुलं करपुण्डरीकम् ॥११॥

1995 आलक्ष्य लक्ष्ममलिनां प्रतिमागतस्य
मूर्तिं तुषारमहसः परिमाष्टुमिच्छुः ।
काचित्कराङ्गुलितरङ्गितशीधुपूर-
[2]मायस्यति स्म चषके परमार्थमुग्धा ॥१२॥

1996 विन्यस्तशीतलरजःसुरभिष्वमन्द-
मिन्दीवराणि चषकेषु सलीलमूर्ध्वम् ।
अप्लोषत भ्रमरपक्षमरुद्विधूत-
पक्ष्मावलीललितधूलिलघूनि तासाम् ॥१३॥

1997 विस्तारशालिमधुराश्चितपक्ष्मशोभ-
मभ्यर्णवर्तिनि लसन्मणिपानपात्रे ।
भृङ्गः पपौ विकचमुत्पलमाननेन
[3]दृष्ट्वा पुनर्मधुनि विम्बितमक्षि नार्याः[4] ॥१४॥

1998 निःश्वास-वात-धुत शीधुतरङ्गरङ्गि
तस्थौ प्रसारित-विलोलदलं तरुण्याः ।
तत्सौरभातिशयवासनमात्ममूर्त[5]
[6]राधातुमुत्पलमिवासवभाजनाग्रे ॥१५॥

---

१. B चषक एव कोशः कर्णिका (footnotes) ।

२. A मायास्यति, B, C आयच्छति स्म ।

३. C दृष्ट्या । ४. C मक्षिना यः ।

५. A, C ''''मात्ममूर्ते'''' । ६. A''''रादातुमुत्पलमिव ।

1999 नारीविनिश्वसितपूतमधूर्मिपूर-
पारिप्लवः प्रपतितः प्रतिमापदेशात् ।
आत्मानमिन्दुरसकृत्परिवृत्य रत्न-
पात्र्यामधावदिव लग्नमलं विशुद्ध्यै ॥१६॥

2000 त्वत्सन्निधिग्लपितशोभतया मयात्र
कष्टं वतंसपरभागरुचिर्न लब्धा ।
इत्यभ्यधादिव शिलीमुखशिक्षितेन
नीलोत्पलं चषकबिम्बितमक्षि वध्वाः ॥१७॥

2001 अन्याभिधाग्रहणबद्धरुषोऽभिभर्तृ
पात्रीं विलक्ष्यहसितद्युतिभिस्तरुण्याः ।
[1]आप्लावितेन विबभौ प्रतिबिम्बवर्ति-
शीधुर्द्रवीकृतमृगाङ्क[2]रसच्छटाभिः ॥१८॥

2002 आवर्जिते सपदि यत्र तरङ्गभङ्ग-
दोलाधिरोहरभसात्सहसोदनं[3] सीत् ।
निःशेषिते मधुनि तत्र शुचेव जात-
[4]सम्प्लोषमुत्पलमधोमुखतामयासीत् ॥१९॥

2003 विस्पष्टलक्ष्मणि सशीधुतरङ्गरत्न-
पात्रीतलप्रतिमिते शशिनि प्रियायाः ।
गण्डस्थले च विकचोत्पलकर्णपूर-
[5]कल्माषभासि विभिदे[6] न जनस्य दृष्टिः ॥२०॥

---

१. A, C आल्पावितेव विबभौ ।  २. A, C omit रस ।
३. C सहमोदने सीत् ।  ४. A, B, C सङ्कोच for संप्लोष ।
५. A, C कल्माषिभासि ।  ६. बिभिदेव for बिभिदे न ।

2004 प्राप्तावधूतकमलच्छविचन्द्रमूर्ति-
पादावमर्शशुभगन्धषकालवाले ।
लक्ष्मीमशोकविटपीव विकासिताम्र-
वीचिच्छटाकिसलयो विदधार शीधुः ॥२१॥

2005 आलिङ्गिता प्रसृतरश्मिभुजं [1]मसार-
कोषान्तरप्रतिमितेन तुषारभासा ।
प्रीत्या विकासिनवनीलसरोजचक्षुः
[2]सोदर्यसङ्गनितयेव [3]सुरा बभूव ॥२२॥

2006 किञ्चिन्निपीय [4]चषकात्तरलायताक्ष्या
लब्धौष्ठचुम्बनसुखः परिशेषितः सन् ।
शीधुर्मुदैव[5] [6]सुरभिश्वसितावधूत-
पर्युच्छ्वसत्सरलवीचिभुजो[7] ननर्त ॥२३॥

2007 निःशेषितेऽथ मधुनि स्फटिकाच्छशुक्ति-
गर्भादुदैयत शुचिप्रतिमापदेशात् ।
संवादितारकनवोत्पलशोभिनोऽत्रि[8]
नेत्राददादिव [9]तुषारकरोन भूयः[10] ॥२४॥

2008 सीमन्तिनीवदनपङ्कजदीयमान-
गण्डूषशीधुनि [11]रसाद्धृदयालवाले ।
पुष्पास्त्रबाणवकुलः कमितुर्बभार
पर्युच्छ्वसन्मुकुलदृष्टिमनोहरत्वम् ॥२५॥

---

१. B reads मसारकोषान्तरे
२. A, B सौदर्य ।
३. B पुरा for सूरा । A, C left blank ।
४. A चषकोत्तरलायताल्पा ।
५. A, C शीधुर्मुदेव ।
६. सुरभिश्च सितावधुत ।
७. A, C सरलवीचि भुवाम् ।
८. A, C शोभिनेऽत्रि ।
९. A मुषाणकरेण ।
१०. C भूवः ।
११. C चिरं हृदयालवाले ।

2009 [1]नालक्ष्यतात्ममणिभाजनमध्यगं य-
त्सावर्ण्यतः स्फुटमलं प्रतिमेन्दुबिम्बम् ।
उत्क्षिप्यमाणमिव सोत्पलसिन्धुवार-
पुष्पावतंसरुचि तन्मधुनाविरासीत् ॥२६॥

2010 वीक्ष्य स्फुरत्सरसशीधुनि रत्नशुक्ति-
गर्भेऽभिलक्ष्य हरिणं प्रतिबिम्बमिन्दोः ।
आलीयते स्म मधुपो मधुपानलोभ-
लीनालिजालशबलस्तबकाभिशंसी[2] ॥२७॥

2011 भाति स्म रत्नचषके शशिनो निषण्ण-
मीषन्निपीतपरिशेषितशीधुगर्भे ।
तद्वीचिधौतवनिताधरबिम्बलग्न-
ताम्बूलकृष्णिकमिव स्फुटलक्ष्म बिम्बम् ॥२८॥

2012 आवर्जितस्य मधुनोऽरुणरत्नशुक्ति-
गर्भेंशुजालभृति काञ्चनकर्करीभिः ।
पूरोऽन्वमीयत मुखानिलघूर्णमान-
विस्तारितच्छदनवोत्पलदर्शनेन ॥२९॥

2013 कोषोदरप्रतिमितः शशभृत्पुरंध्रि-
हासांशुविच्छुरितपाण्डुरमध्यबिम्बः ।
निर्मृष्टलाञ्छनमलः श्रियमाससाद
सोदर्यया मदिरयेव तरङ्गहस्तैः ॥३०॥

2014 सौगन्ध्यमाप मधु रत्नकरालकोष-
विन्यस्तमुत्पलवतंसविकासशारम्[3] ।
प्रत्यग्रलग्नसहकारकृताधिवास-
मुच्छ्वासभिन्नमुत वामदृशः पिबन्त्याः ॥३१॥

---

१. A नालक्ष्यतार्कमणि ।   २. A स्तबकाभिशङ्की ।
३. C विकासमानम् for विकासशारम् ।

2015 आविर्भवन्मदनदोहदजृम्भमाण-
निःश्वासमारुतविकम्पिपयोधरश्रीः ।
विश्रम्य कापि कपिशं पिबति स्म चन्द्र-
बिम्बावतंसकुसुमस्तबकं नतभ्रूः[1] ॥३२॥

2016 सर्पन्निरङ्कुशतयारुणरागसान्द्र-
सिन्दूररञ्जितमुखो निरपेक्षवृत्तिः ।
वामभ्रुवां परिणमन्नयनेषु धैर्य-
वप्राभिघातमकरोन्मदगन्धहस्ती ॥३३॥

2017 छायागतस्फुरितचन्द्रकलातमाल-
पत्त्राभिराममसितोत्पलचारुनेत्रम् ।
काचिन्मदश्रिय इवाननमुद्विकासि
वींचिभ्रु रत्नचषकं विबभौ वहन्ती ॥३४॥

2018 निःश्वासधूततरलोत्पलयोपलक्ष्य
विस्तारया दयितपीतविमुक्तयान्या ।
शोभां बभार मधुपाटलयाच्छरत्न-
शुक्त्या वधूर्ललिततारकया दृशा च ॥३५॥

2019 निःशेषितासवमपि प्रतिमागतेन्दु-
बिम्बाहितामिव दधद्गुरुतां तदानीम् ।
आविर्भवन्मदविलोलदृशः कराग्रा-
दस्रंसत स्फटिकभाजनमस्फुटोक्ति ॥३६॥

2020 वामभ्रुवामतनुनूतनपद्मराग-
खण्डास्पदार्कमणिभाजननिर्विशेषम् ।
भाति स्म रूढमदिरामदगाढराग-
गण्डस्थलप्रतिमितं शिशिरांशुबिम्बम् ॥३७॥

---

१. A, C···स्तबकेन नतभ्रूः ।

2021 निःश्वासमारुतहृतप्रतिमानिषण्ण
सञ्चारिषट्चरणचित्रकबिन्दुशारैः ।
शोभां कुशेशयदृशो बिभरांबभूवु-
रुज्जृम्भमाणमदपल्लवितैः कपोलैः ॥३८॥

2022 आघूर्णमाननतपक्ष्मदृशो मदेन
संवादितां तदनु [1]गीतविधेर्दधानः ।
अक्ष्णोः कपोलफलकेऽधरपल्लवे च
त्रिस्थानशोभितगुणो विचकास रागः ॥३९॥

2023 गण्डस्थली कपिशपानपरम्पराभि-
रारूढरागमदताम्ररुचिस्तरुण्याः ।
आवृत्तिचुम्बनकृतोत्सवल्लभौष्ठ-
ताम्बूलरागपरिणामवशादिवासीत् ॥४०॥

2024 बिम्बाधराञ्चितरुचा मधुना तदाथ
पीतेन पक्ष्मलदृशोऽच्छकपोलभागे ।
आसीन्मदः प्रकटितारुणराग एव
कार्यं हि कारणसदृग्भवतीति सत्यम् ॥४१॥

2025 पश्यामि तावदधुना मदरागताम्रः
पुष्णाति कां श्रियमयं ललनाननेन्दुः ।
इत्युद्विकासमुदमीमिलदाशु रत्न-
कोषः सकौतुक इवोत्पलमक्षिशोभम् ॥४२॥

2026 संवादिषट्चरणतारकपक्ष्मपङ्क्ति[2]-
लक्ष्मीधरां धवलिमानमिवोद्गिरन्तीम् ।
तन्व्या दृशं मधुमदो मुकुलीचकार
बालातपः कुमुदिनीमिव गाढरागः ॥४३॥

---

१. A गीतविधिर्दधाना: for गीतविधेर्दधाना: ।
२. A, B, C तारकपत्रपङ्क्ति for तारकपक्ष्मपङ्क्ति ।

2027 प्रेयोविलोकनरसाद्विचकास पीत-
शीधोः शनैर्मदभरान्मदिरेक्षणायाः ।
पक्ष्माग्रलग्ननवकज्जलधूलिजाल-
[1]भारातिगौरववशादिव नेत्रयुग्मम् ॥४४॥

2028 शोभां बभार परिणामविरूढकान्त-
दन्तव्रणः सपदि पीतसुरासवायाः ।
चारुभ्रुवश्चषकबिम्बितचन्द्रबिम्ब-
मध्यावलग्नमलबिन्दुरिवाधरौष्ठः ॥४५॥

2029 प्राप्तस्य मन्मथशिलीमुखतामभीक्ष्ण-
मक्ष्णश्च [2]विभ्रमवतीकरपुण्डरीकम् ।
संधानकारणवशादिव पक्ष्मपुङ्ख-
भागाग्रकोटिपरिमर्शविलोलमासीत् ॥४६॥

2030 अभ्युल्लसत्कनककुण्डलपद्मराग-
धामारुणीकृतकपोलतले मुखेन्दौ ।
व्यक्तिं जगाम न नितम्बवतीजनस्य
रूढोऽपि सान्द्रमदिरामदताम्रराग: ॥४७॥

2031 अक्ष्णोर्बभूव यदरालकरालपक्ष्म-
लक्ष्मीभृतोर्मधुमदेन विपाटलत्वम् ।
[3]आह्नुतवत्यभिमुखे प्रतिपक्षवर्ति-
नाम्नान्वबुध्यत तदेव रुषा तरुण्याः ॥४८॥

2032 उत्तंसपङ्कजविकासविलासमोष-
मेषोऽनपेक्ष्य मधुनः कुरुते मयूखैः ।
इत्थं रुषेव मदरागभरः पुरन्ध्रि-
गण्डस्थलप्रतिमितं शशिनं व्यरौत्सीत् ॥४९॥

---

१. A, B मारातिगौरवशात् । २. A, C विभ्रमवतां for विभ्रममवती ।
३. A, B, C आहूतवत्यभिहिते for आह्नुतवत्यभिमुखे ।

2033　अन्याभिधानपरुषे वचसि प्रियेण
　　कापीरिते सपदि मुक्तमदा समन्युः ।
स्थूलाश्रुबिन्दुपटलैरिव धाव्यमान-
　　रागं कपोलतलमिन्दुसितं बभार ॥५०॥

2034　आरूढगाढमदिरामदसान्द्रराग-
　　मादत्त [1]ताम्ररुचिगण्डतलं तरुण्याः ।
प्रातः समुन्मिषदनूरुविकीर्णधाम-
　　निर्धाव्यमानशशिबिम्बविडम्बकत्वम् ॥५१॥

2035　रामाजनस्य मधुपानपरम्पराभि-
　　रुच्छे कपोलफलके मदरागलक्ष्मीः ।
उद्भिन्नबालकुटिलाङ्गुलिचक्रवाल-
　　संवादिनूतननखक्षतिराविरासीत् ॥५२॥

2036　काचित्तुषारमहसः प्रतिमानिषण्ण-
　　[2]मभ्यर्णवर्ति मणिकुट्टिमसीम्नि बिम्बम् ।
पीतासवाच्छमणिकोशधिया सलील-
　　मादित्सुरुन्मदतया जहसे सखीभिः ॥५३॥

2037　अन्या कराम्बुरुहवर्तिनि पीतशीधौ
　　[3]विस्तीर्णरत्नचषके स्मृतिविप्रमोषात् ।
उज्जृम्भमाणमदघूर्णितनेत्रमात्म-
　　वक्त्रेन्दुमच्छमणितदर्पण इत्यपश्यत् ॥४॥

2038　मत्ता तदाभिनवपल्लवपाटलाभि-
　　रन्यापराधगणमक्रममङ्गुलीभिः ।
[3]स्मेराननस्य पुरतो गणयाञ्चकार
　　भर्तुर्मदस्खलितमन्मथमन्थरोक्तिः ॥५५॥

---

१. A ताम्ररुचिगण्डतले for ताम्ररुचिगण्डतलम् ।

२. A सद्यः भवन्ति for अभ्यर्णवर्ति ।

३. B अन्तर्विचित्र for अभ्यर्णवर्ति ।

2039 सख्या पुरो विधृतमुन्नतपद्मकोष[1]-
हस्तारुणाङ्गुलिदलाग्रकृतप्रतिष्ठम् ।
आशङ्कते स्म विगलत्परिपीतशेष-
मैरेयधारमपरा कुरुविन्दकोषम् ॥५६॥

2040 रक्तारविन्ददलकोमल-हस्तकान्ति-
पिञ्जीकृतां मधुयुतेति विशङ्कमाना ।
पीतासवामपि मृदुः शुचिरत्नशुक्ति-
मन्या प्रियेण समदा जहसेऽर्पयन्ती ॥५७॥

2041 घूर्णद्दृशां रभसपीतपरिस्रुतोऽपि
दूराधिरोहविकसन्मदमन्थराणाम् ।
वामभ्रुवामबिभरुश्चषकान् कथंचि-
दिन्दीवराहितगरिम्ण इवाग्रहस्ताः ॥५८॥

2042 गण्डस्थली मृगदृशो मधुपानलीला-
विस्रम्भसंभृत-मदारुणता तथापत् ।
तच्छायया श्रवणवर्तिपरीतमूढ-
रक्ताब्जकान्ति शितिपङ्करुहं यथाभूत् ॥५९॥

2043 [2]....................................
विश्लिष्टभेदमदिरामदताम्ररागौ ।
गण्डावधोमुखपृथग्गतपद्मराग-
रत्नोत्पलोज्ज्वलसमुद्गकवाटशोभाम् ॥६०॥

---

१. B हस्तसंस्थानविशेषः ।

२. B fills the blank वामभ्रुवामदधता स्फटिकोपलाञ्छौ ।
A, C left blank ।

2044 व्यक्तिं जगाम मदरागभरेण दृष्टे-
रन्याभिधाग्रहणजो दयितेन रोषः।
निष्प्रन्धतारक [1]........भिन्यवेदि
स्पष्टं पुनर्मृगदृशो हृदये विषादः ॥६१॥

2045 पीतस्तुषारकिरणो मधुनैव सार्ध-
मन्तः प्रविश्य चषकप्रतिबिम्बवर्ती।
[2]मानान्धकारमभिमानवतीजनस्य
नूनं बिभेद यदसौ प्रससाद सद्यः ॥६२॥

2046 आरूढरागतरुमन्मथकम्पधूत-
संफुल्लशेखरशिखागलितैर्नताङ्ग्या।
उत्तुङ्गपीवरकुचप्रतिमानिषण्णः
प्रेयानिवाशु समभाव्यत पुष्पवर्षैः ॥६३॥

2047 क्षीणात्मनः प्रतिनिशं शशिनः क्रमेण
संभृत्य कान्तिमिव विश्वसृजा [3]निदिग्धाम्।
विभ्रत्यराजत मदेन पुरन्ध्रिगण्ड-
भित्तिः स्फुरत्पिचुलपल्लवपाटलश्रीः ॥६४॥

2048 रेजुः स्त्रियो मधुमदारुणगण्डभित्ति-
लग्नावतंसितविकासिशिरीषपुष्पाः।
आरूढपाकफलगोचरवर्तिमुग्ध-
कीराभिरन्वितगुणा नवदाडिमीभिः ॥६५॥

---

१. A, C left blank, B fills "तया सम"।

२. A reads मानान्धकारमभिधानवत।

३. उपचिताम् (footnotes)।

2049 आविर्भवन्मदनविभ्रमशुभ्रहार-
च्छेदांशवः [1]शशिरुचामभिनिष्पतन्तः ।
भान्ति स्म शीधुसमकालनिपीतरत्न-
पारीतलप्रतिमितेन्दुकलाभिरामाः ॥६६॥

2050 निःशेषितासवलघं प्रतिबिम्बवर्ति
शीतांशुमण्डलकृतातिभरामिवैका ।
हस्ताश्रयां गुरुममन्यत रत्नशुक्ति-
माविर्भवन्मधु-मदालसदेहयष्टिः ॥६७॥

2051 उद्दाममानहति चातुरतारतम्य-
भेदानुबन्धिमधुपानपरम्पराभिः ।
हस्ताश्रयं स्फटिकभाजनमञ्चिताक्ष्या-
श्चे तश्च निर्भरमनायितरां प्रसादम् ॥६८॥

2052 [2]दृष्टव्यलीकदयितोल्बणमन्युवेश-
लीलाविधूतशिरसोऽक्षिणगते विकासम् ।
तत्प्रेरणाहितनिजास्पदसंधिभङ्ग-[3]
भीत्येव कर्णकुसुमं सुदृशश्चकम्पे ॥६९॥

2053 आविर्भवन्मनसि दूरनिरस्यमान-
मानान्धकारविशदो मदनः पिबन्त्याः ।
सख्यान्वमीयत चकोरदृशोऽभिभर्तृ
विस्तारितच्छदनवोत्पलदर्शनेन ॥७०॥

2054 प्राप्यावतंसितमनोहरगन्धपुष्प-
लीनद्विरेफनवहृद्यमधुप्रसङ्गम् ।
श्यामालता इव [4]दधुर्दशनांशुपक्ष्म-
रम्यस्मितस्तवकविभ्रमपल्लवत्वम् ॥७१॥

---

१. B नारीणाम् (footnotes) । २. दृष्टं व्यलीकदयितो ।
३. C leaves "संधिभङ्ग" । ४. A, B मधुर्दशनांशपक्ष for दधुर्दशनांशुपक्ष्म ।

2055 प्रत्यक्षमन्ययुवतेः स्वकरोपनीत-
मैरेयगर्भचषकस्तरुणीमपीप्यत् ।
यन्नायको मदमवाप [1]यथा च तेन
पीतेन [न] स्मयवती मधुना तथासौ ॥७२॥

2056 अक्ष्णोर्विकारमुपपादयतावसाद-
मङ्गेषु चोत्पुलकपङ्क्तिषु भूयसोच्चैः ।
व्यक्तेतरीकृतगिराहितधूननेन
तन्व्या मदेन मदनेन च[2] न व्यभेदि ॥७३॥

2057 नेत्रद्वयं मधुमदेन विपाटलत्व-
माधत्त मन्थरिततारकमायताक्ष्याः ।
गन्धाकुलभ्रमरपक्षधुतावतंस
नीलाब्जपक्ष्मरजसेव [3]कृताभिघातम् ॥७४॥

2058 नालीयते स्म सुरभिश्वसितेऽवतंस
नीलोत्पले न चषके न च माल्यपुष्पे ।
तासां विकासिमदिरामदसान्द्रनिर्य-
दामोदसंपदुपनीतिरतिद्विरेफः[4] ॥७५॥

2059 आलोक एव दयितस्य बभूव बद्ध-
कम्पा तनुर्मृगदृशः पुलकोपरुद्धा ।
अन्तःस्थशीधुसमकालनिपीतकांस्य-
बिम्बागतेन्दुकृतशीतविजृम्भिकेव ॥७६॥

2060 मानावलेपभरसंभृतमप्युपोढ-[5]
नानाविधप्रियतमानुनयव्यवस्थम् ।
विस्तारितं हृदि नितम्बवतीजनेन
निर्मज्जति स्म मधुपूर इवाशु धैर्यम् ॥७७॥

---

१. C यथा गतेन for यथा च तेन । २. C omits च ।

३. C कृताभिपातम् for कृताभिघातम् । ४. A reads द्विरेफाः, a wrong reading ।

५. A····मप्यपोढ for मप्युपोढ ।

2061 निर्मृष्टपानलघुकानि मनांसि कुर्व-
न्लज्जामपास्य विदधत्सुरताभिलाषम् ।
आलिङ्गनान्यशिथिलानि [1]दिशन्प्रियाणा-
माविर्भवन् बहुमतो मदविभ्रमोऽभूत् ॥७८॥

2062 लीलारविन्दधुतपक्ष्मशिखापराग-
पिङ्गीकृता गलितमानरुजो निरीयुः ।
श्वासा मुहुर्मधुमदारुणिता इवाभि-
भर्तृ स्मरप्रवणतापिशुना पुरंध्रेः ॥७९॥

2063 उत्साहिता सकलशीधु[2]मदेन वक्तृ-
मर्धोदिते नववधूरवलम्बितह्रीः ।
आलीजनेष्वनुपसंहृतवाक्यशेषा
भर्तुश्चकार सविशेषकुतूहलत्वम् ॥८०॥

2064 मानान्धकारमवधूय शुचौ प्रसाद-
चन्द्रेऽधिरोहति मनोऽम्बरमम्बुजाक्ष्याः ।
उज्जृम्भमाणसरसोत्कलिकासहस्रै-
रव्याहतो मकरकेतुरवाप वृद्धिम् ॥८१॥

2065 निर्मृष्टपानलघुतां हृदयान्यवापु-
राविर्भवन्मधुमदाश्रितविभ्रमाणाम् ।
उद्भिन्नपीनपुलकैर्विहितावसाद-
मङ्गैः पुनर्मृगदृशां गुरुभिर्बभूवे ॥८२॥

2066 जग्राह वक्त्रकमलं हृदयं च रागो
दृष्टिस्तनुश्च परिमन्थरतां प्रपेदे ।
चस्खाल कोमलपदं गमनं वचश्च
चेतस्युपेयुषि मदं सुरसुन्दरीणाम् ॥८३॥

---

१. A दिशेन्द्रियाणां for दिशन् प्रियाणाम् ।
२. C omits from मदेन to 'नवधूरव' ।

2067　तावत्सलीलमनुपप्लुतरागगर्भ-
　　मग्रे जगे [1]युवभिरुत्पललोचनानाम् ।
　आश्रावितश्रुतिविभेदकृतव्यवस्थ-
　　[2]हारिस्वरग्रथितसारणवल्लकीकैः ॥८४॥

2068　आपादयन्नयनपक्ष्मनिमीलनानि
　　भावानुबन्धवशतो दयितायमानः ।
　वेणुः कयाचिदधराग्रनिपीडनेन
　　विस्पष्टमक्रियत निर्भररागगर्भः ॥८५॥

2069　अङ्के निवेश्य चतुराङ्गुलिपल्लवाग्र-
　　सञ्चारचारुयतिपाणिलयप्रपञ्चाम् ।
　आस्फालयत्करतलादिविभेदधातु-
　　वाद्यप्रपञ्चरुचिरामपरा विपञ्चीम् ॥८६॥

2070　भ्रूविभ्रमानुमितगाढतरावधान-
　　मन्या विलोलमणिकुण्डलघृष्टगण्डम् ।
　गायन्त्यवादयदनेकविकल्पकल्प-
　　कोणावघट्टनकलक्वणितां च कूर्मीम् ॥८७॥

2071　अन्या निवेश्य हृदये विनिपीडितैक-
　　पीनस्तना सपदि भावनयैव सारम् ।
　आश्राव[3]...लगुणक्वणितामलाबु
　　वीणां किणाङ्कसुकुमारतराङ्गुलिश्रीः ॥८८॥

2072　तासाममन्दमदमन्थरमञ्जुकण्ठ-
　　कुण्ठाक्षरस्खलितलोलपदप्रबन्धम् ।
　आर्द्रोऽपि शुष्क इव गेयविधिर्वभार-
　　सद्वेणुरञ्जितमनोहरविभ्रमत्वम् ॥८९॥

---

१. A युवतिरुत्पललोचनानाम् ।　　२. A, C हारिस्वरग्रथितचारण....।

३. B fills the blank 'यच्च' ।
　A, C left blank ।

2073 अव्यक्तवर्णमभवत्तरुणीजनस्य
यत्कर्णवर्ति मदमन्थरगीतशेषम् ।
आधित्सुभिस्तदनुसंधिमिवातिमञ्जु
निःश्वासमारुतहृतैरलिभिः शिशिञ्जे ॥९०॥

2074 इत्थं व्यजृम्भततरां मधुपानगोष्ठी-
बन्धः क्रमात् सुरतनाटकपूर्वरङ्गः ।
उद्दामकामकमनीयगुणाभिराम-
रामाविरामरमाणाकुलकामिलोकः ॥९१॥

2075 तदाभिलप्यन्त्यसकृत् प्रियानना-
न्निपातुमव्याहति कापिशायनम् ।
निशान्तकालावधि[1]रसा-
दियेष पृष्ठं न तु कापि शायनम् ॥९२॥

2076 भावावेशनिमीलितेक्षणयुगं संपूरितैर्वेणुभि-
र्मूर्च्छद्भिः कृतसौष्ठवं रसभरादाकर्ण्य गीतं पुनः ।
प्रेमस्निग्धमपाययन्त रतये तास्त्वर्यमाणा इव
स्रस्ताङ्गश्लथसंधिरत्नरशनादामस्वनैः कामिनः ॥९३॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवे राजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
महाकाव्ये पानगोष्ठीवर्णनम् नाम षड्विंशः सर्गः ।

---

१. B fills the blank 'जागरं' ।
C fills the blank 'जागरं' ।
A left blank ।

## सप्तविंशः सर्गः

2077 [1]अतिरतिरभसादलीकनिद्रा-
रभसविघूर्णितलोचनाम्बुजाभिः ।
शयनतलमशिश्रियन् वधूभिः
सह मदमन्मथमन्थरा युवानः ॥१॥

2078 प्रियेण वासस्यपनीयमाने
मां हन्ति कान्ता श्रवणोत्पलेन ।
अशिश्रियत्पूर्वमितीव दीप-
स्तद्गण्डभित्ति प्रतिमापदेशात् ॥२॥

2079 आकृष्यमाणमथ पुष्पशरासनेन
संरभ्य कामिहृदयानि विभित्सताराात् ।
लीनद्विरेफकुलझांकृतिचित्तहारि-
टाङ्कारनादमुखरस्थिति चापमासीत् ॥३॥

2080 भिन्दन्त एव हृदयान्यपि सन्दधानाः
[2]पौष्पा अपि द्रढिमसारभृतोऽभियोगे ।
चेतोभुवः सुरपुरन्ध्रिखरूचिकासु
पेतुः शराः कुसुमकार्मुकचक्रमुक्ताः ॥४॥

2081 दयितपरिहृताम्बरं वरोर्वाः
कनकशिलाविपुलं नितम्बबिम्बम् ।
मदनकरिविषाणघातरन्ध्र-
[3]प्रतिमकुकुन्दरसुन्दरं बभासे ॥५॥

---

१. C अथ रसरभसात् for अतिरतिरभसात् ।
२. A, B पुष्पा अपि for पौष्पा अपि ।
३. B निवर्तनकूप (footnotes) ।

2082　[1]चेतोभुवो भुवनदुर्विषहा नितान्त-
माक्षिप्तशीघ्रगमना इव चित्तवृत्तेः ।
धैर्यं पतत्त्रमरुतेव विधूनयन्तो
बाणाः पुरन्ध्रिहृदयेषु रयान्निपेतुः ॥६॥

2083　पीनोरुमूलं रभसापनीत-
वासो विलोलेक्षणमीक्षमाणम् ।
जघान रोषात्किल[2] पीवरेण
कुचद्वयेनोरसि कापि कान्तम् ॥७॥

2084　उच्छ्वासिपीनजघने निबिरीसमूर्वो-
र्गाढं नितम्बफलके घनघर्मवारौ ।
तन्व्याः कुकुन्दरयुगे शिथिलं चकर्ष
चण्डातकं कथमपि प्रियपाणिपद्मः ॥८॥

2085　ह्रीमन्थरा विधुतवेपथुना करेण
कर्णोत्पलं दयितमुक्तनितम्बवासाः ।
चिक्षेप दीपहतये [3]परिहृत्य तेन
तद्वाहसंभ्रमवशादिव तं निपेते ॥९॥

2086　अविरतरतिविभ्रमो जजृम्भे
श्रमजलशीकरविन्दुपुष्पशोभी ।
कुरबकविटपीव पीवरस्त्री-
स्तनकलशाहतिभिर्विदग्धयूनाम् ॥१०॥

2087　आलिङ्गितायाया दयितेन तन्व्याः
स्पर्शस्य मा भूद्व्यवधानखेदः ।
तद्वक्षसीतीव ममज्ज नुन्ना
कुचद्वयस्योपरि हारयष्टिः ॥११॥

---

१. B reads this श्लोक as 4th and the 5th as 6th. ।
२. B आलीक (footnotes) ।
३. C परित्यज्य for परिहृत्य ।

2088 छातोदर-क्रम-विभाव्यवली-विभङ्ग-
मुत्तम्भितोन्नत-पयोधर-तालपत्त्रम् ।
निर्मृष्टचित्रक-कपोल-ललाटलेख-
मुद्राङ्क कञ्चुकमुदक्षिपदञ्चितभ्रूः ॥१२॥

2089 कृच्छ्रात्तनोः सघनघर्मजलाङ्कयष्टि-
गाढावसक्तमथ कञ्चुकमुत्क्षिपन्त्याः ।
लावण्यकान्तिरमलाधिकमुन्मिमील
गौरस्य मध्यभुवि चारु वलित्रयस्य ॥१३॥

2090 वपुषि दयितसङ्गतोऽङ्गतोयैः
[1]स्मरयुवराज इवाभिषिच्यमाने ।
प्रथमरतमवापि बन्धनेभ्य-
स्तरलदशामथ नीविभिर्विमोक्षः ॥१४॥

2091 रराज दष्टाधरधूतहस्त-
विनिर्गतः [2]कम्बुरथायताक्ष्याः ।
निर्मथनतः कामिमनांस्यमन्दं
विलासमन्दीर इव स्मरस्य ॥१५॥

2092 रागार्द्रचाटुचतुरस्य विमुक्तनीवि-
माबद्धवेपथुतया दयितस्य हस्तम् ।
रोद्धुं शशाक न करः सुतनोरभीष्ट-
सिद्धिं ध्रुवां तरलता शिथिलां विधत्ते ॥१६॥

2093 प्रेयः करोद्ग्रथितकञ्चुकलक्ष्यमाण-
बिम्बागतावसनकास्पदरत्नदीपा[3] ।
विन्यस्तकोरकितचम्पकपुण्डरीक-
संवादितां कुचतटी [4]सुतनोर्बभार ॥१७॥

---

१. C स्मरयुवराज्य for स्मरयुवराज । २. B वलय (footnotes) ।
३. A, C ⋯ रत्नदीपः । ४. A, C कुचतटीं ।

2094 रतोत्सवे पीनतयापि युक्तौ
चक्रीकृतौ कान्तविगूहनेन[1] ।
पयोधरौ मन्मथकांस्यताल-
लीलां मुहूर्तं सुतनोरधत्ताम्[2] ॥१८॥

2095 श्रवणकुवलयस्य गर्भपत्त्रं
निधुवनकेलिविमर्दशीर्णमासीत् ।
मिथुनहतिविरुग्णमुष्टिबन्धं
फलकमिवासमसायकासिधेनोः ॥१९॥

2096 सलीलनिर्धूतकरारविन्द-
सीत्कारसंघुक्षितमन्मथायाः ।
जग्राह बिम्बाधरमूढरागं
गाढं रमण्या हृदयं च कान्तः ॥२०॥

2097 प्रत्यूहितेक्षणसुखानुभवोत्सकत्व-
कल्लोलितान्तरिततारकमक्षि वध्वाः ।
ताम्बूलपङ्करसरञ्जितकोटिभाग-
रेखीभवद्घटितपक्ष्म चुचुम्ब कान्तः ॥२१॥

2098 यस्योचितं भवति यत्तदवाच्यमेव
तस्यानतिक्रम इह क्रियते विदग्धैः ।
येनौष्ठपल्लवमखण्डयदायताक्ष्याः
प्रेयांश्चुचुम्ब नयनं च रतोत्सवेषु ॥२२॥

2099 कुसुमशरकरावलम्बरूपः
सुरतपदेऽनुपदेशशिक्षितोऽपि ।
अनवसितविकासविभ्रमश्री-
स्तरलदृशां रसभावसङ्करोऽभूत् ॥२३॥

१. C कान्तिविगाहनेन for कान्तविगूहनेन ।
२. A सुतनोरधाताम् for सुतनोरधत्ताम् ।

2100 उपोढरागे नयनारविन्दं
विचुम्बति प्रेयसि कम्बुकण्ठ्याः ।
बिम्बाधरः श्वासकृताभिघात-
स्तन्मत्सरेणेव मुहुश्चकम्पे ॥२४॥

2101 सीत्कारकान्तमलमर्थवचो विदग्ध-
हावानुबन्धि मणितं ललिता विलासाः ।
इत्यङ्गसङ्ग्रहमनोहरतापि येन
पुष्पायुधः कथमहो स भवेदनङ्गः ॥२५॥

2102 व्यक्तं न कार्यिकतया चिरकालगुप्ति-
संवर्धितेऽपि भवति क्वचन व्यपेक्षा ।
आविर्भवद्रतरसाश्रितविभ्रमाभिः
स्त्रीभिर्यदाशु विजहे सहजापि लज्जा ॥२६॥

2103 यदधरगतमादधाति तृष्णां
दिशति च यश्चषकोत्पलस्य निद्राम् ।
किमपि तदमृतं स कोऽपि चन्द्रो
वदनमयः श्रियमाततान तन्व्याः ॥२७॥

2104 निःश्वासवातैरधरस्य तन्व्याः
पीतो रसस्त्वद्विरहेऽधुना त्वम् ।
किं पास्यसीति क्वणितैर्युवान-
मुत्तंसलग्नोऽभ्यधितेव भृङ्गः ॥२८॥

2105 आलिङ्गति प्रियतमे विनिमग्नहार-
मुक्तापदाङ्कितपयोधरपीठगाढम् ।
आच्छादितावयवमुच्छ्वसितं विवेद
रोमाञ्चकञ्चुकमपि व्यवधिं [1]वरोरूः ॥२९॥

---

१. A व्यरोत्यः for वरोरूः ।

2106 लज्जावशात्पिदधती दयितव्यपास्त-
चीनांशुकं कुचयुगं करपङ्कजाभ्याम् ।
बिम्बागतं सपदि तत्र रसेन कान्त-
मन्तः प्रवेशयितुमैच्छदिवाञ्चितभ्रूः ॥३०॥

2107 मिथुनरतपरस्परप्रहारै-
र्ललितदलं मकरन्दवृष्टिमौज्झीत् ।
सरसबकुलपुष्पदाम शीधु-
स्रुतिमिव मुग्धवधूमुखान्निपीताम् ॥३१॥

2108 उत्तानितस्यावटुजग्रहेण
परिस्फुरन्मानवतीमुखेन्दोः ।
प्रियेण बिम्बाधरपानसङ्गा-
न्निपीत आसीदिव कोपरागः ॥३२॥

2109 उद्दामरागरभसाभिमतावरुग्ण-
बन्धा शनैर्निधुवने पतिताधिशय्यम् ।
शोभां बभार सुदृशो मकरावचूल-
पर्यङ्कपट्टरचना कलधौतकाञ्ची ॥३३॥

2110 पर्यासितो निधुवने कलकण्ठवर्ति
शुश्रूषमाण इव कूजितमव्यवस्थम् ।
तूष्णीं बभूव शयने रमणीजनस्य
काञ्चीगुणः क्वणितरेचितरत्नघण्टः ॥३४॥

2111 किमपि कलमुदाहरन्नतभ्रू-
र्निधुवनकेलिषु यन्निषेधवाक्यम् ।
कमितुरगमयद्विधिं तदस्याः
प्रभवति वस्तुषु वाम एव कामः ॥३५॥

2112 अशिक्षितं प्रातिभतामवाप
सुशीतलं विस्मृतरूपमासीत् ।
रतेऽधिरोहत्यमराङ्गनानां
न वाम कामानुगुणं न जज्ञे ॥३६॥

2113 संरम्भभाजि दयितेऽधरचुम्बनाय
मानात्सहुङ्कृति मुखं परिवर्तयन्त्याः ।
पृष्ठागतोपरि कुचस्य बभौ तरुण्या
वेणीलता मधुपपङ्क्तिरिवाम्बुजस्य ॥३७॥

2114 चुम्बत्युपोढरसविभ्रममाननेन्दु-
मुत्तानितं हठकचग्रहणेन कान्ते ।
उत्सार्यमाण इव निःश्वसितानिलेन
मानः क्षणान्निरगमद्धृदयात्पुरन्ध्रेः ॥३८॥

2115 शयनमनुगतं विलूनहार-
च्युतनवमौक्तिकमण्डलैस्तरुण्याः ।
मदनशिखिविलीनगण्डभित्ति-
प्रतिमितचन्द्रसुधाकणैरिवासीत् ॥३९॥

2116 स्पर्शोत्सवेनाहितगाढरागा
बभार काचिद्बहिरेव कम्पम् ।
निःस्पन्दतामाप पुनः स्थितान्तः
प्रेमामृतार्द्रे हृदि वल्लभस्य ॥४०॥

2117 आलिङ्गिता सरभसं दयितेन पृष्ठ-
विन्यस्तसान्द्रनखपङ्क्तिपदा तदानीम् ।
गाढीचकार तदुरःस्थलसन्निवेश-
चक्रीभवत्कुचयुगा परिरम्भमेका ॥४१॥

2118　आघूर्णनाकुलितताकलोचनायाः
　　कम्पाकुलोत्पुलकपीनतनोः प्रियस्य ।
आलिङ्गनं मधुमदः शिथिलीचकार
　　गाढं पुनर्मृगदृशो विदधावनङ्गः ॥४२॥

2119　गलितसरसकुङ्कुमाङ्गरागाः
　　श्रमजलशीकरबिन्दवस्तरुण्याः ।
हृदयनिहितगाढरागरक्ता
　　इव रतविभ्रमनिर्गता विरेजुः ॥४३॥

2120　प्रेयोनखार्द्रक्षतिभिर्नताङ्ग्याः
　　परिस्फुरत्काञ्चनकाषगौरी ।
व्यराजतोद्भिन्नमनोज्ञराग-
　　बीजाङ्कुरौघेव शरीरयष्टिः ॥४४॥

2121　लीलावती शकलितागुरुपङ्कपत्र-
　　मङ्गप्रसाधनकराल[1]नखक्षताङ्काम् ।
गण्डस्थलीं स्थगितरत्नवतंसकान्ति-
　　लावण्यसंभृति भरस्फुटितामिवोहे ॥४५॥

2122　प्रेयोनखक्षतपदानि कपोलभित्ति-
　　भागेषु ताम्रकुटिलानि नितम्बिनीनाम् ।
भान्ति स्म बिभ्रति हरेक्षणवह्निहेति-
　　संधुक्ष्यमाणवदनेन्दु···[2]पक्ष्मलक्ष्मीम् ॥४६॥

2123　प्रियतमपरिचुम्बनेन भीरोः
　　स्फुटमधरोऽपि सजीवतामवापत् ।
अविरतरतविभ्रमाभिलाषात्
　　कथमपि संस्फुरणोऽन्यथा भवेत्सः ॥४७॥

---

१. C नखपङ्क्तियुजा ।　　२. C "क" ।

2124 विभ्राणया सरलतां करणप्रपञ्च-
नानाविकल्पकृतिनो वदनेन यूनः ।
संसर्गमाप्य मधुरं चकषे रतेषु
[1]वामभ्रुवा मकरकेतनवंशनाड्या ॥४८॥

2125 [2]आकृष्य चुम्बनविकल्पपटीयसोऽपि
बिम्बाधरं कमितुरोष्ठदलान्तरालात्[3] ।
चातुर्यचारुसदनं वदनं चुचुम्ब
काप्यात्मनः कुशलतां दिशि [4]दर्शयन्ती ॥४९॥

2126 [5]अधररुचकदानधूतहस्ता-
च्युतमवहत् वलयं पुरः पुरन्ध्रेः ।
वदनविजितकान्तिदुःखभिन्न-
स्थितिहृदयं स्फुरदिन्दुबिम्बशोभाम् ॥५०॥

2127 कण्ठेऽभवद्वल्लभबाहुपाश-
निपीडनं जीवितलाभहेतुः ।
विखण्डनं चाधरपल्लवस्य
कचग्रहश्चोत्सव एव तासाम् ॥५१॥

2128 किं कर्णकेशमृदुबाहुमयेन तस्य
पाशत्रयेण सुदृशामिह मीनकेतोः ।
एकोऽपि सङ्गमयितुं प्रतिबद्धशक्ति-
रस्याभवत् क्वचन रागवतो न पुंसः ॥५२॥

---

१. C चारुभ्रुवा for वामभ्रुवा ।

२. A, B, C read आकृष्टचुम्बन for आकृष्य चुम्बन ।

३. A···रोष्ठलान्तरालम् । ४. A, B, C किल ।

५. A, B, C अधररुचिकरालधूतहस्त ।

2129 [1]उत्फुल्लवेल्लहल्लहारिविदग्धहाव-
संमूर्च्छिताञ्चितमनोहरभावहृद्याः[2] ।
चारुभ्रुवां निधुवनावसरे प्रसस्नु-[3]
रक्षण्णरागरभसोल्लसिता विलासाः ॥५३॥

2130 कुचकलशतटेषु कामिनीनां
दयितनखक्षतराजयो विरेजुः ।
रतरभसविलूनकण्ठमाला-
च्युतकुटिलारुणकेसराभिरामाः ॥५४॥

2131 आविष्कृतानर्गलरागसम्प-
दमन्दनिःश्वासतरङ्ग्यमाणम् ।
समर्पयन्त्याधरपल्लवाग्र-
मग्राहि तन्व्या हृदयं प्रियस्य ॥५५॥

2132 आबद्धरागसुरतश्रमवारिबिन्दु-
निर्धौतशेषरुचिरागुरुपत्त्रलेखाम् ।
सुभ्रूर्विलग्नमदनास्त्रकृशानुदाह-
कालीकृतामिव बभार कपोलपालीम् ॥५६॥

2133 ऐक्षन्त घर्मसलिलप्लवलङ्घ्यमान-
कालागुरुप्रकरपत्त्रलता युवानः ।
स्वच्छाः कपोलसरसीरवतीर्णपुष्प-
कोदण्डकेतुमकरा इव कामिनीनाम् ॥५७॥

2134 श्रियमदधत पीवरैः स्तनाग्रैः
सरसनखक्षतराजिभिस्तरुण्यः ।
अलिविघटितपत्त्रसंधिबन्धै-
र्धृतमुकुलैर्नलिनैरिवाम्बुजिन्यः ॥५८॥

---

१. B, C उत्फुल्लवेल्लहारि for उत्फुल्लवेल्लफलहारि ।

२. A, C मनोभवभावहृद्याः for मनोहरभावहृद्याः ।   ३. C omits प्रसस्नु ।

2135 जिह्मारुणाः पक्ष्मललोचनानां
बभ्रुर्नखाग्रक्षतयः स्तनेषु ।
प्रसूनबाणासनरत्नवीणा-
तन्त्रीकलाविभ्रममाक्षिपन्त्यः ॥५९॥

2136 भाति स्म निर्दयरतिश्रमवारिबिन्दु-
वृन्दावकीर्णपरिपाण्डुरगण्डभागम् ।
लावण्यसिन्धुसलिलोत्थितलक्ष्यमाण-
विस्तारिबुद्बुदमिवाननमङ्गनायाः ॥६०॥

2137 वामभ्रुवो निधुवनक्लमघर्मवारि-
बिन्दूत्करव्यतिकरोच्छलिता विरेजे ।
गम्भीरनाभिसरसी स्मरकेतुयष्टि-
कोटिप्रतिष्ठझषमन्दिरसुन्दरश्रीः ॥६१॥

2138 अनलमिव विसोढुमङ्गनाया-
स्तनुपदविच्युतिदुःखमङ्गरागः ।
अकृत कुचतटे रतिश्रमाम्भः-
प्लवगलितो नखराजिषु प्रवेशम् ॥६२॥

2139 निर्भिद्य देहं स्मरमार्गणेषु
मनः प्रविष्टेषु रताभियोगे ।
तद्रन्ध्रमार्गैरिव कामिनीनां
स्तना विरेजुः करजक्षतौघैः ॥६३॥

2140 अभ्युच्छ्वसत्पुलकपूरभरातिभार-
गुर्वीं विसोढुमसहेव तनुं मुमोच ।
आविर्भवद्रतिरसाशिथिलप्रयत्नं
लीलालसा दयितवक्षसि संहतोरूः ॥६४॥

2141 स्पष्टोत्तरं रसमनोज्ञविशेषवृत्ति-
शिक्षाप्रपञ्चरहितं किमपि स्ववेद्यम् ।
चारुभ्रुवः प्रतिबभौ सुरते तदाशु
पुष्पायुधस्य हृदयं यदखण्डमासीत् ॥६५॥

2142 श्रवणशिखरविच्युतं तरुण्याः
शशिधवलं नवकेतकीपलाशम् ।
अभृत मकरकेतुकेतुदण्ड-
स्खलितविमुग्धभ्रूषावचूललीलाम् ॥६६॥

2143 विलूनहारोज्ज्वलशेखरश्री-
रुपोढरागश्रमवारिबिन्दुः ।
[1]रतावमर्दः सुरसुन्दरीणा-
माक्षिप्तकोपानुकृतिर्जजृम्भे ॥६७॥

2144 लावण्यकान्तिममलां मृगनाभिपङ्क-
पत्त्रावली विलिखिताच्छकपोलभित्तौ ।
श्यामीकरोति किमितीव दधाव घर्म-
वारिच्छटा दयितभावनजा तरुण्याः ॥६८॥

2145 गम्भीरनाभिसरसी सुदृशोऽङ्गराग-
पिङ्गैरपूर्यत रतिश्रमवारिलेशैः ।
आलक्ष्यचूचुकषडङ्घ्रिकुचारविन्द-
विष्यन्दिसान्द्रमकरन्दरसायमानैः ॥६९॥

2146 दयितनखविलेखनं वधूनां
विशदमयूरपदं[3] शशप्लुताङ्कम् ।
अभृत मदनकाननस्य लक्ष्मीं
स्तनशि[2]............................ ॥७०॥

---

१. C रतावमन्दः । २. B fills the blank '......खरद्वयलब्धसन्निवेशम्' ।
३. B लेखाः स्तनास्ये विरला मयूरपदं नखाग्रैः सकलैर्निषेक्ताः ।
शशप्लुतं पञ्चनखव्रणानि सान्द्राणि तच्चूचुकचिह्नमूहुः ॥ (footnotes)

2147　कचग्रहोत्तानितवक्त्रपङ्कजे
　　चुचुम्बिषौ प्रेयसि[1]......।
　नननर्त तोषादिव[2]...विभ्रम-
　　स्फुटीभवत्स्पन्दनसुन्दरोऽधरः ॥७१॥

2148　धौताङ्गराग[3]....श्रमवारिलेशाः[4]
　　पौष्पे निपेतुषि हृदि स्मरमार्गणौघे।
　तद्रन्ध्रमार्गविगलन्मकरन्दबिन्दु-
　　वृन्दश्रियो मृगदृशां सुरते निरीयुः ॥७२॥

2149　यैरध्यगामि नितरां प्रथमे समाप्ति-
　　रारब्ध एव नवकोमलरागवेशे[5]।
　ते विभ्रमाः सपदि पप्रथिरे रतेऽत्र
　　संघुक्षितस्मररसाः सुदृशो द्वितीये ॥७३॥

2150　समदमदनसाध्वसत्रपास्ताः
　　किमपि रसान्तरमन्तराविशन्त्यः।
　चिरमपहृतचेतसोऽपि चित्रं
　　दयिततमानुपचेरुरञ्चिताक्ष्यः ॥७४॥

2151　सुखानुबन्धाद्विनिमीलिते मुहुः
　　प्रियाननालोकनकातरे मुहुः।
　अवापतुर्मन्थरतां विलोचने
　　निमीलनोन्मीलनविभ्रमैस्तनोः ॥७५॥

---

१. B fills the blank 'वामचक्षुंषः' A, C left blank।
२. B fills the blank 'लब्ध' A, C left blank।
३. B fills the blank 'विमल' A, C left blank।
४. B पारिलेशाः for वारिलेशाः।　５. B रागलेशे for रागवेशे।

2152　बिभ्राणया श्रुतिमनोरमतामभीक्ष्णं
　　प्रेयानसेचनकदर्शनया तदानीम् ।
आक्षिप्तरागिहृदयो हरिणीदृशाथ
　　रत्युत्सवे मदनमञ्चुकया गिरासीत् ॥७६॥

2153　आपात एव यदभूत् सुखमात्मवर्ति
　　तेनातुरत्वमितरत्र विवर्धमानम् ।
संधुक्षितान्यसुरतं कमितुर्बभूव
　　चित्रप्रपञ्चचतुरत्वमहो स्मरस्य ॥७७॥

2154　भवतु च परिवृत्य नाम तन्व्याः
　　स्थितमधिशय्यमलीकमानखेदात् ।
हृदयमभिमतेऽनुरागवृत्ते-
　　[1]रभिमुखमेव पुनर्बभूव तस्याः ॥७८॥

2155　प्रियेण हन्तुं दयितां गलन्मधु-
　　च्छटाकणं केसरदाम पातितम् ।
नपुंसकत्वेऽपि सघर्मशीकरं
　　तदङ्गसंस्पर्शसुखादिवाभवत् ॥७९॥

2156　तत्कालसंभृतरसातिशयानि दूर-
　　मव्याहतप्रसरतां सुदृशां दधद्भिः ।
चन्द्रः करैरभिमुखत्वमुपानिनाय
　　पुष्पायुधस्तु हृदयान्यभिनत् पृषत्कैः ॥८०॥

2157　तस्यातिविस्मयविधायि विचेष्टितं तत्
　　उत्थाय चञ्चलतरान्मनसोऽप्यनङ्गः ।
स्थैर्यं दधत्सुनिशितैरिषुभिर्भिनत्ति
　　पौष्पैरपि स्म हृदयानि यदाशु यूनाम् ॥८१॥

---

1. B रतिमुखमेव for रभिमुखमेव ।

2158 अधरभुवि नितम्बिनीजनस्य
प्रियतमचुम्बनदंशबिन्दुमालाः ।
दधुरभिनवतोपलक्ष्यताम्र-
च्छविसुभगाः स्मररागबीजशोभाम् ॥८२॥

2159 उपेयुषीणामुपदेशशून्यतां
रतेऽधिरोहत्यधिकं नतभ्रुवाम् ।
असूत तासां प्रतिभैव तं गुणं
न येन यूनां हृदयानि नाहरत् ॥८३॥

2160 [१]प्रेङ्खोलता तरलिता..... ......
.......................... .............।
.........................................
...................................... ॥८४॥

2161 भाति स्म पक्ष्मशिखरस्खलितद्विरेफ-
कल्माषिता रतिगृहोदरकुट्टिमोर्वी ।
तत्कालबद्धरभसस्मरकृष्यमाण-
कोदण्डदण्डगलितैरिव रत्नपुष्पैः ॥८५॥

2162 अविरल-कुसुमोपकारलीनं
भ्रमरकुलं रतिवेश्मनि व्यराजत् ।
स्मरशरहतिजर्जरीकृतं सत्
कवचमिवोज्झितमायसं भटोभिः ॥८६॥

---

१. A, B, C, & D left it blank. As per the commentary of Alaka it is presumed that an entire श्लोक existed' His commentary to this श्लोक is little and is as follows : पर्यङ्कः शय्या, तस्य नमनोन्नमने ।
Acute vulgarity might have prevented the scribe from keeping this श्लोक and also the 87th. [EDITOR]

2163 १ ........................................

........................................

........................................

........................................॥८७॥

2164 मध्यस्य तानवभृतो घटते तवाति-

दीर्घाङ्गुलीतुलनमस्तु नितम्बभित्तेः ।

इत्यभ्यधायि रणितैरिव वल्लभस्य

पाणिः पुरन्ध्रिरशनामणिकिङ्कीणीभिः ॥८८॥

2165 कौतूहलाविरतहारिरसोपगूढ-

कल्लोलितस्मरविकल्परतप्रपञ्चा ।

ह्रीमन्थरत्वमपहाय वियातिमान-

मासेदुषी सुतनुरन्यमयीव जज्ञे ॥८९॥

2166 शयनगतविनिद्रकान्तलीला-

चिरपरिहापितसप्रपञ्चरागम् ।

अभृत सुभगरूपतां निशायाः

सपदि मुखादपि पश्चिमार्धमासाम् ॥९०॥

2167 उदीरयन्ती किमपि स्खलत्पदं

तदाभियुक्ता दयितेन कामिनी ।

अशिक्षितालम्बितपाटवा नु किं

सुशिक्षितं नु प्रकटत्वमानयत् ॥९१॥

2168 स्वच्छं बभार विपरीतरतश्रमाम्बु-

निर्धौतशेषरुचिरागुरुपत्त्रलेखम् ।

दोलायमानमणिकुण्डलकोटिकाष-

लीलाकिणाङ्कितमिव प्रमदाकपोलम् ॥९२॥

१. All the mss. left it blank.

2169　तन्व्याः प्रवृत्तपुरुषायितविभ्रमाया
　　धृष्टं रणत्युपरमे कथमत्र काञ्ची ।
इत्यभ्यधादिव मनोहरशिञ्जितेन
　　पर्याकुलं रतिषु नूपुरपारिहार्यम् ॥९३॥

2170　अभूत वदनमूढकान्तिसंपत्
　　सुरतविपर्ययविभ्रमे तरुण्याः ।
स्फुटकवलनरागराहुशङ्का-
　　निपतदधोमुखचन्द्रबिम्बशोभाम् ॥९४॥

2171　विपरीतरताभियोगलग्नां
　　श्रियमालोक्य विलज्जितेव दूरम् ।
श्रमशीकरबिन्दुधाव्यमाना
　　विजहौ पत्रलता कपोलभित्तिम् ॥९५॥

2172　अन्यात्मनश्चरणभूषणशिञ्जितेन
　　प्रत्याहृता चरणयोर्नवयावकश्रीः ।
रागेण[1] पीडनभुवा हरिणेक्षणाया
　　धौतापि घर्मसलिलैः [2]शयने तदानीम् ॥९६॥

2173　स्मररभसपरीतकान्तदन्त-
　　क्षतिपरिजातभियेव बिम्बितेन ।
प्रचुरमदविपाटला तरुण्याः
　　सपदि जहे शशिना कपोलभित्तिः ॥९७॥

2174　सम्पादिताभिनवविभ्रममण्डनानि
　　प्रेयोनखक्षतपदानि तनुस्तरुण्याः ।
मुक्ताफलार्धकुसुमैरिव निष्पतद्भि-
　　रानर्च घर्मजलशीकरबिन्दुवृन्दैः ॥९८॥

---

१. B पीडतमुषा for पीडनभुवा ।
२. B वकुलैस्तदानीम् for शयने तदानीम् ।

2175 अग्राहि रागिहृदयं दयितस्य येन
यच्चान्यवस्तुनिरपेक्षतया मनोज्ञम् ।
चारुभ्रुवः किमपि तत्सुरतेषु वाम्य-
मक्षुण्णमेव रमणीयमथाविरासीत् ॥९९॥

2176 चिक्षेप दृष्टिरभितः सुतनोरपाङ्ग-
पर्यस्त-तारक-मयूख-जलच्छटालीः ।
प्रत्यग्रकान्त-दशनक्षत-गाढपीडा-
निर्वापणार्थमिव कोमलगण्डभित्तेः ॥१००॥

2177 निहितनखपदं कुचाग्रभागे
करकमलेन विकम्पिता नतभ्रूः ।
प्रियकरमभिनाभि कापि कोपात्
किल [1]कलकोमलकूजिता निरासे ॥१०१॥

2178 वामभ्रुवः शयनपट्टविवर्तनेन
कान्तस्य चित्तमृगबन्धनवागुरासीत् ।
विस्तारिमूलशिथिलाश्रितदैर्घ्यलेश-
पर्यन्तभागविषमोच्छ्वसिताथ वेणी ॥१०२॥

2179 पर्यङ्कपट्टमलनात्सविशेषमाप
दैर्घ्यं यदुत्पलदृशो लुलितः शिखण्डः ।
तस्यामुना फलमवापि तनोर्नितम्ब-
बिम्बाग्रचुम्बनसुखार्पितमद्वितीयम् ॥१०३॥

2180 स्वस्थानादचलदपि क्षणेन तत्त-
द्विस्रम्भातिशयमनोज्ञमाचरद्भिः ।
यत्तासां हृदयमगृह्यतानुरागि
प्रेयोभिस्तदभवदद्भुतं तदानीम् ॥१०४॥

---

१. किलकिलकिञ्चितकोमला for किलकलकोमलकूजिनां ।

2181 निद्रां विहाय शनकैः परिपीतशीत-
वातायनस्थचषकाश्रयशीधुशेषा ।
मत्ताधिकं श्रमजलप्लुतदेहयष्टि-
रच्छिन्ननीरसरताभिरतोत्सवासीत् ॥१०५॥

2182 सुव्यक्तमापदमरत्वमसौ पुरन्ध्रि-
बिम्बाधरास्पदसुधारसपानसङ्गात् ।
गाढीभवन्निधुवनोत्सवसंमदेन
येनानिमेषनयनत्वमवापि यूना ॥१०६॥

2183 दधत्कान्तिं नासावनुभवति किं खण्डनदशां
निपीतः सन् रागं प्रकटयति नो वा किमधिकम् ।
किमानन्दस्यैको न प्रभवतितरां हेतुरतनोः
सुधासूतिश्चन्द्रः किमधरदलं नोत्पलदृशाम् ॥१०७॥

2184 तत्खण्डनार्दितपुरन्ध्रिविधूतहारि
हस्तप्रकोष्ठगलितो नवरत्नकम्बुः ।
कन्दर्पलासकतिरस्करिणीविशीर्ण-
माणिक्यबन्धकटकस्य बभार शोभाम् ॥१०८॥

2185 रोमाञ्चकण्टकितकम्पिकपोलभित्ति-
रन्योन्यसंवलित-तारकलोचनश्रीः ।
रागावसानलुलिता मिथुनस्य दृष्टि-
रन्यैव निस्तिमितकालकलाविरासीत् ॥१०९॥

2186 निबिडजघनरोहकाण्डयुग्मा
तरलविवर्तिततारकेक्षणश्रीः ।
दृढतरपरिरम्भविभ्रमासीत्
कमलदृशां सुरतावसानलीला ॥११०॥

2187　लावण्यकान्तिविसरामृताधाव्यमान-
रम्याङ्गदर्शनकुतूहलिना वितीर्णे ।
कान्तेन वाससि वधूः सुरतावसान-
वैलक्ष्यहासदशनांशुपटं ततान ॥१११॥

2188　प्रेयः कराकलितपीननितम्बबिम्ब-
वासा वधूः करतलस्थगितोरुमूला ।
हारेण चन्द्ररुचिमौक्तिकदन्तपङ्क्ति-
निर्यत्प्रभाविशदशोभमहस्यतेव ॥११२॥

2189　लीलाविलासकिलिकिञ्चितहावहारि-
हेलाभिरामसुकुमारमदप्रगल्भाः ।
रागादपर्यवसितेच्छमिति प्रियांस्तां-
श्छन्दानुवृत्तिनिपुणं रमयाम्बभूवुः ॥११३॥

2190　रत्युत्सवे शिथिलितारभसेन पूर्व-
मुत्सारितानुचितधाष्टर्यपरिग्रहत्वात् ।
लज्जा तदन्तकृतसंभ्रमविभ्रमश्री-
राविर्बभूव सुदृशां विनयाग्रदूती ॥११४॥

2191　चेतोहरा विदधती वपुषः प्रयत्न-
शैथिल्यमाशु विहितस्मृतिविप्रमोषा ।
किं मत्तता किमथवा सुदृशां व्यधत्त
निद्रा विजिह्मितविघूर्णितलोचनत्वम् ॥११५॥

2192　इति मिथुनसहस्रे रत्नपर्यङ्कभाजि
क्लमपरिगतनिद्रे सा निशा पर्यणंसीत् ।
मुहुरुपशमवेलामारुतश्वासवातैः
शशि-निपतनकालग्लानिमावेदयन्ती ॥११६॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
महाकाव्ये संभोगवर्णनम् नाम सप्तविंशः सर्गः ।

———

## अष्टाविंशः सर्गः

2193 अथ तपनभयान्निशाङ्गनायाः
शशधरमण्डलदर्पणेऽस्तसानौ ।
उषसि निपतिते नवोडुपङ्क्ति-
त्सरुमणिश्टङ्खलयान्यतो विशश्रे[१] ॥१॥

2194 अभिमतजनभाविविप्रयोग-
ज्वरविधुरा विदधे यदारवैः स्त्री ।
अकृत हृदयशून्यतानुरूपं
तदवसितक्षणदाहतो मृदङ्गः ॥२॥

2195 दयिततमभुजोपधानलीला-
सुखविनिषण्णतनुर्निसर्गमुग्धा ।
न खलु किल विभावरी गतेति
क्षणविनिमीलितदृष्टिरेव तस्थौ ॥३॥

2196 सपदि विगलितप्रभेन्दुवक्त्रा
शिथिलगतिः स्मरसङ्गिनां त्रियामा ।
तनुतिमिरनिरुद्धतारकश्री-
रथरतये न बभूव यातयामा ॥४॥

2197 अलमतिवलनेन देहयष्टेः
सुतनु ! तनुस्तव भङ्गमेति मध्यः[२] ।
इति कलरणितेन कम्बुपङ्क्तिः
सुदृशमिवाभिदधे विजृम्भमाणाम्[३] ॥५॥

---

१. A reads यान्यतः प्रशसे । २. A भङ्ग : for मध्यः ।
३. A विजृम्भमाणा for विजृम्भमाणाम् । ।

2198 दृढतरपरिरम्भविभ्रमेण
प्रियहृदये हृदयं तदा नतभ्रूः ।
द्रुततरमिव भाविविप्रयोग-
क्षतधृति सङ्गमयाञ्चकार काचित् ॥६॥

2199 बभुरतनुदृशां तथा न पूर्वं
सतिलकपत्त्रलताः कपोलभागाः ।
प्रतियुवतिविरूक्षकाक्षिदृष्टाः
[1]प्रियदशनाङ्कभृतो यथा प्रभाते ॥७॥

2200 उदयगिरितटे तिरोहितस्य
स्फुटमिव [2]मातुमशेषमण्डमूर्ध्वम् ।
विरलिततमसः कराः शितांशो-
र्द्रुतमुदहासत हासितारविन्दाः ॥८॥

2201 अधिगगनतलं परिस्फुरन्ती
कपिशितकौशिकदिङ्मुखा बभासे ।
दिनकररथबन्धतान्तभोगि-
श्वसितकृशानुशिखावलीव सन्ध्या ॥९॥

2202 उदयशिखरिशृङ्गमुष्णरश्मिः
प्रचुरतरा विधुतापदस्तदानीम् ।
सरभसमभजन्निशावसाने
सपदि दिशस्तदभीषवश्च दीर्घाः ॥१०॥

2203 दधति दृढतमं तमांसि मांसी-
मलनमलीमसभांसि मांसलत्वम् ।
उषसि [3]चकरिरे विभाकरस्य
प्रलयविभावसुभासुरैः कराग्रैः ॥११॥

---

१. A प्रियदशनाङ्कहराः for प्रियदशनाङ्कभृतः ।
२. A मार्तमशेष for मातुमशेष । ३. B क्षिप्तानि ।

2204　प्रतिककुभमधोगलन्ति सन्ध्या-
　　[1]कपिशितभांसि कुलानि तारकाणाम् ।
　विदधति भुवनारविन्दकोष-
　　च्युतमधुशीकरबिन्दुवृन्दलीलाम् ॥१२॥

2205　[2]दिवसगजपतेर्मृगाङ्कलेखा-
　　धवलमृणालसनाथपुष्करस्य ।
　श्रियमभिमुखमाप चीनपिष्ट-
　　प्रकरकरालरजश्छटेव संध्या ॥१३॥

2206　गगनमकुरुत प्रभाभिरुद्य-
　　न्नवशवलन्नयनाभिरुष्णरश्मिः ।
　उषसि ददृशिरे च कामिनीभिः
　　सरसविवर्तितकंधरं युवानः ॥१४॥

2207　प्रतिदिशमुडुरत्नराशयोऽथ
　　स्तिमिततमोभिदुरत्विषः प्रणेशुः ।
　दिनकरकिरणैः समुन्मिषद्भिः
　　सपदि कुवैकटिकैरिवानुविद्धाः ॥१५॥

2208　स्फुरितबहुलसांध्यरागवह्नौ
　　सतिमिरधूमशिखेऽम्बराम्बरीषे ।
　उषसि विरलभृज्यमानलाजा-
　　श्रियमुडुसंहतयः क्षणं वितेनुः ॥१६॥

2209　मदविगलितलज्जया युवत्या
　　दयितहृताम्बरयास्मि न व्यपास्तः ।
　इति पवनविघूर्णितः प्रभाते
　　[3]प्रमदवशादिव नृत्यति स्म दीपः ॥१७॥

---

१. C कपिशितभासि ।　२. दिवसगणपते for दिवसगजपते ।
३. C प्रमदवशादिति ।

2210　स्फुरदमलरुचिः प्रभातवेला
　　दिशि दिशि संदधती प्रबोधजृम्भाम् ।
प्रसरदतनुसौरभाभिरामा
　　श्रियममलामरविन्दिनीव दध्रे ॥१८॥

2211　दिशि दिशि मकरन्दपानलोभात्
　　द्रुतमुपरि भ्रमरैः परिभ्रमद्भिः ।
[1]व्यधिषत कुमुदानि भानवीयं
　　करपरिमर्शमिवाभितो निरोद्धुम् ॥१९॥

2212　अधिशिशयिषमाणमप्यधत्त[2]
　　भ्रमरकुलं नलिनीं तथैत्य दूरात् ।
क्षणसमयमलप्स्यताबकाशं
　　तरणिरुचो न यथाशु तां विभेत्तुम् ॥२०॥

2213　दलितकमलकुड्मलाभिराम-
　　स्फुटतरसौरभवासितो नभस्वान् ।
सलिलमभिसरन् सरोरुहिण्या
　　हृदयमिवोत्कलिकाकुलं चकार ॥२१॥

2214　व्यरुचदथ सरोजिनी मनोज्ञ-
　　स्थितिचतुरभ्रमरा सहंसपक्षा[3] ।
स्फुरितविशदशोभिनालपद्मा-
　　सततमसंयुतहस्तसंहतिश्रीः ॥२२॥

2215　तरणिकिरणदण्डघट्टनाभि-
　　र्विघटितसंतमसत्वचोऽम्बरस्य ।
स्फुरदरुणकरातपच्छलेन
　　क्षतजमिव प्रतिबद्धमाविरासीत् ॥२३॥

---

१. B पिहितानि (footnotes) ।　　२. B स्थगयामास (footnotes) ।
३. A सहेमपक्षा for सहंसपक्षा ।

2216 [1]दधुरुषसि विनिद्रपुण्डरीक-
प्रकरपरागपिशङ्गितान्तरिक्षाः ।
अविरतरतमर्दतान्तकान्ता-
कुचकरजक्षतिनिर्वृतिं समीराः ॥२४॥

2217 दिनकरकरघातताडितं सत्
रजनिजलाश्रुपरिप्लुतं तदानीम् ।
कुमुदनयनमाशु कैरविण्याः
प्रबलरुजेव कृतव्यथं न्यमीलत् ॥२५॥

2218 उदयति हरिदिङ्मुखारुणाम्भः-
सरसविशेषकबिन्दुमण्डलेऽर्के ।
स्तिमिततमतमालखण्डनीलै-
रतमितमामभितैस्तमीतमोभिः ॥२६॥

2219 क्रमविघटितशार्वरान्धकार-
स्फुटतरकूटविशङ्कटं तदानीम् ।
दिशि दिशि ददृशेऽम्बुराशिमध्या-
त्त्वरितमिवोत्तरदद्रिचक्रवालम् ॥२७॥

2220 अनुकृतभुजगेन्द्रभोगशय्या-
सुखविनिषण्णमुरारिनाभिचक्रम् ।
श्रियमुषसि सरः सदर्पसर्पन्
मधुकरकम्पितपुण्डरीकमापत् ॥२८॥

2221 दिनकरकिरणप्रवालवल्ली-
वलयभृतः स्फुरितोडुपात्तशोभात् ।
भुवनपुलिनसीम्नि भासुरश्री-
र्दिवसमणिः प्रससार कालसिन्धोः ॥२९॥

---

१. C ददुः for दधुः ।

2222 कुमुदमुषसि सङ्कुचत्सखेदः
कमलमहो विकसत्प्रहृष्टचेताः ।
उभयरसविसंस्थुलो रसायु[1]-
र्मधुरमधुस्रुतिनिर्भरं लिलेह ॥३०॥

2223 उदयगिरिशिखागवाक्षभूमौ
भुवनविलोकनकौतुकावसक्तम् ।
मुखमिव दिवसश्रियो विरेजे
धृतनवकुङ्कुमलेपमर्कबिम्बम् ॥३१॥

2224 अथ विशदहिमांशुरश्मिभिन्न-
स्फुटदलसन्धिविमुक्तबद्धभृङ्गाम् ।
उषसि कुमुदकाननायमानं
कमलवनं बिभराञ्चकार लक्ष्मीम् ॥३२॥

2225 मृदुमरुदवधूतपक्ष्मपाली -
भरविगलन्मकरन्दपङ्किलेषु ।
मधुमदविवशैः कुशेशयानां
दलशिखरेषु शिलीमुखैश्चखञ्जे ॥३३॥

2226 प्रविघटितदलाररिप्रभाते
मुखर-शिलीमुखमञ्चचक्रवालम् ।
न कमलपुटभेदनं न चक्रे
दिवसकरः स्थितिधाम चारु लक्ष्म्याः ॥३४॥

2227 स्फुटमधिगतसंभ्रमा भवन्त्यः
शशिनि लिलम्बिषमाण धूम्रबिम्बे ।
उषसि मृदुसमीरघट्यमाना
विशदमवेपिषताशु कैरविण्यः ॥३५॥

---

१. B भ्रमरः ।

2228 विकसितमवलोक्य पुण्डरीकं
विरचितसंहति संमदेन तावत्।
मधुरमधुपिपासया पतद्भि-
र्भ्रमरकुलैर्दुधुवे पतत्त्रपङ्क्तिः ॥३६॥

2229 तदनिलरयकम्पिकेसराग्र-
स्खलितरजःस्थगितेक्षणा न यावत्।
ददृशुरपि सदेशवर्ति तत्ते
श्लथयति कातरतेप्सितार्थसिद्धिम् ॥३७॥ युग्मम्

2230 कमलमुकुलपञ्जरोदरेषु
[1]प्रतिहतिरोषविधूतकेसराणाम्।
प्रतिदिशमुदजृम्भत प्रणादो
मधुकरकेसरिणां विनिद्रितानाम् ॥३८॥

2231 क्षितितलशयनोत्थितस्य पङ्क-
प्लवमलिनं करटस्थलं करेणोः।
मधुकरनिकरो जहावसाधु-
व्यतिकरतो न हि किञ्चिदस्ति सेव्यम् ॥३९॥

2232 नवयवयवसानवाप्तिखेदा-
त्खुरनिकरैः खुरधारणीर्लिखन्तः।
जहुरथ परिवर्धकोपनीतं
विकटकडङ्करमाशु ग्रासमश्वाः ॥४०॥

2233 द्रुततरमवतीर्य वासयष्टे-
र्भुजगभुजः प्रतिमागतैः शिखण्डैः।
विविधमणिमयीरिवाशु चक्रु-
र्नृपतिगृहाङ्गनरत्नकुट्टिमोर्वीः ॥४१॥

---

१. B प्रतिरुतरोष for प्रतिहतिरोष।

2234 अविरमदनुनासिकाभिराम-
स्फुटतरतारविरावकुञ्चिताङ्घ्रिः[1] ।
अविरति विरुराव ताम्रचूडः
स्फुरितनतोन्नतकण्ठकंधराग्रः ॥४२॥

2235 रविकरपरिमर्शबद्धनिद्रं
तदुदरसङ्कटयन्त्रिता द्विरेफाः ।
विघटितदलसंपुटं तथैषु-
र्भरचलिता निजविग्रहप्रणोदैः ॥४३॥

2236 कुमुदमपि यथा क्षणं विनिद्रं
सपदि तदुत्प्लवनानुकूलमासीत् ।
ननु विपदि विषाददुर्गतानां
किमिव हि दुस्तरमस्ति [2]संहतानाम् ॥४४॥ युगलकम्

2237 द्रुतमयमवमोचयत्यपास्य
च्छदपटलोदरयन्त्रणां रविर्वः ।
इति कलरणितैरिवाम्बुजाना-
मुपरि चरन्मधुपानुवाच भृङ्गः ॥४५॥

2238 दलितसकलशार्वरान्धकारः
कृतपरभागगुणं सरोरुहिण्याः ।
कमलमनयदुन्मुखत्वमर्कः
स्फुटदलमण्डलसच्छ्रियाशु दीप्त्या ॥४६॥

2239 दिशि दिशि विहगास्तनूः समन्ता-
दनलसपक्षतयोपचीयमानाः ।
उषसि जिगमिषाकुलास्तदानीं
दयितवियोगदशा वधूश्च देहुः ॥४७॥

---

१. B कुञ्चित भ्रूः for कुञ्चिताङ्घ्रिः । २. C मोहितानाम् ।

2240　क्षपिततरुणखञ्जरीटकण्ठ-
　　स्फुटतरबिन्दुमलीमसान्धकारः ।
श्रियमभृततरां सहस्ररश्मि-
　　स्त्रिभुवनमण्डलपुण्डरीकबिम्बः ॥४८॥

2241　शशधरमणिशालभञ्जिकाभि-
　　र्भवनविटङ्कसटङ्कटङ्किताभिः[1] ।
दिनकरकिरणाहताभिरिन्दौ
　　विनिपतिते शुशुचे शुचेव सद्यः ॥४९॥

2242　अकृत कुमुदिनीविकासमारा-
　　द्हततमस्कममीलितारविन्दम् ।
नभसि विगलितप्रभं हिमांशोः
　　पयसि च बिम्बमभिन्नरूपमासीत् ॥५०॥

2243　स्फुटदलमणिशुक्तिगर्भपीत-
　　स्फुरदरुणातपशीधुशीकरौघः ।
मदविवश इव प्रभातवात-
　　व्यतिकरतः कमलाकरश्चकम्पे ॥५१॥

2244　त्वरितमधिसरोजिनि व्रजन्ती
　　मधुपततिः कुमुदाकराच्चकाशे ।
दिवसकरभयात्पलायमाना
　　तिमिरपरिप्लवधूसरेव रात्रिः ॥५२॥

2245　विकटभुजगशृङ्खलावनद्धं
　　सपदि रथप्लवमर्यमाधिरूढः ।
ग्रहमणिनिचयं जिघृक्षुराप
　　स्फुट इव पोतवणिङ्नभःसमुद्रम् ॥५३॥

---

१. B उन्नतप्रदेशे सशोभमुत्कीर्णाभिः (footnotes) ।

2246 शकुनिभिरधिशिश्रिये वनोर्वी
स्फुटमदनानलदाहतापयोगाम् ।
स्थितिमुपदधतो मनोरथैश्च
त्रिदशवधूजनतोषसि व्रजन्ती ॥५४॥

2247 [1]उपगतमपरत्र [2]वासतेयीं
द्रुतमपवाह्य पुन प्रभातकाले ।
क्रुध इव रविमक्षमेक्षितुं द्यौ-
रवनतमिन्दुमुखं चिरं बभार ॥५५॥

2248 दिनकरमुदितं निरीक्ष्य चन्द्रः
स्फुरिततदंशुशिखावमर्शभीताम् ।
स्फुटहरिणनिभेन रात्रिमङ्के
दधदिव सम्भ्रमतोऽस्तशैलमभ्यैत् ॥५६॥

2249 त्रिभुवनविपिने कठोरभास्वत्
किरणकुठारनिपातलूनमूर्तेः ।
स्फुटमलमधुपो निशालताया
रजनिकरस्तबकः क्रमेण मम्लौ ॥५७॥

2250 दयिततमममुं विधूय तेजो
दिनकर मा परिभूर्निशाकरं मे ।
इति विरचितकुड्मलाञ्जलिश्री-
स्तमतिशुचेव कुमुद्वती ययाचे ॥५८॥

2251 मधुकरपटलीं मधुस्पृहान्धा-
मुपरि कुशेशयिनीं परिभ्रमन्तीम् ।
अरचयदुषसि प्रियस्य भानोः
कुवलयवन्दनमालिकामिवारात् ॥५९॥

---

१. A द्रुतगतं for उपगतम् ।
B उपरत for उपगत ।
२. रात्रि (footnotes) ।

2252　विशदमधुरसारणानुबन्ध-
　　क्वणदलिसंहतिवल्लकीनिनादैः ।
जनितसुखमिव क्षपावसाने
　　कुमुदवनं प्रतिपन्ननिद्रमासीत् ॥६०॥

2253　सरसिजमुकुलस्य पार्श्वभूमे-
　　र्मधुकरपङ्क्तिरुपात्तमध्यभागा ।
हरितमणिसमुद्गकस्य कृष्णा
　　श्रियमभृत प्रकटेव संधिराजिः ॥६१॥

2254　अधिनिशमवनेरपूरयत् यान्
　　कपिशितदिग्वलयं [1]तमोऽवकाशान् ।
न तपनरुचिभिः पुपूरिरे ते
　　बत मलिनस्य हि भूयसी विभूतिः ॥६२॥

2255　क्षपितरजनिरागतोऽपरत्र
　　प्रकटितराग न लज्जसे करैर्माम् ।
स्पृशसि यदधुना जहीहि कस्य
　　त्वमिति दिनात्ययखण्डनां स्मरन्ती ॥६३॥

2256　विरलविषम-[2]पत्रसंस्थमब्जं
　　चलदलि पल्लवहस्तचारु कृत्वा ।
भ्रमरविरुतिभिर्जगाद सेर्ष्या
　　तपनमितीव सरोजिनी सरोषम् ॥६४॥　　युगलकम्

2257　शरदिव दिवसावतारलीला
　　सकलमकाशतया श्रियान्वितासौ ।
क्षततिमिरमला निनाय दूरं
　　सरित इवाशु दिशः प्रसादलक्ष्मीम् ॥६५॥

---

१. C तमेवकाशम् ।　　२. B संस्थपत्रमब्जम् for पत्रसंस्थमब्जम् ।

2258 प्रकृतिशुचितया परावमर्शं
सपदि विसोढुमिवाक्षमाभिरारात् ।
स्पृशति दिनकरे करैः सरागं
दिशि दिशि सङ्कुचितं कुमुद्वतीभिः ॥६६॥

2259 अरुणकिरणदण्डघट्यमान-
स्फुटतिमिरौघविषा निशाभुजङ्गी ।
ग्रहगणमणिमण्डिता तदानीं
विगलितचन्द्रमरीचिकञ्चुकासीत् ॥६७॥

2260 दिवसविरतिखण्डनापराध-
स्मृतिसरुषोऽम्भसि बिम्बितोऽम्बुजिन्याः ।
न्यपतदनुनिमीषयैव भास्वा-
नरुणदलाङ्गुलिपादपद्ममूले[1] ॥६८॥

2261 निपतति शशिमण्डलं हहा किं
नभसि न दृश्यत एव तारकौघः ।
कुमुदवनमितीव गर्भबद्ध-
भ्रमररवैरथ पर्यदेवतारात् ॥६९॥

2262 स्फुरदरुणशिखाभिरामयोच्चै-
रुषसि विकासितपद्मयांशुमाली ।
त्रिदशपतिपुरीव संदिदीपे
विशदमरीचितया श्रियोल्लसन्त्या ॥७०॥

2263 द्रुतकनकरसच्छटाभिराम-
स्फुरदरुणांशुशिखावरुग्णमूलैः ।
प्रतिदिशमथ चस्खले तमोभि-
र्गगनजलाशय-कासरायमाणैः ॥७१॥

---

१. A, B, C पद्मपादमूले for पादपद्ममूले ।

2264 ग्रहमणिशबलं नभःसमुद्रं
सपदि लिलङ्घयिषुर्निदाघरश्मिः ।
दिशि दिशि विचकार दैर्घ्यभाजः
प्लवनरसादिव दूरमंशुबाहून् ॥७२॥

2265 दिवसकरकराहतं तदानी-
मदशनपङ्क्ति [1]कृतावभासहासम् ।
अमधुमदकृतामधत्त ताम्र-
त्विषमरविन्दमुखं कुशेशयिन्याः ॥७३॥

2266 उषसि घनतरान्धकारपङ्क-[2]
व्यतिकरमार्जननिर्मलं कराग्रैः ।
अकृत दिवसदर्पणं त्रिलोक्याः
सपदि विलोकनयोग्यमंशुमाली ॥७४॥

2267 कुमुदवनमलं व्ययोजि लक्ष्म्या
मुदमजहादतिखेदवानुलूकः ।
प्रलयमुपजगाम तारकौघः
सपदि विधौ विधुरत्वमभ्युपेते ॥७५॥

2268 स्फुरदरुणपलाशतालु विभ्र-
न्नवघनसौरभतामुपोढनिद्रम् ।
कमलमुखमजृम्भताभिरामं
स्फुटतरकेसरदन्तमम्बुजिन्याः ॥७६॥

2269 गुरुकलहरतालसच्छिलयोच्चैः
कृतमकरन्दरसस्पृहा नलिन्या ।
दिशि दिशि गुरुनृत्तलीलयेव
भ्रमरघटाकुलिता मिथस्तदासीत् ॥७७॥

---

१. A, C कृतावमास for कृतावभास ।
२. A, B, C अन्धकारअस्म for अन्धकारपङ्क ।

2270 मधुलिहि मकरन्दपानलोभात्

विकसितताम्रदलाग्रभागलग्ने ।

दिनकृति कमलेक्षणं नलिन्या

रचितकटाक्षमिवोद्ववाह लक्ष्मीम् ॥७८॥

2271 क्षयसमयसमीरणाभिघात-

क्षुभितमिवाथ महासमुद्रमध्यम् ।

अभवदुषसि जिह्मयमानकान्ति-

स्फुटतरलक्ष्ममलं मृगाङ्कबिम्बम् ॥७९॥

2272 उदयशिखरिशृङ्गवेदिकायां

नवरुधिरारुणकान्ति भानुबिम्बम् ।

अनुकृतदिवसप्रवेशलक्ष्मी-

प्रसवविशङ्कटगर्भशय्यमासीत् ॥८०॥

2273 नवविनिहितचीनपिष्टचर्चा-

च्छुरितविशेषकबिन्दुभानुबिम्बम् ।

मुखमभृत तिरस्कृतेन्दुकान्ति

स्फुरदरविन्दविलोचनं दिनश्रीः ॥८१॥

2274 उषसि विगलितान्धकारपङ्क-

प्लवशबलं घनवर्त्म दूरमासीत् ।

मधुरतरणितापयोगतारं

कमलवने मधुपायिनां च पङ्क्तिः ॥८२॥

2275 अविरलशिखिगर्भभानवीय-

स्फुरितमरीचिवितानधाव्यमानम् ।

दिनमभजत सर्वतोऽग्निशौचं

वसनमिव क्रमशोऽतिनिर्मलत्वम् ॥८३॥

2276　दिशि दिशि दिवसेश्वरस्य पाद्य-
　　स्थितिमिव पङ्कजिनी रसेन दित्सुः ।
नवकिसलयपाटलान्विरेजे
　　कमलकराग्रपुटान् प्रसारयन्ती ॥८४॥

2277　उदितवति दिवाकरेऽस्तशैल-
　　द्विरदपतिः कुमुदच्छटावदातैः ।
श्रियमतनुत भूरिभूतिचर्चा-
　　च्छुरित इवामृतदीधितेर्मयूखैः ॥८५॥

2278　गुरुविरहशुचा कुशेशयिन्या-
　　श्च्युत इव क्षणदाम्बुबाष्पबिन्दून् ।
विपुलदलविलोचनान्तराला-
　　दुषसि करैरहिमांशुरुन्ममार्ज ॥८६॥

2279　श्रियमभृत दिवाकरः प्रभाते
　　गज इव भिन्नकरालधातुरोधाः ।
स्फुरदरुणकराभिघातभग्न-
　　प्रचुरतमालसदश्चिताततनुश्रीः ॥८७॥

2280　दिशि दिशि जपतां नवार्करश्मि-
　　च्छुरणविपाटलदन्तमालमास्यम् ।
श्रियमनुचितगाढनागवल्ली-
　　दलकृतरागमिव व्रतेऽप्यवापत् ॥८८॥

2281　उदयगिरिगते सहस्ररश्मौ
　　नवकपिशा दिवसावताराक्ष्मीः ।
स्फुरितसरसनालिकाभिराम-
　　स्थितिचषकानुचकार पानगोष्ठीम् ॥८९॥

2282　प्रकटकुलिशकुन्तचक्रभास्वत्
　　परबलभीहितमत्तवारणाङ्का ।
दिशि दिशि ददृशे निशान्तपङ्क्तिः
　　[1]समरविमर्दभुवं विडम्बयन्ती ॥९०॥

2283　अमृदु ममृदुषा निशातमस्त-
　　द्व्यतिकरदोषमलीमसत्वमाप्ताः ।
स्फुरदरुणरुचा रुषेव दूरं
　　दिवसकरेण निरासिरे दशाशाः ॥९१॥

2284　[2]उदयगिरिमथोदितो विवस्वान्
　　विचकरिषुः किरणैर्निशान्धकारम् ।
स्फुरदरुणिमभिः करैरकार्षी-
　　द्दवदहनैरिव रुद्धसर्वदिक्कम् ॥९२॥

2285　ग्रहपटलमशेषमूषुर्षीभि-
　　र्दिनकरदीधितिभिः कृताभिघातम् ।
तिमिरमपतदन्तरिक्षमार्गात्
　　कुवलयवृन्दमिवाभ्रनिर्झरिण्याः[3] ॥९३॥

2286　क्षितिधरतनयेव पूरिताशा
　　प्रहतनिरर्गलदुन्दुभिप्रणादैः ।
श्रियमभृत निशावसानलीला
　　नवमहरागमसंमदं[4] वहन्ती ॥९४॥

2287　विघटिततिमिरौघदिग्विभाग-
　　प्रकटनभस्यभवन्निशावसाने ।
स्फुटदलनमनाश्च पद्मखण्डाः
　　सपदि हिमेतरदीधितिश्च तेषाम् ।.९५॥

---

१. A विसर्प भुवं for विमर्द भुवम् ।　　२. A उदयगिरिवोदितो ।
३. C''''मिवाश्रुतिः करिण्यः ।　　४. C सम्पदम् ।

2288 दिशि दिशि निशि संभृतं कराग्रै-
स्तिमिरमनर्गलमर्यमाचखण्डत् ।
क्षणमपि सहते नहि प्रगल्भां
क्वचिदहितस्य पुरः स्थितिं महस्वी ॥९६॥

2289 स्फुरदविरलकेसरार्गलाङ्क-
प्रकटपलाशकवाटपद्मगेहाः ।
मधुपशबरसन्निवेशवल्ल्यो
दिशि दिशि शिश्रियिरे श्रियं नलिन्यः ॥९७॥

2290 दयितमतिरुषा विलोकयन्त्याः
सरसविपक्षनखक्षताङ्किताङ्गम् ।
अभवदरुणिताक्षिण तत्र नूनं
निवसति चित्तभुवः प्रतापवह्निः ॥९८॥

2291 प्रमदगलिततारकांशुशारी-
कृतरुचिरोदरबाष्पबिन्दुभङ्ग्या ।
अभिसरति रसार्द्रतां विधित्सु-
र्द्रुतमपरापरनेत्रमण्डलीव ॥९९॥

2292 विकसनरभसेन हृत्प्रवेश-
प्रसरमिवाभिमतस्य दातुमन्तः ।
अपसरतितरां रसातिभार-
स्फुटतरमन्थरितापि पक्ष्मपङ्क्तिः ॥१००॥

2293 सरभसमपि तारकः कथञ्चित्
व्रजति न यावदपाङ्गवर्त्म दीर्घम् ।
सरति सपदि तत्प्रभा पुरस्ता-
च्चिरमपि तावदिवाक्षमा विसोढुम् ॥१०१॥

2294 इति दयितविलोकनाभिलाष-
स्फुरणपृथूभवदात्मनस्तरुण्याः ।
स्मरशरतरलाकृतेर्जजृम्भे
नयनयुगस्य सरागविभ्रमा श्रीः ॥१०२॥ चक्कलकम्

2295 श्रुतिपथजुषि तारतूर्यनादे
तरलदृशामलसं विकासलक्ष्मीम् ।
यदुकुलमिव नेत्रयुग्ममाप्नो-
दनवमकृष्णवलक्षताभिरामम् ॥१०३॥

2296 प्रमदभरभृतः कपोलभागात्
कमलदृशोऽगुरुपङ्कपत्त्रभङ्गः ।
व्यगलदतनुबाष्पपातभिन्नो
ननु मलिनस्य कुतश्चिरं व्यवस्था ॥१०४॥

2297 प्रथममतनुरागसम्पदं तां
चरममनुज्झितपूर्वरूपशोभाम् ।
उषसि रुचमवाप्य साधुमैत्रीं
न खलु तरां जहृषुर्न चक्रवाकाः ॥१०५॥

2298 धवलबिसलता रसेन कोकः
प्रविकटचञ्चुपुटोद्धताश्चखाद ।
क्षुध इव शशिनो वियोगहेतो-
र्गगनतलात्पतिताः [1]कला कथञ्चित् ॥१०६॥

2299 सरसि विकटचञ्चुकोटिलग्नां
सरभसवृत्तिरुपेत्य चक्रवाक्याः ।
हृद इव विरहव्यथाशलाकां
बिसकलिकां विचकर्ष चक्रवाकः ॥१०७॥

---

१. C omits कलाः ।

2300 चञ्च्वग्रखण्डितमुखाद्विचकर्ष सूत्र-
जालं मृणालशकलात् क्षणदाप्रियस्य ।
कोको निलीनमहिमांशुभयात्तदीय-
रन्ध्रोदरेषु करचक्रमिव क्रुधेन्दोः ॥१०८॥

2301 विस्रस्तपत्त्रपुटकेसरकोटिदष्ट-
पर्यन्तभागविकटोन्नतकर्णिकाग्राः ।
उच्छ्वासभग्नहरितच्छवयोऽर्करश्मि-
जालैरजृम्भिषत पङ्कजकोषदण्डाः ॥१०९॥

2302 दिक्पद्मिनीपरिसरास्पदताम्रपादः
कुर्वन्विकासिषु रुचिं नलिनेषु हंसः ।
आपीवरोडुपतिबिम्बमृणालदण्ड-
खण्डांश्चकर्ष शनकैः करसूत्रजालम् ॥११०॥

2303 [1]आपातभीतिनमितोन्नमितार्धदेह-
बद्धस्थिरक्रमविधूतपतत्त्रपङ्क्तिः ।
उच्चैः क्वणन्नवततार निवासयष्टि-
कोटेः शिखी विधुरयन्विरहातुराः स्त्रीः ॥१११॥

2304 अभ्युत्थिता शयनतस्त्वरितं यियासुः
संपीडितोच्छ्वसितनीविनितम्बबिम्बम् ।
संपश्यतोऽर्धविनिमीलितदृष्टि भर्तु-
रङ्के ह्रिया किल पपात चकोरचक्षुः ॥११२॥

2305 श्रोणीतटे न रशना करजक्षताङ्क-
सञ्जातगाढरुजि चारुदृशा बबन्धे ।
भूषा परा गुरुणि तत्पदपङ्क्तिरेव
तस्मिंस्तु काञ्चनशिलाविकटे तदासीत् ॥११३॥

---

१. A आभाति ।

2306 आकृष्य पाणिकमलेन च कर्णपाली-
मेकेन वल्लभविलोकननिश्चलाक्षम् ।
तस्थौ पुरन्ध्रिरपरेण न लब्धसन्धि-
र्माणिक्यकुण्डलमिति प्रविघूर्णयन्ती ॥११४॥

2307 द्वारि स्थिता विनिहितैककवाटपट्ट-
रुद्धार्धविग्रहतया गिरिकन्यकाश्रीः ।
प्रेयांसमैक्षत वधूः स्तिमितैकतार-
शारेण यान्तमपरा नतपक्ष्मणाक्ष्णा ॥११५॥

2308 स्तनपरिसरभागे दूरमावर्तमानाः
श्रिततनिमनि मध्ये किञ्चिदेव स्खलन्तः ।
ववुरतनुनितम्बाभोगरुद्धा वधूनां
निधुवनरसखेदच्छेदिनः प्राह्णवाताः ॥११६॥

2309 विघटितदलमुद्राबन्धसौगन्धिकान्त-
र्निबिडपुटकुटीरक्रोडकाराविमुक्तैः ।
उदयगतमनावीवारुवद्भिर्द्विरेफै-
स्तरुणमरुणरत्नच्छायमुष्णांशुबिम्बम् ॥११७॥

2310 प्रेङ्खत्पिङ्गार्कधामच्छुरणकपिशितश्च्योतदच्छिन्ननैश-
स्थूलाम्भोबिन्दुवृन्दाहितमधुरमधुस्यन्दसंदेहमुग्धैः ।
संरम्भारब्धकोलाहलमुखरमुखैः पत्त्ररन्ध्रप्रवेश-
प्राप्तानन्दैर्विरेजुर्मधुकरनिकरैः पूरिताः पद्मखण्डाः ॥११८॥

2311 कुर्वाणा रत्नधीनां शशधरपतनोपप्लवेनेव तन्वीं
तोयावस्थां क्रमेण प्रकटितककुभः संभृताम्भोजहासाः ।
तन्वन्तः खं खरांशोस्तरुणतरतमः स्तोमसंपिण्डितं स-
त्प्रत्यग्रप्रघृतलाक्षारसरुचिररुचो दूरमुस्राः प्रसस्रुः ॥११९॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
महाकाव्ये प्रत्यूषवर्णनम् नाम अष्टाविंशः सर्गः ।

---

## एकोनत्रिंशः सर्गः

2312 इति स्फुरत्किसलयपाटलार्चिषि
स्फुटोदये सवितरि सौखशायिकाः[1]।
अविस्खलत्सुललितबन्धया गिरा
गरीयसां गुरुमुपतस्थुरीश्वरम् ॥१॥

2313 विमुच्यतां शयनतलं दिवाकरः
करोत्करैर्विदलितविद्रुमारुणैः।
करोत्यसावुदयमहीभृतः क्रमात्
परिस्फुरन् स्फुटमिव पद्मरागताम् ॥२॥

2314 [2]क्रमादिमास्तव भवनेषु भानुमत्
प्रभाहतास्तदुपलसालभञ्जिकाः।
पृथून्मिषद्दहनकणोत्करच्छला-
त्तमश्छिदः सुवत इवार्यमार्भकान् ॥३॥

2315 अयं क्षणात् दयिततमेन भानुना
समागमस्तव भवतीति शंसितुम्।
स्फुरत्पदस्तरलितमौषसानिलैः
कुशेशयं नयनमिवाम्बुजश्रियः ॥४॥

2316 विवस्वतो विकचरुषः क्षपातमः
स्फुटज्जपाकुसुमविपाटलास्त्विषः।
विभान्त्यमूर्नभसि सुवर्णगैरिक-
च्छटा इवासितमणिपट्टकुट्टिमे ॥५॥

---

१. B वन्दिनः (footnotes)। २. B, C क्रमादिवास्तव....।

2317 श्रितोदये हततिमिरोत्करे जना
ददृशुर्दृशो दिनकृति बद्धसंभ्रमाः ।
खवर्त्मनो मुमुचुषि शीतरोचिषि
च्युतः पदान्न भवति गौरवास्पदम् ॥६॥

2318 ततस्ततीरुदयगतार्यमाश्मना-
महस्करे करनिकरैः स्पृशत्यदः ।
पिशङ्गितं गगनतलं विभाव्यते
तदुत्थया दहनरुचेव सन्ध्यया ॥७॥

2319 दिनश्रियो मुखमरुणारुणप्रभा-
पिशङ्गितस्फुटघनमेघराजिकम् ।
विराजति प्रतिनवकुङ्कुमच्छटा-
कृतत्विषं दधदिव पत्त्रमञ्जरीम् ॥८॥

2320 अपारयन्त्युपहतशीतदीधिति-
प्रभामिवाहिमकरधामसम्पदम् ।
निमीलितातनुतरतारकाधुना
विभावरी विशति महीध्रगह्वरम् ॥९॥

2321 निनाय यद्विरहविज्जृम्भणाकुलो
विभावरीं कथमपि साभ्युपागता ।
विलोकिता दयिततमा तथा मुदं
तनोति नो रजनिवियोगिपत्त्रिणः ॥१०॥

2322 यथा शशी पिपतिषुरस्तपर्वते
नवांशुमत्किरणविरुग्णचन्द्रिकः ।
करोत्यहो अपि निजसम्पदः स्फुटं
द्विषद्गता विपदधिकं सुखोदयम् ॥११॥ युगलकम्

2323　स्मरातुरप्रियतमपाणिजक्षती-
　　निशागमे नवनिहिता मृगीदृशाम् ।
　नयन्नसावधिकमनोज्ञरागतां
　　नवातपो निपतति गण्डमण्डले ॥१२॥

2324　विकासिभिर्दिशि दिशि गर्भनिर्भर-
　　स्रवन्मधुग्रहणधियेव सत्वरम् ।
　सरोरुहैर्दलपटलच्छलान्मिथः
　　प्रसार्यतेऽरुणमणिशुक्तिमण्डलम् ॥१३॥

2325　तनोत्यसौ नवकुशकोटिदष्टया
　　विभावरीजलकणमालया स्थली ।
　रसायुषामुपरि भरेण घूर्णतां
　　विपाण्डुरच्छविकुसुमोद्गमभ्रमम् ॥१४॥

2326　घनैरिवातनुतरचन्द्रकच्छल-
　　स्फुटामरायुधशतशोभिभिर्दिशः ।
　धुतैरमी विदधति पिच्छमण्डलैः
　　शिखण्डिनो रजनिपयः [1]परिप्लुताः ॥१५॥

2327　अधिक्षपं धवलकपोलमण्डल-
　　स्फुटोदितप्रतिमतया मृगीदृशाम् ।
　तदाहितामिव [2]परिपाण्डुरश्रियं
　　दधत्यमी तव भवनप्रदीपकाः ॥१६॥

2328　उपेयुषीं कमलरजोवृतेक्षणो
　　न वीक्षते रथचरणाह्वयः प्रियाम् ।
　सुखं चिरादुपनतमप्यसंशयं
　　व्रजत्यहो विधिहतकस्य दूरताम् ॥१७॥

---

१. A परिप्लुतैः ।　　२. A, B परिपाण्डुरां श्रियं for परिपाण्डुरश्रियम् ।

2329 विभावरीविरतिहतस्य दुन्दुभेः
कृतव्यथं स्वनमवकर्ण्य कामिभिः ।
पुनस्तरां क्षणशयितैर्निमील्यते
विलोचनं रतरसजागरारुणम् ॥१८॥

2330 प्रभातजं विरहपरिप्लवं वधू-
रचिन्तयन्त्यनुनयमग्रहीन्नया ।
यियासते सुहृदि न सा न दूयते
कुतोऽथवा सुखमनुदर्कदर्शिनाम् ॥१९॥

2331 न [1]निष्ठिता ननु रजनी विलम्ब्यतां
तदागमे पुनरपि मा कृथाश्चिरम् ।
इति स्रवन्नयनजलं प्रियोदितं
गतं प्रति श्लथयति कामिनो मनः ॥२०॥

2332 निशीथिनीव्यपगमदुन्दुभिस्वनै-
र्विनिद्रितामपि सहसाभ्युपागता ।
यियासुरप्यभिमतकण्ठगोचरं
न कामिनी श्लथयति बाहुपञ्जरम् ॥२१॥

2333 वियोगजां शुचमसहैर्व्यपोहितं
निकेतनैरुषसि [2]निषिध्यतेऽधुना ।
अपावृतप्रकटकवाटसम्पुट-
स्फुटारवैर्गमनमिवाश्रितभ्रुवः ॥२२॥

2334 [3]अदः क्रमाद्विकटनितम्बकानन-
द्रुमान्तरक्षणघटितं दिवा पतत् ।
विराजति स्फुटविहगाण्डमण्डल-
श्रियं दधद्ग्रहकुलमस्तभूभृतः ॥२३॥

---

१. B समाप्ता (footnotes) । २. B निरुध्यते ।
३. B अधः for अदः ।

2335　दिगङ्गनानवकलधौतमेखला
　　नभस्तलोदधिवडवानलत्विषः ।
निशातमः क्षितिधरवज्रकोटयो
　　विभान्त्यमूस्तरणिरुचोऽरुणोद्गताः[1] ॥२४॥

2336　विभर्त्यसौ पृथुतरमण्डलोरसा
　　विभावरी दृढपरिरम्भविभ्रमैः ।
शशच्छलाच्छिशिरकरस्तदुन्नत-
　　स्तनासितागुरुनवपत्त्रमञ्जरीम् ॥२५॥

2337　स्फुटोदयः पुनरपि बन्धविप्लवं
　　पुरा तव व्यपनयति क्षपाकरः ।
प्रतीक्ष्यतां तदवधिरत्र मा कृथा
　　मनागपि क्षपितगुरुश्रियं शुचम् ॥२६॥

2338　हतप्रभे शशिनि गतेऽस्तगह्वरं
　　विहाय तद्वपुरवतीर्णमम्बरात् ।
इति क्वणन् मधुपमिषेण लाञ्छनं
　　कुमुद्वतीमिव खलु [2]धीरयत्यदः ॥२७॥　　युगलकम्

2339　मधुस्पृहानिभृतनिलीनषट्पदं
　　कुशेशयं हृदयमिवारविन्दिनी ।
विभर्त्यसौ तपनवियोगसज्ज्वर-
　　ज्वलच्छिखाशतशिखिदाहधूसरम् ॥२८॥

2340　अचन्द्रिकामलयजपङ्कचर्चना
　　अतारकागणमणिमेखलागुणाः[3] ।
दिगङ्गनाः शशिविधुरा इवाधुना
　　दधत्यमूर्लुलिततमःकचां श्रियम् ॥२९॥

---

१. B नवोद्गताः ।　　२. A, B धीरयत्यधः ।
३. B, C परिमेखलागुणाः ।

2341 शशित्विषं त्वरितमिवोदराश्रयां
रिरक्षिषुर्दिनकररश्मिविप्लवात् ।
असावितः कृतनिबिरीससंपुटं
कुमुद्वती रचयति पत्त्रमीलनम् ॥३०॥

2342 [1]पपौ तरां प्रियतमया समं मधु
प्रतिक्षपं दशशयनेष्वशेत यः ।
रसायुषः शशिधर तस्य साम्प्रतं
समञ्जसं सह कुमुदेन बन्धनम् ॥३१॥

2343 तथा स्वपन् मधुरसपानमत्तता-
विचेतनः सरसिजकुक्षिकोटरे ।
यथा क्रमादविदितबन्धनव्यथः
शिलीमुखः स्फुटमधुना विबुध्यते ॥३२॥

2344 दधद्वपुर्विकसितकेतकीरजो
[2]विरूषितं कुमुदवनाद्विनिर्गतम् ।
विपाण्डुरं तदुदरवर्तिचन्द्रिका-
च्छटाशतस्नपितमिवालिमण्डलम् ॥३३॥

2345 श्रितोदयारुणकरटङ्ककुट्टना-
विघट्टितं दिशि दिशि धाम [3]भासुरम् ।
गलत्यदः सवितुरिवास्तपर्वत-
भ्रमार्पितस्फुटवपुषः क्षपापतेः ॥३४॥

2346 समुन्मिषत्तरणिकराभिघातभी-
परिप्लुते शशितिमिरे शशच्छलात् ।
सहस्थिते इव सुरनाथ ! नश्यतो
विरोधिता विपदि परस्परं कुतः ॥३५॥

---

१. C पपौ तटम् । २. B छुरितम् (footnotes) ।
३. A, B भास्यरम् ।

2347　स्फुटाक्षताञ्चितखचितोडुशारता-
　　मुपागते फलक इवाम्बरेऽधुना ।
श्रितोदयापरगिरिविष्टरावुभौ
　　दुरोदरं तनुत इवेन्दुभास्करौ ॥३६॥

2348　मृणालिनीदलभिदुरं[1] यथा यथा
　　समुन्मिषत्यहिममरीचिमण्डलम् ।
तिरस्कृतावतमसराशिमण्डलं
　　तथा तथोन्नमदिव लक्ष्यते नभः ॥३७॥

2349　अधश्च्युतं [2]मम वपुषोऽर्धमित्यपि
　　क्षपाकृता भ्रममभिवीक्ष्य बिभ्रता ।
जलाशयप्रतिमितमस्तपर्वते
　　जिघृक्षुणा तदिव दिवोऽवतीर्यते ॥३८॥

2350　इतोऽधुना गिरिगुरुघातघट्टना-
　　विघूर्णितार्णवजलदेवतेव ते ।
मनोरमामलिततिमिश्रितां श्रियं
　　बिभर्त्यसौ भव ! भवनारविन्दिनी ॥३९॥

2351　सरागतां ककुभि गतः शतक्रतोः
　　क्रमादमूं जिगमिषसि प्रचेतसः ।
सहासमित्यलिकुलहुङ्कृतैरिव
　　प्रभाकरं कथयति नाथ ! पद्मिनी ॥४०॥

2352　शिलीमुखः सरसिजपक्ष्मपेशलं
　　विलम्बितं निगडमिवार्धविच्युतम् ।
दधन्मधुव्यतिकरलग्नमङ्घ्रिणा
　　विसर्पति त्वरितमपोढबन्धनः ॥४१॥

---

१.　B सुकुमारः (fooootnotes) ।　　२.　B समवपुषो for ममवपुषो ।

2353 अहर्पतेश्चिरमनिमेषदर्शन-
क्लमादिव स्रुतघनबाष्पशीकरम् ।
सरोजिनीरजनिपयःपरिप्लुतं
बिभर्त्यसौ विकसितमब्जलोचनम् ॥४२॥

2354 शिलीमुखा विधुतपतत्त्रमारुत-
प्रसारितैरुषसि सुगन्धयन्त्यमी ।
दिशोऽधुना निजतनुलग्नविस्फुटत्
कुशेशयोत्करमकरन्दशीकरैः ॥४३॥

2355 सरःश्रियः [1]शफरुकशोभिनोम्बुजात्
सविभ्रमभ्रमरघटा विवस्वता ।
इतोऽधुना शितिमणियष्टिमण्डली-
विडम्बिका करनिकरेण कृष्यते ॥४४॥

2356 मनोरमस्मितहसितां परिस्रव-
न्निशाजलस्फुटरुदितोत्पलेक्षणाम् ।
इतोऽधुना श्रितकिलिकिञ्चितामिव
प्रभाकरो रमयति नाथ ! पद्मिनीम् ॥४५॥

2357 भुजालतामशिथिलकण्ठवर्तिनीं
रतोत्सुका दयिततमस्य कुर्वती ।
विजृम्भते किल विनिमग्नपीवर-
स्तनद्वया तदुरसि मत्तकाशिनी ॥४६॥

2358 रतोत्सवप्रमदविशेषपीवरे
पराप्नुयात्कथमिव [2]तेऽत्र मेखला ।
नितम्ब इत्यभिदधदुच्चकैः शुकः
सहासतामुषसि करोति सुभ्रुवः ॥४७॥

---

१. B भूषणसमुद्रकर (footnotes) । २. A तेऽत्रमेखला ।

2359　न लाघवं वलनविलासविभ्रमे
　　विलोकितं क्वचन मयेदृशं तनोः ।
　कलारवैर्वदति नितम्बमण्डले
　　नियोजिता मधुरमितीव मेखला ॥४८॥

2360　निशीथिनीं सममतिवाह्य कामिना
　　व्रजत्यसावुषसि मुहुः स्खलन्त्यपि ।
　तदुत्सुका गलितधृतिः प्रतिक्षणं
　　निरीक्षते विवलितकंधरं वधूः ॥४९॥

2361　समुत्थितः शयनतलात् क्षमारज-
　　श्छटाहतोभयपृथुपार्श्वविग्रहः ।
　दधत्सदानवमथुरागतः श्रियं
　　मतङ्गजोऽपर इव [1]लक्ष्मणाग्रजः ॥५०॥

2362　नभस्वतामुदवसितोदरोत्थिताः
　　सुगन्धितां विदधति वासरेणवः ।
　पतन्त्यमूर्ग्रहततयो दिवाकर-
　　प्रभाहता दिशि दिशि वासरेऽणवः ॥५१॥

2363　सरोजिनी पयसि हृदीव बिम्बितं
　　श्रितं तटानहिमकरं दधार या ।
　तयालयः स्फुटितकुशेशयोत्थया
　　न तोषिता न हि मकरन्दधारया ॥५२॥

2364　एषा विशालविशिखामुखविप्रकीर्ण-
　　हर्म्योपकारकुसुमप्रवणालिपङ्क्तिः ।
　अभ्येत्य बन्धुजनतेव निशान्धकार-
　　मर्कांशुभिन्नमनुशोचति तारनादैः ॥५३॥

---

१. B लक्ष्मणाग्रजः शत्रुघ्नः (footnotes) ।

2365 सत्कर्णिकाकनकविष्टरसन्निविष्ट-
मूर्तिर्निजं कमलकेसरपानसङ्गात् ।
रोलम्बचक्रमुपरि भ्रमणानुबन्धि-
पारिप्लवत्वमिव शिक्षयतीश ! लक्ष्मीः ॥५४॥

2366 भाति द्विरेफकुलमुज्झितनैद्रतन्द्र-
रक्तारविन्दमकरन्दसपीतलग्नम् ।
अध्यूषुषा शतमखेन मृणालसूत्र-
गर्भं विलोचनसहस्रमिव व्यपास्तम् ॥५५॥

2367 लोकान्तरं जिगमिषोः शशिनः प्रचण्ड-
भानुप्रतापविधुराश्चिरमस्तशैलः ।
तारावरोधनवधूः शिरसा बिभर्ति
तुङ्गात्मनां समुचितं ध्रुवमेतदेव ॥५६॥

2368 चेतो दुनोति सुदृशां ननु तारनाद-
निष्ठो वियोगविधुरं रणितेन शङ्खः ।
व्यक्तं प्रकाशयत एव बहिर्विशुद्धि-
मत्यन्तवक्त्रहृदयात् बत कस्य शान्तिः ॥५७॥

2369 कर्णे कुशेशयदृशामुपशल्यवर्ति-
प्रेयोवियोगविषमज्वरकातराणाम् ।
क्रौञ्चस्य सम्प्रति गिराशनिधारयेव
मर्मच्छिदा करकरायितमापतन्त्या ॥५८॥

2370 आप्रश्नपूर्वमुपगूढवतः प्रियस्य
बाष्पाम्बुपूरपिहितातनुलोचनायाः ।
चक्रीकृतौ मदनलास्यककांस्यताल-
लीलां स्तनौ मृगदृशः क्षणमीश ! धत्तः ॥५९॥

2371 प्रत्यग्रदंशजनितश्वयथूत्सलील-
मम्भोजकोमलकराङ्गुलिकोटिभागैः[1] ।
बिम्बाधरान्मधुरसीत्कृति संस्पृशन्त्यः
कान्ताः प्रयान्ति दयितान्तिकतोऽधुनैताः ॥६०॥

2372 भ्रूविभ्रमं विदधतो बहुधैवतं त-
मास्फालिताविकलनिःस्वनवल्लकीकाः ।
गायन्ति किंनरपुरन्ध्रिगणाः शशाङ्क-
मौले ! विभातसमये तव भिन्नषड्जम् ॥६१॥

2673 भ्रमणविधुतपक्षैः पीतमाकाश एव
प्रतिककुभमकुण्ठोत्कण्ठमारादि्द्वरेफैः ।
दलपटलविकासस्थूलबिम्बाम्बुजोत्थं
विकिरति मकरन्दक्षोदमुच्चैः समीरः ॥६२॥

2374 इति गिरमुपकर्ण्य प्रेयसीबाहुबन्ध-
व्यतिकरकृतरत्नावापकव्यक्तचिह्नम् ।
अमृतकलशशिमौलिः कण्ठपीठं दधानः
सुरभिपरिमलाङ्कं हेमपर्यङ्कमौज्झीत् ॥६३॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवे राजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये महाकाव्ये
भगवत्प्रबोधनवर्णनम् नाम एकोनत्रिंशः सर्गः ।

---

१. C कोटभासः for कोटिभागैः ।

त्रिंशः सर्गः

2375 [1]इत्थं सराग-शशभृत्परिभोगलीला-
विच्छिन्न-रात्रि-रशना-[2]मणिकिङ्किणीभिः ।
नक्षत्रसन्ततिषु सन्दधतीषु साम्य-
मस्ताद्रिसानुपदवीपरिपुञ्जितासु ॥१॥

2376 विष्यन्दमान-मधुशीकर-लोभलीन-
भृङ्गावली-चरणबन्धुर-केसरेषु ।
पद्माकरेषु विकसत्सु शनैनदाघ-
धामांशुभिन्न-दलमण्डलसन्धिबन्धम् ॥२॥

2377 प्रातस्तनानिल-विकम्पित-पुण्डरीक-
पक्ष्माग्रकोटिघटिते सलिलाशयेषु ।
निद्राविमुक्ति-वलितावयवापवद्ध-
लक्ष्मीवधूपरिमलश्रियि धूलिचक्रे ॥३॥

2378 शैलालिवत्स्फुटयति स्फुटसर्वभाव-
व्यक्तिक्रमेण दिवसे मुखरागशोभाम् ।
अभ्यर्च्य कालमुसलश्चरणौ मृगाङ्क-
चूडामणेरुदपतद्वधामवीथीम् ॥४॥ चक्कलकम्

2379 तेन व्यलोकि दिवमुत्पताग्रवर्ति
विस्पष्टलक्ष्म परिणाहि मृगाङ्कबिम्बम् ।
उन्निद्र-कुन्ददलपाण्डुर-मण्डपिण्ड[3]-
मध्यास्यमानमिव कालियपन्नगेन ॥५॥

१. B adds ओं in the beginning।
२. B····रशनामलकिङ्किणीभिः for रशनामणिकिङ्किणीभिः।
३. A, C reads पाण्डुरमण्डविम्ब for पाडुंरमण्डपिण्ड।

2380 सम्पश्यति स्म स तडित्स्फुरणानुबन्ध-
मादीर्घमभ्रशकलं स्थितमन्तरिक्षे ।
उच्छ्वासलक्ष्य-रुधिरारुणकान्तिकण्ठ-
च्छेदं महाज्झषमिवाम्भसि पङ्कलीनम् ॥६॥

2381 अन्योन्यसंवलन-वेल्लितपल्लवाग्र-
विश्लेषनिर्दलित-केतुशिखांशुकौघाः ।
उन्मूल्यमान-शिखरस्खलदर्धचन्द्र-
रत्नप्रभाखचित-काञ्चनतोरणाग्राः ॥७॥

2382 अभ्याहता विशशरुर्जवमारुतेन
तस्याशु दिक्षु सुरसिद्धविमानसङ्घाः ।
वाणाग्निदीपित-पुरत्रयतायमान-
नानाविधावयव-विभ्रममूहिवांसः ॥८॥ युगलकम्

2383 केशेषु तस्य कृतसन्निधयो मुहूर्तं
कंसाततायिन इवाञ्जननीलभासः ।
उष्णीषरत्नकिरण-द्विगुणायमान-
सौदामनीवलयिनो जलदा बभूवुः ॥९॥

2384 तस्योत्थितस्य सहसा घनवर्त्मसीम्नि
धत्ते स्म कर्णशिखरं श्रियमव्यवस्थाम् ।
उष्णीषभिन्न-हृदयस्तनयित्नुलग्न-
सौदामनीविकटहाटकमञ्जरीकम् ॥१०॥

2385 पिङ्गोर्ध्वलोचनकृशानु-शिखासहस्र-
मस्यान्वकारि मुखमण्डलमन्तरिक्षे ।
साम्भोभरेण गमनोत्थमरुद्विवर्त-
भाजाम्बुवाहशकलेन तडिद्वृताग्रे ॥११॥

2386 तस्य प्रतीपमगमत् गमनानिलेन
विक्षिप्यमाणसलिला क्षणमन्तरिक्षे ।
मन्दीकृतोष्णकरमण्डलभासुरोर्ध्व-
नेत्राग्नितापकृत-शोषभियेव गङ्गा ॥१२॥

2387 विस्रंसितोडुरशनं गलदिन्दुगौर-
गङ्गादुकूलमकरोत्स दिवस्तदानीम् ।
विस्तीर्णमम्बरनितम्बमनम्बुदेन्दु-
बिम्बाननाम्बुरुहचुम्बनबद्धतृष्णः ॥१३॥

2388 जह्रे मनोऽस्य मृदुमारुतपूर्यमाण-
रन्ध्रैर्हिमाद्रितटकीचकचक्रवालैः ।
गम्भीरतारमधुरक्वणितैर्नयद्भि-
रुत्कर्णतां तरणिकूबरिवाजिपङ्क्तिम् ॥१४॥

2389 ऐक्षिष्ट विस्फुरितकाञ्चनकल्पवल्ली-
विस्तारिपक्ष्मशिखरच्छदचक्रवालम् ।
कैलासशैलमसकृत्स जगत्त्रयैक-
लक्ष्म्याः स्थितं धवलविभ्रमपुण्डरीकम् ॥१५॥

2390 फेनावली-धवलचामरचक्रवाल-
भूषाभिरामजवनस्थिरसप्तवाहाम् ।
भागीरथीं रथधुरामिव घर्मरश्मे-
र्वीक्ष्यैकपिङ्गलगिरौ स मुदा ववन्दे ॥१६॥

2391 तेन स्खलत्खलखलामुखरा कराल-
कैलासकूटविकटोर्मिघटासहस्रा ।
सङ्क्रान्तकैटभनिसूदनपादपद्म-
प्रेङ्खनखच्छविरिवैक्षत जह्नुकन्या ॥१७॥

2392 मज्जत्कुबेरतरुणीगलितावतंस-
हासाभिरामतटमार्गमसावपश्यत् ।
विस्तारिमानससरः सलिलोर्मिभङ्ग-
पर्यस्तशीकरसकाञ्चनवालुकाम्भः ॥१८॥

2393 वीचीसमीरधुत-काञ्चनपुण्डरीक-
पर्यस्तकेसरपराग-पिशङ्गिताम्भः ।
अच्छोदमैक्षत स देवपुरन्ध्रिपाद-
लाक्षारुणीकृत-शिलातलतीरलेखम् ॥१९॥

2394 आराधन[1]प्रवणकासरदैत्यवंश-
कण्ठप्रसाधनधियेव विलम्ब्यमानाः[2] ।
चण्ड्या यदीयमणिकन्दरमन्दिराग्र-
विस्तारितोरणगताः प्रविभान्ति घण्टाः ॥२०॥

2395 स्थूलेन्द्रनीलमणिशृङ्गरुचोऽथ तस्य
कल्माषिताखिलदिगन्तरमुन्मिषन्ती ।
भूयस्तरां तरणिमार्गरुरुत्सयाशु
मुक्ताःशिखा इव ददर्श स मेकलाद्रेः ॥२१॥ युगलकम्

2396 लीलानिमग्न-शबरीकुचकुम्भपीठ-
सङ्क्षोभजर्जरितवीचिघटासहस्राम् ।
रेवामसौ सरलवञ्जुल-जालजम्बू-
स्तम्बप्रसाधिततटामवलोक्य रेमे ॥२२॥

2397 कण्ठग्रहप्रणयिना ददृशेऽथ तेन
विन्ध्यश्रियो मणिशिखोज्ज्वलमेखलायाः ।
रेवापगाम्बु-पृथुपीननितम्बबिम्ब-
विस्रस्तमम्बरमिवातनुपादमग्नम् ॥२३॥

---

१. B महिषासुर (footnotes) । २. B दीयमाना (footnotes) ।

2398 संवीततीरवन-रूढतमालखण्ड-
लोलानिलाकुलित-नीलजलांशुकश्रीः ।
तेन व्यलोकि वरुणालयवल्लभाग्र-
लीलाभिसारणधियेव कलिन्दकन्या ॥२४॥

2399 सेवाविचक्षणतयेव दवाग्निदग्ध-
कालागुरु-प्रचुरधूमशिखा-कदम्बैः ।
कुर्वन्तमैक्षत महेन्द्रमसावनल्प-
कल्पद्रुमांशुकततीः सुरभीः सुराणाम् ॥२५॥

2400 विस्पष्टफेनधवला विरलोर्मिभङ्ग-
निःसङ्गसङ्गतपयः प्लवरोधसं सः ।
लाङ्गूलिनीं सरितमाकलयाञ्चकार
तत्पादगोचरगतामिव सौरभेयीम् ॥२६॥

2401 वीक्ष्यावतंसितविकासिलवङ्गपुष्प-
मालाः स सह्यगिरिकाननशाखिवीथीः ।
रेमेतरां सुरमतङ्गजगण्डकाष-
लीलावरुग्ण-सरलोन्नततालखण्डाः ॥२७॥

2402 उत्फुल्ल-तीरतरुखण्डलतासखीभिः
सङ्ग्रथ्यमाननिजपुष्पभरावतंसाः ।
आबिभ्रतीं भ्रमरनीलरुचः स वीचि-
वेणीलतास्तदनु भीमरथीमपश्यत् ॥२८॥

2403 [1]आमग्न-कुन्तलवधूकुचकुम्भ-भार-
हारप्रभाद्विगुणितच्छविफेनहासाम् ।
गोदावरीं चरणचुञ्चुचकोरचक्र-
चञ्च्वग्रचुम्बित-विलोलजलामपश्यत् ॥२९॥

---

१. A 30th श्लोक preceds the 29th श्लोक ।

2404 उल्लासिशीकर-करालफणासहस्र-
कल्लोलनागकुलसङ्कुलमध्यभागाम् ।
[१]वेणां स्फुरत्तिमिरतातिगभीरतालु-
मूलां रसातलभुवः सदृशीं ददर्श ॥३०॥

2405 [२]तस्योपयुक्तटकानन-नारिकेल-
वल्लीफलप्रकर[३]शीतलगर्भतोयाः ।
अन्वायिनः कटकवर्त्मसु पारियात्र-
शैलस्य चक्रुरुपभोगसुखान्निवासान् ॥३१॥

2406 मीनावलीसरभसाप्लुतिघट्टिताम्बु-
वीची विलोलविरुवत्कुररी करालम् ।
कावेर्यलक्ष्यत जलं दधती च तेन
निःशङ्करङ्कुकुलसङ्कुलकूलकच्छा ॥३२॥

2407 आविर्भवत्स्मितमनोहरगण्डभित्ति-
भागश्चमूचरपुरन्ध्रिगणः सलीलम् ।
चर्मण्वतीपुलिनवर्त्मनि [४]तस्य हारि-
हारीतकण्ठविरुतार्पितकर्ण आसीत् ॥३३॥

2408 आवासितस्य तटवर्त्मनि तस्य ताल-
खण्डप्रकाण्डदलताण्डवनप्रगल्भाः ।
सिप्रातरङ्गमरुतोऽनुचराङ्गनानां
पीनस्तन-[५]क्षतरुजं सुरतेषु जह्रुः ॥३४॥

---

१. C वीणां for वेणां । २. B तस्योपवीत for तस्योपयुक्त ।

३. B शीकर for शीतल ।

४. A, C reads हारहारिहारीत for तस्य हारि हारीत ।

५. A, C क्षितिरुजं for क्षतरुजम् ।

2409 संवादिकाननतलस्य निवेशलक्ष्मी-
मद्रेरसावधिकमृक्षवतोऽभ्यनन्दत्[1] ।
पादावनौ कतिचिदेव दिनानि बद्ध-
संस्थो निशीव तमसाहृतदृष्टिरासीत् ॥३५॥

2410 गच्छन् विशङ्कटमसौ कटकं सुवेल-
शैलस्य काञ्चनशिला-शकलावकीर्णम् ।
वेलाविलोल-वरुणालय-वीचिभङ्ग-
पर्यस्त-बाडवकृशानुमिवैक्षताराात् ॥३६॥

2411 तेन व्यलोक्यत कपोलतलायमान-
विस्पष्टपाकलवलीफलकन्दलाढ्या ॥
घ्राणानुलेपि नवचन्दनखण्ड-गन्ध-
हृद्यामला मलयपर्वतकाननश्रीः ॥३७॥

2412 लक्ष्मीभृतस्त्रिभुवनाक्रमणप्रगल्भ-
सर्वोन्नतेर्मलयभूमिभृतोऽभ्रसिन्धुम् ।
पुण्यस्थितिं मुररिपोरिव पादमूल-
भागोत्थितामभिननन्द स ताम्रपर्णीम् ॥३८॥

2413 पर्यस्तरत्नकिरणाङ्कुरदन्तुरेषु
वेलातटेषु कृतसैनिकसन्निवेशः ।
अम्भोनिधिं स निरवर्णयदुल्लसद्भि-
रुत्तम्भितोडुपथमूर्मिघटासहस्रैः ॥३९॥

## समुद्रवर्णनम्

2414 उन्नालनीलनलवञ्जुलनालिकेर-
ताम्बूलवल्लिवलयाकुलकूलकच्छम् ।
आश्चर्यधाम दधतं सततप्रसन्न-
मप्यप्रसन्नमुपपादितशोभमम्भः ॥४०॥

---

१. B····वतोऽधिनन्दत् ।

2415 विस्रंसमानसलिलामलनीविबन्ध-
मास्फालयन्तमतिकाममिवोर्मिहस्तैः ।
आबद्धरत्नवलयोज्ज्वलकाञ्चिदाम
वेलाङ्गनापुलिनपीननितम्बबिम्बम् ॥४१॥

2416 उत्सङ्गसङ्गिविलसत्तटिनीपुरन्ध्रि-
लीलार्पणारभसयेव निवेशयन्तम् ।
आवर्तचक्रचषकेषु तरङ्गहस्त-
व्याकृष्टतीरतरुपुष्पभरावतंसान् ॥४२॥

2417 प्रेङ्खत्कपालशकलामलशङ्खशुक्ति-
माच्छादिताम्बरघनामितवीचिबाहुम् ।
और्वाग्निपिङ्गलशिखाविकरालकेश-
मुत्प्लुत्य भैरवमिवासकृदारसन्तम् ॥४३॥

2418 लक्ष्मी-सुरा-विमलकौस्तुभ-पारिजात-
चन्द्रामृतापहरणोत्थितया शुचेव ।
हेमाद्रिकूटविकटार्चिषि निर्व्यपेक्ष-
मात्मानमौर्वदहने विनिपातयन्तम् ॥४४॥

2419 गम्भीरगर्भघटितास्पदकालकूट-
शेषाग्निदाहशमनार्थमिव क्षपासु ।
ज्योत्स्नासुधां विकटमौक्तिकदन्तपङ्क्ति-
शोभाधरैर्विवृतशुक्तिमुखैः पिबन्तम् ॥४५॥

2420 प्रेङ्खत्प्रवालकिरणाच्छुरितं वहन्त-
मावर्तचक्रपरिवर्तगभीरमम्भः ।
संवादि-कौस्तुभमयूख-शिखावकीर्ण-
दैत्यायुधव्रणकरालमुरारिवक्षः ॥४६॥

2421 शैलाभिघातशकलीकृतमप्यखण्ड-
माकृष्टरत्नमपि रत्ननिधित्वमाप्तम् ।
लक्ष्मीमदग्धदशमप्यसमौर्ववह्नि-
दाहाकुलं चिरगतामपि नोत्सृजन्तम् ॥४७॥

2422 वज्राभिघातभयकातरतोयलीन-
माहेन्द्रनीलमणिशैलशतप्रकाशम् ।
गर्भान्धकारमिव शेषफणासहस्र-
माणिक्यरश्मिगलहस्तितमुद्गिरन्तम् ॥४८॥

2423 प्रेङ्खत्करालमणिरश्मिशताभिनद्ध-
कल्लोलकेतुपटलस्थगितान्तरिक्षम् ।
उद्दामवाजिगजसाधनमभ्युपेत्य-
गृह्णन्तमाशु विजिगीषुमिवाखिलाशाः ॥४९॥

2424 वेलाङ्गनाभिरभितो धुतवीचिताल-
वृन्तानिलाकुलितफेनदुकूलपट्टम् ।
ताभ्यो दिशन्तमसकृज्जलवेगनुन्ना-
रत्नावलीरविरलाः स्फुरदिन्दुगौरीः ॥५०॥

2424 उत्थाय दूरमसकृत् सुरनाथमुक्त-
वज्राभिघातकलनाशरणागतानाम् ।
क्षोणीभृतामनिशमप्यकुतोभयानां
सर्वासु दिक्षु भयहेतुमिवेक्षमाणम् ॥५१॥

2426 दिग्भ्यः क्रमादविरलोत्कलिकानुबन्ध-
मभ्येयुषीः सरभसं सरितः सरागाः ।
विस्पष्टदुग्धजलकप्रविजृम्भमाण-
चेतोहरस्थिति परिष्वजमानमारात् ॥५२॥

2427 ज्योत्स्नातपं विकटवीचिघटासहस्र-
मध्यास्पदं सपदि दुग्धधिया विवेक्तुम् ।
आवाञ्छता सरभसं तटराजहंस-
यूथेन बन्धुरगलेन निषेव्यमाणम् ॥५३॥

2428 विस्फूर्जदौर्वशिखिकालनिपीयमान-
मालोक्य सङ्कुचकमायुरिवाभितोऽम्भः ।
प्राप्तं क्रमाद्विरसतां भजमानमाशु
सत्कूर्चकेसरघनां तटकाननोर्वीम् ॥५४॥

2429 औवाग्निहेतिशतमप्यकृशानुताप-
सत्तानमप्यतिगभीरतयानुयातम् ।
सन्नागमप्यनवसन्न-गिरिप्रकाण्ड-
मिन्दुप्रभोज्झितमपि स्फुटचन्द्रिकाढ्यम् ॥५५॥

2430 दिक्चक्रवालरभसोपगतप्रविष्ट-
सुस्वादुनिर्झरवतीजलसंप्लवेऽपि ।
अम्भः श्रिया विरसया प्रकृतेरिवौवं-
वह्न्यारवैरभिदधानमसुत्यजत्वम् ॥५६॥

2431 गाम्भीर्यशालि मणिरागपिशङ्गमम्भ-
स्तत्रा[1]प्यनन्त-भुजगाधिपभोगशय्याम् ।
तामाश्रितं विकटकुक्षिपुटस्थलोक-
मभ्युद्वहन्तमधिकं हरिमेव सारम् ॥५७॥

2432 उत्क्षिप्तपक्ष्मफणमण्डल-भोगिहस्त-
[2]मभ्रङ्कषोल्बणशिखं ग्रसमानमम्भः ।
वेलानिलाहतिविघट्टितवीचिघोषैः
सन्तर्जयन्तमिव सन्ततमौर्ववह्निम् ॥५८॥

---

१. C तत्राप्यनन्य भुज for तत्राप्यनन्तभुज ।
२. B···मभ्रङ्कषोल्बणमुखम् for····मभ्रङ्कषोल्बणशिखम् ।

2433 आवर्तमण्डलकुकुन्दरबद्धशोभ-
कल्लोलपीवरनितम्बतटान्तरेषु ।
पर्यस्तशुक्तिनयनं गलदच्छहारि-
रत्नप्रभानिवसनेषु सरिद्वधूनाम् ॥५९॥

2434 सन्नागमक्षततिमिश्रितमुत्प्रवाल-
मुद्रागमाकुलमलङ्घनतामवाप्तम् ।
सश्रीफलस्पृहतरप्लवगं वनौघ-
मुत्तालमुच्चमरसत्त्वजुषं वहन्तम् ॥६०॥

2435 उल्लासिभिः प्रतिदिशं विकटोर्मिभङ्गै-
र्बालाष्टमीशशधरप्रतिबिम्बगर्भैः ।
उत्तप्तहेमघटितां परिकल्पयन्त-
मायानपङ्क्तिमिव तोयतुरङ्गमाणाम् ॥६१॥

2436 संसक्तबिन्दुपटलानविलुप्तशुक्ति-
मत्स्यश्रियो मकरदन्तकबद्धशोभान् ।
वीचीन् क्रमेण दहता भिषजेव शश्व-
दश्वानमुक्तमभितो बडवाग्निनारात् ॥६२॥

2437 सिन्धूर्विपाण्डुररुचिस्फुटफेनहास-
दूरावगाढरसनिर्भरमापतन्तीः ।
पश्यन्तमादरवशादिव निर्विशेष-
मावर्तचक्रनयनैर्मधुरं वलद्भिः ॥६३॥

2438 विच्छादकांशुमणिविच्छुरिताच्छवीचि-
विच्छेदशीकरसमीरतरङ्ग्यमाणाः ।
वल्लीर्द्रुमाभिमुखमुन्मदना इवात्त-
कम्पाः करालिततटोपवना वहन्तम् ॥६४॥

2439　उद्भिन्नरत्नकिरणारुणधातुवर्ति-
प्रेङ्खत्फणाङ्गुलि भुजङ्गमभोगहस्तम् ।
[1]रोषादिवानधिगतप्रसरं वलन्तीः
सोत्कण्ठमूर्मिफलकेषु नदीर्लिखन्तम् ॥६५॥

2440　उल्लासिभिर्दिशि दिशि स्फुरदुन्मरीचि-
माणिक्यरश्मिशबलोर्मिघटासहस्रैः ।
विस्तारिभिर्भुवनमण्डलमण्डपस्य
वैदूर्यकुड्यरचनामिव सन्दधानम् ॥६६॥

2441　फुल्लज्जपाकुसुमपाटलरागरम्यैः
कल्माषिताखिलदिशं मणिभिः स्फुरद्भिः ।
वेलानिलाहतिविलोलशिखाशतस्य
स्थूलैः स्फुलिङ्गनिकरैरिव बाडवाग्नेः ॥६७॥

2442　आवर्तचक्रमुदरास्पदरन्ध्रनाभि-
पर्यन्तघूर्णितमणिप्रकरांशुशारम् ।
बिभ्राणमच्युतमिवाश्रितशङ्खशोभ-
मम्भोदमेचकरुचोन्नतवीचिदोष्णा ॥६८॥

2443　वेलानिलोद्धतशिखस्य विटङ्कहेति-
वर्तिच्छटाभिरनलस्य निपेतुषीभिः ।
आबिभ्रतं पिशुनिता इव कुक्षिभाग-
बद्धप्रतिष्ठगिरिसानुनिधानभूमीः ॥६९॥　एकत्रिंशद्भिः कुलकम्

2444　यस्याधिकं दधति निर्मलनीरमध्य-
बिम्बागता जलभृतोऽभ्रकपङ्कनीलाः ।
कुक्षिप्रविष्टकमठश्वसितव्युदस्त-
पातालरन्ध्रगतकर्दमराशिलीलाम् ॥७०॥

---

१. B, C तोषादिवानधिगतम् ।

2445 वेलाविलासविशरारुतरङ्गराशि-
पारिप्लवीकृततिमिव्रजपृष्ठपक्षाः ॥
यस्मिञ्जनेन निरचायिषतोदराद्रि-
कूटभ्रमं विदधतो भ्रमता तटोर्व्याम् ॥७१॥

2346 वेलापुरन्ध्रिरभियोगपटुप्रपञ्च-
मुक्तेव चञ्चलतरैः श्रियमूर्मिहस्तैः ।
[1]यस्य प्रवालमणिशोभिभिरेति दन्त-
च्छेदप्रकारसदृशैः स्फुटविन्दुमालैः ॥७२॥

2347 देवासुरभ्रमितमन्दरशैलमूल-
लीलावलोडनविलोलजलोत्थितस्य ।
मार्गं रसेन तुरगाधिपतेरिवारा-
दाभाति यत्र बडवामुखमीक्षमाणम्[2] ॥७३॥

2348 श्लाघ्यो गवामधिपतिस्तिमिरक्षयार्घ्य-
रूपस्थितिर्जलदमार्गतलावलम्बी ।
सच्चन्द्रिकं शिशिररश्मिरिवात्मबिम्ब-
मम्भो बिभर्ति हरिणाध्युषितं य एकः ॥७४॥

2349 यो ग्रावलग्नवहलोर्मिकया चिराय
कुर्वाणया रुचिरसैकतया व्यवस्थाम् ।
लक्ष्मीं सभोगिवलयो जलसम्पदैति
शैलाधिराजसुतयेव शशाङ्कमौलिः ॥७५॥

2350 छायागतर्क्षपतिबिम्बविधानपिण्ड-
लीलाप्रसारितविसारि-तरङ्गहस्तः ।
धत्ते स्म यः स्फुरितविद्रुमताम्रराग-
तालूरसत्स्थितिरिभाधिपतेरभिख्याम् ॥७६॥

---

१. A, C reads यस्य प्रवालमणिशोभिरतेददन्तच्छेद्यप्रकार '' ।
२. A, C ''मीक्षमाणाः ।

2351　प्रत्यग्रविद्रुमवितानमरीचिगाढ-
　　रागोर्मिलाञ्छिततया रजनीष्वभीक्ष्णम् ।
यस्योन्नतानुगतलक्ष्मणचित्तवृत्ति-
　　राभाति चन्द्रकिरणोल्लसितस्य वेला ॥७७॥

2352　भिन्दंस्तमो भुवनवासगृहे कृतैक-
　　देशस्थितिर्थमधितिष्ठति निष्ठुरार्चिः ।
विस्तारिपात्रमिव निर्मलतोयतैल-
　　पूर्णोदरं विदधदौर्वशिखिप्रदीपः ॥७८॥

2353　लक्ष्म्या कुलीरचितया श्रित एक एव
　　प्राप्नोति यः स्म महिमानमलङ्घ्यधामा ।
योधैरिव क्षितिपतिः स्थितिमेत्यमन्द-
　　पातालवासिभिरनेकविधैश्च सत्त्वैः ॥७९॥

2454　धत्ते जलाशयपतिः स्थितिमम्भसां स्म
　　साराधिकस्तिमितताम रसां य एकः ।
यस्याश्रितेन पुलिनाश्रितया श्रिया च
　　वीचिव्रजेन हरिणा च चिरं ववल्गे ॥८०॥

एकादशभिः कुलकम्

2455　उल्लङ्घ्य वर्षगिरिवीचिमतीशतानि
　　नानाविधान्यथ तदीक्षणबद्धतोषः ।
दूरादिलावृतमसाववविपन्नमेरु-
　　च्छायं विडम्बितहिमाद्रिमसावपश्यत् ॥८१॥

2456　धत्ते समुद्रपरिखावलयावलीढ-
　　पर्यन्तवर्त्मपरिमण्डलभूप्रतिष्ठः ।
यः कूर्मपृष्ठपृथुकर्परसन्निविष्ट-
　　रुक्मांशुविच्छुरितमन्दरशैलशोभाम् ॥८२॥

2457 विस्तारशालिकुरुविन्दशिलानितम्ब-
भागोत्थितं वहति यः करचक्रवालम् ।
स्कन्धावघर्षणविलग्नमहावराह-
विश्लिष्टकेसरसटानिकुरम्बशोभम्[1] ॥८३॥

2458 येन प्रसाधितमिलावृतमाचकास्ति
रत्नप्रभाशबलकाञ्चनसानुनोच्चैः ।
पद्मासनेन च विनिद्रपलाशचक्र-
मुत्पत्तिपङ्कजमनुज्झितकर्णिकाङ्कम् ॥८४॥

2459 यस्मिन् विभाति शिशिरांशुकलामृणाल-
वल्लीसनाथपृथुपुष्करभूमिरर्वाक् ।
स्तम्भे हिरण्मय इव क्षणदान्धकार-
च्छायाकरेणुरलि-नीलरुचिर्निबद्धा ॥८५॥

2460 विस्तारितार्कमणिपल्लवनिर्यदग्नि-
धौताग्निशौचशुचिकल्पलतादुकूलैः ।
विष्यन्दिसान्द्रजलबिन्दुकणेन्दुकान्त-
वल्लीविमर्दकृतदुर्दिनमूलभागैः ॥८६॥

2461 बद्धास्पदक्षणविनह्नुतवह्नितीव्र-
तापानुमेयदिवसाधिपमण्डलाभिः ।
शाखास्पदाभिररुणाश्मवितर्दिकाभिः
सन्दर्शितक्षयनिशामुखसान्ध्यरागैः ॥८७॥

2462 वज्राङ्कुराहितशतक्रतुचापचक्र-
मुक्ताफलस्तवकमञ्जुरमञ्जरीकैः ।
रत्नांशुपिञ्जरितखञ्जनखञ्जरीट-
मञ्जीरमञ्जुतरशिञ्जलतानिकुञ्जैः ॥८८॥

---

१. B ऊर्ध्वमुखानि स्कन्धलोमानि केसराः, अधोमुखानि सटाः ।

2463　स्थूलेन्द्रनील[1]शकलग्रथितालवाल-
　　मध्यप्रभाजनितसेकजलौघशङ्कैः ।
अभ्रङ्कषाग्रविटपास्पदशातकौम्भ-
　　कुम्भीफलानुमितशेवधिसन्निवेशैः ॥८९॥

2464　तस्यानुवेलमलिवल्लभ-वेल्लिताग्र-
　　वल्लीविलोल-मणिपल्लव-वल्लरीकैः ।
ऐक्षिष्ट कल्पतरुभिः कलिलामनल्प-
　　सङ्कल्पसाधनफलैर्मणिमेखलां सः ॥९०॥　　नवभिः कुलकम्

2465　गच्छन् क्रमादथ विलम्बितरत्नदाम-
　　दोलाधिरोह-तरलीकृततारकौघम् ।
अभ्युन्मिषन्मरकतांशुशिखायमान-
　　लग्नार्ककूबरितुरङ्गसटावलीकम् ॥९१॥

2466　स्तम्भ-स्खलज्झण-झणारणिताभिराम-
　　घोषानुबन्धि सुरसिद्धविमानघण्टम् ।
आश्लिष्ट-तारकमृगोल्लिखितान्तरिक्ष-
　　सन्देहितेन्दुशकल-स्फुरदर्धचन्द्रम् ॥९२॥

2467　निधूत-चामरशिखाशत-वीजितार्क-
　　मुच्छ्रायिनाकमणिगोपुरतोरणं सः ।
आनन्दितालि-विगलन्मकरन्दबिन्दु-
　　मन्दारदामकृत-वन्दनमालमापत् ॥९३॥　　तिलकम्

---

१. C शकलैरथ for शकलग्रथित ।

2468 तस्य श्यामायमानस्थगितदिनकराकाशसंकाशकाय-
च्छायापीतातपाशातटनिमितदृशो रत्नसानुस्थलीषु ।
प्रत्यासन्नत्रियामामुखसरलधियः सत्वरत्वं विभूषा-
विन्यासं प्रत्यवापुः स्मररभसरसप्लाव्यमानास्तरुण्यः ॥६४॥

इति श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो
महाकवेराजानकश्रीरत्नाकरस्य कृतौ रत्नाङ्के हरविजये
महाकाव्ये मार्गविभागवर्णनम् नाम त्रिंशः सर्गः ।



## शुद्धिपत्रम्

| श्लोक सं० | अशुद्ध | शुद्ध |
|---|---|---|
| 96 | अध्यामयानमिव | अध्यास्यमानमिव |
| 615 | आविर्भवद्विकटि | आविर्भवद्भ्रुकुटि |
| 633 | किरणाङ्कर | किरणाङ्कुर |
| 776 | विद्रम | विद्रुम |
| 777 | स्थानन्तरेष्वौर्व | स्थानान्तरेणौर्वं |
| 265 | प्रीतिवास | पीतवास |
| 810 | खङ्ग | खड्ग |
| 840 | गृहीतचिन्त | गृहीतचित्त |
| 883 | यशः स्तबक | यशःस्तबक |
| 939 | क्ष्माकलशी | क्ष्माकलुषी |
| 947 | विवेष्टमानो | विवेपमानो |
| 961 | विचित्ररुपा | विचित्ररूपा |
| 989 | परान्माष्ट्र्र्ं | परान्माष्ट्र्ं |
| 1019 | विटफङ्कर | विटपाङ्कुर |
| 1051 | नयशास्रसंग्रहम् | नयशास्त्रसङ्ग्रहम् |
| 1152 | सुरसुर | सुरपुर |
| 1192 | अपजह्ल्विरे | अपजह्नुविरे |
| 1202 | मेघमण्डलेपु | मेघमण्डलेषु |
| 1277 | शोधोन्नतांस | सौधोन्नतांस |
| 1286 | आस्फालयेष्वसनि | आस्फालयेष्वसन |

| श्लोक सं० | अशुद्ध | शुद्ध |
|---|---|---|
| 1318 | चक्राङ्कस्फुरदबिन्द | चक्राङ्कस्फुरदरविन्द |
| 1329 | ग्रन्धिर्वस्थति | गान्धर्वस्थिति |
| 1331 | शशंश | शशंस |
| 1498 | काणरम्य | काणरम्यम् |
| 1470 | बिम्बोकिन्याः | बिब्बोकिन्याः |
| 1493 | स्नाग्रम् | स्तनाग्रम् |
| 1535 | संध्याशु | संध्यांशु |



